## भवताम् अध्ययनस्य अनुकूलतायै संस्कृतभारत्या सज्जीकृताः सन्ति अन्येऽपि बहवः ग्रन्थाः । यथा -

भाषाभ्यासाय -

▸ अभ्यासपुस्तकम् ▸ विभक्तिवल्लरी ▸ शतृशानजन्तमञ्जरी ▸ अभ्यादर्शिनी
▸ सम्भाषणसोपानम् ▸ कालबोधिनी ▸ णत्वणिजन्तम् ▸ सन्देशसंस्कृतम्
▸ सम्भाषणसंस्कृतम् (ध्वनिमुद्रिकासहितम्) ▸ प्रयोगाः (ध्वनिमुद्रिकासहितम्)

भाषाज्ञानवर्धनाय व्याकरणपरिज्ञानाय च -

▸ समासः ▸ सन्धिः ▸ कारकम् ▸ शुद्धिकौमुदी ▸ भाषापाकः ▸ इड्व्यवस्था ▸ धातु-रूपनन्दिनी ▸ प्रक्रियानुसारी पाणिनीयधातुपाठः ▸ अष्टाध्यायीसूत्रपाठः ▸ इडागमः ▸ तिङ्कृत्कोषः - १ (सार्वधातुकखण्डः ▸ तिङ्कृत्कोषः - २ (आर्धधातुकखण्डः) ▸ पाणिनीयमूलधातुपाठः ▸ पाणिनीयधातुपाठः (सार्थः) ▸ सनाद्यन्तधातुपाठः ▸ लकारसरणिः - प्रथमो भागः (लट्, लोट्, लङ्, विधिलिङ्, इत्येते, सार्वधातुकलकाराः) ▸ लकारसरणिः - द्वितीयो भागः (लृट्, लृङ्, लुट्, आशीर्लिङ्, इत्येते चत्वारो लकाराः) लकारसरणि - तृतीयो भागः (लिट् लकारः) ▸ लकारसरणिः - चतुर्थो भागः (लुङ् लकारः) ▸ यङन्तकोषः नामधातुकोषश्च ▸ यङ्लुगन्तकोषः ▸ णिजन्तकोषः ▸ सन्नन्तकोषः ▸ सस्वरः पाणिनीयधातुपाठः (सार्वधातुकप्रत्ययोपयोगी) ▸ सस्वरः पाणिनीयधातुपाठः (आर्धधातुकप्रत्ययोपयोगी)

---

पुस्तकानि ध्वनिमुद्रिकाश्च प्राप्तुं भवतां केन्द्रसंयोजकस्य सम्पर्कं कुर्वन्तु ।

प्रकाशनम्
संस्कृतभारती
मातामन्दिरगली झण्डेवाला
नवदेहली - 110055



मुखपुटविन्यासः - सुधाकर दर्वे
आन्तरसज्जता - शान्तला
साहाय्यम् - हरिणाक्षी

प्रथममुद्रणम् - २००६ - ५०००
द्वितीयमुद्रणम् - २०१२ - ३०००

मूल्यम् - रू. ३००/- (खण्डद्वयस्य कृते)

मुद्रणम् - Printech International, Jhilmil Industrial Area, Delhi-110095

ISBN - 978-81-87276-39-8

GEETAAPRAVESHAH (DVITEEYABHAAGAH) Part - 1
A text book to learn Samskrit through Bhagavadgeetaa written by various authors.
Publisher - Samskrita Bharati, Mata Mandir Gali, Jhandewala, New Delhi-110055.-(011)23517689.
Website - www.samskritabharati.in
Pages - IV +.....234 Second Print - 2012
Printed at - Printech International, B-36, DSIDC Complex, Jhilmil Industrial Area, Delhi-110095 Ph: 22596269,9868525848

# गीताप्रवेशः

## द्वितीयभागः

### प्रथमखण्डः

(१-४ अध्यायाः)

**मार्गदर्शकसमितिः**

चमू कृष्णशास्त्री

जनार्दन हेगडे

**सम्पादकसमितिः**

डा. विश्वासः

डा. चान्दकिरण सलूजा

डा. विठ्ठल भावे

चारुहासिनी भावे

रा. गायत्री मुरलीकृष्णः

सो. ल. सीतारामशर्मा

**परिशोधकः**

डा. एन्. लक्ष्मीनारायणभट्टः

---

संस्कृतभारती

नवदेहली

## *प्रास्ताविकं किञ्चित्...*

अयि भोः संस्कृतप्रणयिनः !

श्रीमद्भगवद्गीतायाः माध्यमेन संस्कृतभाषायाः परिचयं कारयितुं संस्कृतभारत्या परिकल्पितस्य गीताप्रवेशस्य अयं द्वितीयः भागः, यत्र प्रथमः द्वितीयश्चेति द्वौ खण्डौ वर्तेते ।

एतावता एव प्रकाशिते गीताप्रावेशस्य प्रथमभागे भगवद्गीतायां ये ये व्याकरणविशेषाः प्रयुक्ताः सन्ति तेषां परिचयः, तद्विषयकं विवरणम्, गीतायां तेषां प्रयोगप्रकारः इत्येतत्सर्वं दर्शितम् । प्रायः गीतायां प्रयुक्तानि उदाहरणानि एव स्वीकृत्य तत्र सर्वोऽपि विषयः विवृतः । अत्र तु सम्पूर्णा गीता एव प्रदत्ता अस्ति ।

गीतायाः प्रत्येकं श्लोकः अपि विस्तृतं व्याख्यानम् अपेक्षते इति मन्यन्ते विद्वांसः । बहुभिः विद्वद्भिः मताचार्यैश्च तादृशानि व्याख्यानानि विरचितानि सन्ति । परन्तु अत्र प्रत्येकं श्लोकस्य तात्पर्यमात्रं प्रदत्तम् अस्ति । सम्प्रदायभेदेन गीताश्लोकानाम्, श्लोकस्थानां च पदानाम् अर्थः भिद्यते इति वयम् अवश्यं जानीमः । तथापि अस्मिन् पुस्तके विस्तरभयात् तद्विषये अधिकं चिन्तनं कृतं न वर्तते । प्रायः गोरखपुरस्थेन गीतामुद्रणालयेन प्रकाशितेषु पुस्तकेषु स्थितं तात्पर्यम् अनुसृत्य अत्र तात्पर्यं लिखितम् अस्ति । समग्रस्य श्लोकस्य, केषाञ्चित् पदानां वा तत्तत्सम्प्रदायानुसारेण यत्र अधिकः अर्थभेदः अस्ति तादृशेषु स्थानेषु केवलं माध्वमतं रामानुजीयमतं चापि पृथक् दर्शितम् अस्ति ।

गीताप्रवेशस्य सज्जीकरणे विदुषां केनचन गणेन महान् प्रयासः कृतः अस्ति । बहूनां ग्रन्थानां परिशीलनेन अध्ययनेन पुनरवलोकनेन च अस्य सम्पादनं कृतम् अस्ति । यदि जिज्ञासवः अनेन प्रयोजनं प्राप्नुवन्ति तर्हि सम्पादकसमितेः परिश्रमः सार्थकताम् एति । अस्माकं प्रार्थनाम् अङ्गीकृत्य मेलुकोटेनगरस्थे शासकीय-संस्कृतमहाविद्यालये भूतपूर्वप्राचार्येण विदुषा अरैयर् श्रीरामशर्मणा गीतायाः प्रमुखानां कतिपयानां श्लोकानां रामानुजीयमतानुसारी अर्थः उडुपिनगरस्थे श्रीमन्मध्वसिद्धान्तप्रबोधिसंस्कृतमहाविद्यालये न्यायशास्त्रसहायप्राध्यापकेन विदुषा सत्यनारायणवेङ्कटरावेण माध्वमतानुसारी अर्थश्च अत्यल्पेनैव कालेन विलिख्य प्रदत्तः अस्ति । तदेतौ विद्वांसौ अवसरेऽस्मिन् विशेषतया स्मर्येते । त्रुटिसंशोधनम्, मुद्रणम् इत्यादिषु साहाय्यम् आचरितवन्तौ विद्वान् रामकृष्णपेजत्तायः डा. गणेशपण्डितश्चापि धन्यवादम् अर्हतः ।

गीताप्रवेशम् एनं सुन्दरं विधातुम्, अत्र समग्रताम् आनेतुं भाषाशुद्धिं च रक्षितुं भूयान् प्रयत्नः कृतः अस्ति इति न पुनर्वक्तव्यम् । तथापि अज्ञानात् अनवधानात् वा यत्र क्वापि विषयगताः मुद्रणगताः वा दोषाः भवितुमर्हन्ति । सहृदयाः विद्वांसः यदि तान् अस्मान् ज्ञापयेयुः तर्हि अग्रे तान् निवारयितुं वयम् अवश्यं प्रयत्नं कुर्याम ।

भवतां संस्कृताध्ययनं सफलं भवतु । गीताचार्यः सर्वान् अनुगृह्णातु इति आशास्य विरम्यते ।

**सम्पादकः**

## अत्र अयं क्रमः अनुसृतः अस्ति -

➪ भगवद्गीतायाः 700 श्लोकाः अपि अत्र संगृहीताः सन्ति।

➪ प्रथमाध्याये द्वितीयाध्याये च प्रत्येकं श्लोकेऽपि पदच्छेदः, पदपरिचयः, पदार्थः, अन्वयः, आकाङ्क्षा, तात्पर्यम्, व्याकरणं च इत्येते अंशाः दर्शिताः सन्ति। व्याकरणे पुनः सन्धिः, समासः, कृदन्तः, तद्धितान्तश्च इति चत्वारः उपविभागाः कृताः। तत्तत्सम्बन्धिविवरणं तस्मिन् तस्मिन् उपविभागे दर्शितम् अस्ति, यथा -

पदच्छेदः - सर्वेषामपि पदानां सन्धिविच्छेदः अत्र दर्शितः भवति। (समस्तपदस्य मध्ये वर्तमानानां तु शब्दानां सन्धिविच्छेदः न दर्शितः, यथा - दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा। अत्र पाण्डवानीकशब्दे पाण्डव-अनीकम् इत्येवं पदच्छेदः न दर्शितः।)

पदपरिचयः - श्लोके प्रयुक्तस्य प्रत्येकमपि पदस्य सुबन्तत्वेन तिङन्तत्वेन वा परिचयः अत्र दत्तः भवति। सुबन्तं चेत् अन्तलिङ्गवचनादिकं दर्शितं तिङन्तं चेत् लकारपुरुषवचनादिकं दर्शितम् अस्ति। (अधिकविवरणाय सङ्केताक्षरसूची दृश्यताम्।)

पदार्थः - प्रतिपदम् अर्थः अत्र पदान्तरेण निर्दिष्टः अस्ति। (कुत्रचित् सर्वनामादीनाम् अर्थः पदान्तरेण नैव निर्दिष्टः, आवश्यकता नास्ति इति हेतोः।

अन्वयः - श्लोकस्थानि पदानि अत्र अन्वयक्रमेण दर्शितानि सन्ति।

आकाङ्क्षा - पदेषु अन्वयः बोधनावसरे सर्वत्र प्रश्नप्रतिवचनक्रमेणैव भवति तथापि सः अर्थप्रधानः शब्दप्रधानश्चेति द्विविधः सम्भवति। तयोः आद्यः प्रायेण पण्डितलोके प्रसिद्धः, क्लेशेन अवगम्यश्च। अत्र तु सारल्य-दृष्ट्या द्वितीयः एव क्रमः आदृतः वर्तते इति विशेषः। मध्ये मध्ये क्वचित् प्रथमोऽपि क्रमः अनुसृतः वर्तते यञ्च सहृदयाः पठनावसरे स्वयमेव विज्ञातुं शक्नुवन्ति। क्रमेऽस्मिन् पुनःपुनः प्रश्नः तदनुगुणं च उत्तरम् इत्येतत् आदिमेषु चतुर्षु अध्यायेषु दर्शितं येन पठितारः उत्तरत्र सर्वेष्वपि श्लोकेषु स्वयमेव एनं क्रमम् अवगन्तुं शक्ष्यन्ति। यत्र तु समग्रः श्लोकः एकवाक्यत्वेन वक्तुं शक्यः तत्र प्रायः तस्यैव क्रमस्य (दण्डान्वयक्रमस्य) अनुसरणे यत्नः कृतः। अन्यत्र तु खण्डान्वयक्रमः आश्रितः अस्ति।

तात्पर्यम् - सम्पूर्णस्य श्लोकस्य तात्पर्यं यदस्ति तद् अत्र एकेन वाक्येन वाक्यद्वयेन वा प्रदत्तम् अस्ति। तात्पर्यविवरणे च तत्त्वप्रकाशिकादिटीकाष्टकोपेता श्रीमद्भगवद्गीता इति ग्रन्थः विशेषतः अस्माभिः अवलोकितः।

व्याकरणम् - अत्र सन्धिः इत्यत्र सन्धिविच्छेदः सन्धिनाम च, समासः इत्यत्र विग्रहवाक्यं समासनाम च, कृदन्तः इत्यत्र धातुः प्रत्ययश्च, तद्धितान्तः इत्यत्र शब्दः प्रत्ययश्च इत्येते अंशाः दर्शिताः सन्ति।

➪ अग्रिमेषु अध्यायेषु एतेषु अंशेषु केचन क्रमशः परित्यक्ताः सन्ति, ग्रन्थविस्तरभयात्। परन्तु कुत्रचित् अन्येऽपि अंशाः योजिताः सन्ति, यथा - पञ्चमे षष्ठे च अध्याये प्रतिश्लोकं केचन प्रश्नाः प्रदत्ताः सन्ति, येषाम् उत्तरस्य कथनेन श्लोकार्थः स्वयमेव अवगतो भवेत्। (उत्तरं च अन्ते मुद्रितम् अस्ति।)

➪ अन्तिमेषु अध्यायेषु केवलं विशेषाः व्याकरणांशाः दर्शिताः सन्ति, न सर्वे।

➪ पुस्तकस्य अन्ते श्लोकपादानाम् अनुक्रमणिका दत्ता अस्ति न तु श्लोकानाम्। अनेन श्लोकस्य पादमात्रं जानन् अपि जनः पूर्णः श्लोकः कुत्र अस्ति इति अन्वेष्टुं शक्नुयात्।

एतान् अंशान् मनसि निधाय अस्य पुस्तकस्य उपयोगः क्रियताम्।

# सङ्केताक्षरसूची

| | | |
|---|---|---|
| अ.= अकारान्तः | आ.= आकारान्तः | इ.= इकारान्तः |
| ई.= ईकारान्तः | उ.= उकारान्तः | ऊ.= ऊकारान्तः |
| औ.= औकारान्तः | ऋ.= ऋकारान्तः | च.= चकारान्तः |
| त.= तकारान्तः | द.= दकारान्तः | ध.= धकारान्तः |
| न.= नकारान्तः | प.= पकारान्तः | म.= मकारान्तः |
| ष.= षकारान्तः | स.= सकारान्तः | सर्व.= सर्वनाम |
| पुं.= पुंलिङ्गः | स्त्री.= स्त्रीलिङ्गः | नपुं.= नपुंसकलिङ्गः |
| प्र.= प्रथमाविभक्तिः | द्वि.= द्वितीयाविभक्तिः | तृ.= तृतीयाविभक्तिः |
| च.= चतुर्थीविभक्तिः | पं.= पञ्चमीविभक्तिः | ष.= षष्ठीविभक्तिः |
| स.= सप्तमीविभक्तिः | सम्बो.= सम्बोधनप्रथमाविभक्तिः | |
| एक.= एकवचनम् | द्विव.= द्विवचनम् | बहु.= बहुवचनम् |
| आत्म.= आत्मनेपदी | पर.= परस्मैपदी | |
| प्रपु.= प्रथमपुरुषः | मपु.= मध्यमपुरुषः | उपु.= उत्तमपुरुषः |
| लट्.= लट्लकारः | लिट्.= लिट्लकार. | लुट्.= लुट्लकारः |
| लृट्.= लृट्लकारः | लङ्.= लङ्लकारः | लृङ्.= लृङ्लकारः |
| वि.लिङ्.= विधिलिङ्लकारः | लुङ्.= लङ्लकारः | |
| क्रियावि. = क्रियाविशेषणम् | | |

श्रीमद्भगवद्गीता

अथ प्रथमोऽध्यायः

# अर्जुनविषादयोगः

**धृतराष्ट्र उवाच – धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥1.1॥**

**पदच्छेदः –**

धृतराष्ट्रः उवाच – धर्मक्षेत्रे, कुरुक्षेत्रे, समवेताः, युयुत्सवः ।
मामकाः, पाण्डवाः, च, एव, किम्, अकुर्वत, सञ्जय ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| धर्मक्षेत्रे | – | अ. नपुं. स. एक. | कुरुक्षेत्रे | – | अ. नपुं. स. एक. |
| समवेताः | – | अ. पुं. प्र. बहु. | युयुत्सवः | – | उ. पुं. प्र. बहु. |
| मामकाः | – | अ. पुं. प्र. बहु. | पाण्डवाः | – | अ. पुं. प्र. बहु. |
| च | – | अव्ययम् | एव | – | अव्ययम् |
| किम् | – | म.सर्व.नपुं.द्वि.एक. | अकुर्वत | – | कृ–आत्म.कर्तरि लङ् प्रपु. बहु. |
| सञ्जय | – | अ. पुं. सम्बो.एक | | | |

**पदार्थः** – सञ्जय = हे सञ्जय ! धर्मक्षेत्रे = धर्मप्रधानक्षेत्रे, कुरुक्षेत्रे = कुरुक्षेत्राख्ये प्रदेशे, समवेताः = संयुक्ताः, युयुत्सवः = योद्धुम् इच्छवः, मामकाः = मदीयाः, पाण्डवाः च = पाण्डुपुत्राः च, किम् अकुर्वत = किं कृतवन्तः ।

**अन्वयः** – संजय ! धर्मक्षेत्रे कुरुक्षेत्रे समेवेताः युयुत्सवः मामकाः पाण्डवाः च किम् अकुर्वत ?

**आकाङ्क्षा –**

**अकुर्वत ।**

**के** अकुर्वत ? – **मामकाः** अकुर्वत ।

मामकाः **पुनश्च के** अकुर्वत ? – मामकाः **पाण्डवाः च** अकुर्वत ।

**कथंभूताः** मामकाः पाण्डवाः च अकुर्वत ? – **समवेताः** मामकाः पाण्डवाः च अकुर्वत ।

समवेताः **पुनश्च कीदृशाः** मामकाः पाण्डवाः च अकुर्वत ?

– समवेताः **युयुत्सवः** मामकाः पाण्डवाः च अकुर्वत ।

**कुत्र** समवेताः युयुत्सवः मामकाः पाण्डवाः च अकुर्वत ?

– **कुरुक्षेत्रे** समवेताः युयुत्सवः मामकाः पाण्डवाः च अकुर्वत ।

**कीदृशे** कुरुक्षेत्रे समवेताः युयुत्सवः मामकाः पाण्डवाः च अकुर्वत ?

– **धर्मक्षेत्रे** कुरुक्षेत्रे समवेताः युयुत्सवः मामकाः पाण्डवाः च अकुर्वत ।

धर्मक्षेत्रे कुरुक्षेत्रे समेवताः युयुत्सवः मामकाः पाण्डवाः च **किम्** अकुर्वत ?

**अस्मिन् श्लोके सम्बोधनपदं किम् ? – सञ्जय ।**

**तात्पर्यम् –** 'हे सञ्जय ! मत्पुत्राः पाण्डुपुत्राश्च युद्धं कर्तुम् उत्सुकाः सन्तः धर्मक्षेत्रे कुरुक्षेत्रे सम्मिल्य किम् अकुर्वन् ?' इति धृतराष्ट्रः संजयम् अपृच्छत् ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | समवेता युयुत्सवः | – समवेताः + युयुत्सवः | विसर्गसन्धिः (लोपः) |
| | पाण्डवाश्चैव | – पाण्डवाः + च | विसर्गसन्धिः (सकारः) श्चुत्वसन्धिः |
| | | पाण्डवाश्च + एव | वृद्धिसन्धिः |
| **(ख) समासः** | धर्मक्षेत्रे | – धर्मस्य क्षेत्रम् धर्मक्षेत्रम्, तस्मिन् – षष्ठीतत्पुरुषः । | |
| | कुरुक्षेत्रे | – कुरूणां क्षेत्रम् कुरुक्षेत्रम्, तस्मिन् – षष्ठीतत्पुरुषः । | |
| **(ग) कृदन्तः** | समवेताः | – सम् + अव् + इण् + क्त (कर्तरि) | |
| | युयुत्सवः | – युध् + सन् (इच्छार्थे) + उ (कर्तरि) | |
| **(घ) तद्धितान्तः** | मामकाः | – अस्मद् (ममकादेशः) + अण् । मम इमे इति मामकाः । | |
| | पाण्डवाः | – पाण्डु + अण् (अपत्यार्थे) । पाण्डोः अपत्यानि पुमांसः इति पाण्डवाः । | |

**सञ्जय उवाच – दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥1.2॥**

**पदच्छेदः –**

सञ्जयः उवाच – दृष्ट्वा, तु, पाण्डवानीकम्, व्यूढम्, दुर्योधनः, तदा ।
आचार्यम्, उपसङ्गम्य, राजा, वचनम्, अब्रवीत् ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| दृष्ट्वा | – | अव्ययम् | तु | – | अव्ययम् |
| पाण्डवानीकम् | – | अ. नपुं.द्वि. एक. | व्यूढम् | – | अ.नपुं.द्वि. एक. |
| दुर्योधनः | – | अ. पुं.प्र. एक. | तदा | – | अव्ययम् |
| आचार्यम् | – | अ. पुं. द्वि. एक. | उपसङ्गम्य | – | अव्ययम् |
| राजा | – | राजन्–न.पुं.प्र.एक. | वचनम् | – | अ.नपुं.द्वि. एक. |
| अब्रवीत् | – | ब्रूञ्–पर.कर्तरि लङ् प्रपु.एक. | | | |

**पदार्थः –** तदा तु = तदानीं तु, व्यूढम् = व्यूहत्वेन स्थापितम्, पाण्डवानीकम् = पाण्डवसैन्यम्, दृष्ट्वा = अवलोक्य, राजा = नृपः, दुर्योधनः = दुर्योधनः, आचार्यम् = गुरुं द्रोणम्, उपसङ्गम्य = उपसृत्य, वचनम् = वाक्यम्, अब्रवीत् = अवदत् ।

**अन्वयः –** तदा तु व्यूढं पाण्डवानीकं दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत् ।

**आकाङ्क्षा –**

**अब्रवीत्।**

| | |
|---|---|
| **कः** अब्रवीत्? | – **दुर्योधनः** अब्रवीत्। |
| **कीदृशः** दुर्योधनः अब्रवीत्? | – **राजा** दुर्योधनः अब्रवीत्। |
| राजा दुर्योधनः **किम्** अब्रवीत्? | – राजा दुर्योधनः **वचनम्** अब्रवीत्। |
| राजा दुर्योधनः **किं कृत्वा** वचनम् अब्रवीत्? | – राजा दुर्योधनः **उपसङ्गम्य** वचनम् अब्रवीत्। |

राजा दुर्योधनः **कम्** उपसङ्गम्य वचनम् अब्रवीत्?

– राजा दुर्योधनः **आचार्यम्** उपसङ्गम्य वचनम् अब्रवीत्।

**पुनश्च किं कृत्वा** राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्?

– **दृष्ट्वा** राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्।

**किं** दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्?

– **पाण्डवानीकं** दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्।

**कीदृशं** पाण्डवानीकं दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्?

– **व्यूढं** पाण्डवानीकं दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्।

**कदा** व्यूढं पाण्डवानीकं दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्?

– **तदा तु** व्यूढं पाण्डवानीकं दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य वचनम् अब्रवीत्।

**तात्पर्यम्** – तदा व्यूहरूपेण स्थापितं पाण्डवानां सैन्यं दृष्ट्वा दुर्योधनः गुरोः द्रोणाचार्यस्य समीपं गत्वा इदं वचनम् अवदत्।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पाण्डवानीकं व्यूढम् | – पाण्डवानीकम् + व्यूढम् | अनुस्वारसन्धिः |
| | व्यूढं दुर्योधनस्तदा | – व्यूढम् + दुर्योधनस्तदा | अनुस्वारसन्धिः |
| | | दुर्योधनः + तदा | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | पाण्डवानीकम् | – पाण्डवानाम् अनीकम्, तत् – षष्ठीतत्पुरुषः। | |
| **(ग) कृदन्तः** | दृष्ट्वा | – दृशिर् + क्त्वा | |
| | व्यूढम् | – वि + वह् + क्त (कर्मणि) आकारविशेषवत्त्वेन विभक्तम् इत्यर्थः। | |
| | उपसङ्गम्य | – उप + सम् + गम्लृ + ल्यप् | |
| | आचार्यः | – आ + चर् + ण्यत्। आचरणीयः (सेवनीयः) आचार्यः। | |
| | वचनम् | – वच् + ल्युट् (करणे) उच्यते अनेन इति वचनम्। | |

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥1.3॥**

**पदच्छेदः –** पश्य, एताम्, पाण्डुपुत्राणाम्, आचार्य, महतीम्, चमूम्।
व्यूढाम्, द्रुपदपुत्रेण, तव, शिष्येण, धीमता ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| पश्य | – | दृशिर्–पर.कर्तरि लोट् मपु.एक. | एताम् | – | एतद् –द. सर्व. स्त्री. द्वि. एक. |
| पाण्डुपुत्राणाम् | – | अ. पुं. ष. बहु. | आचार्य | – | अ. पुं. सम्बो. एक. |
| महतीम् | – | ई. स्त्री. द्वि. एक. | चमूम् | – | ऊ. स्त्री. द्वि. एक. |
| व्यूढाम् | – | आ. स्त्री. द्वि. एक. | द्रुपदपुत्रेण | – | अ. पुं. तृ. एक. |
| तव | – | युष्मद्–द. सर्व. ष. एक. | शिष्येण | – | अ. पुं. तृ. एक. |
| धीमता | – | धीमत्–त. पुं. तृ.एक. | | | |

**पदार्थः** – आचार्य = भो द्रोणाचार्य ! तव = भवतः, धीमता = बुद्धिमता, शिष्येण = छात्रेण, द्रुपदपुत्रेण= धृष्टद्युम्नेन, व्यूढाम् = व्यूहरूपेण स्थापिताम्, पाण्डुपुत्राणाम् = पाण्डवानाम्, एताम् = एनाम्, महतीम् = बृहतीम्, चमूम् = सेनाम्, पश्य = वीक्षस्व।

**अन्वयः** – आचार्य ! तव धीमता शिष्येण द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य।

**आकाङ्क्षा –**

**पश्य**।

**कां** पश्य ? – **चमूं** पश्य।

**कां** चमूं पश्य ? – **एतां** चमूं पश्य।

**कीदृशीम्** एतां चमूं पश्य ? – **महतीम्** एतां चमूं पश्य।

**केषां** महतीम् एतां चमूं पश्य ? – **पाण्डुपुत्राणां** महतीम् एतां चमूं पश्य।

**कीदृशीं** पाण्डुपुत्राणां महतीम् एतां चमूं पश्य ? – **व्यूढां** पाण्डुपुत्राणां महतीम् एतां चमूं पश्य।

**केन** व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य ?
– **द्रुपदपुत्रेण** व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य।

**कीदृशेन** द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य ?
– **शिष्येण** द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य।

**पुनश्च कीदृशेन** शिष्येण द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य ?
– **धीमता** शिष्येण द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य।

**कस्य** धीमता शिष्येण द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य ?
– **तव** धीमता शिष्येण द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणां महतीम् एतां चमूं पश्य।

**अस्मिन् श्लोके सम्बोधनपदं किम् ? – आचार्य** !

**तात्पर्यम् –** भोः आचार्य ! चतुरेण तव शिष्येण धृष्टद्युम्नेन पाण्डवानां महत् सैन्यमिदम् व्यूहरूपेण स्थापितम् अस्ति। इदं पश्य।

**व्याकरणम् –**

| **(क) सन्धिः** | पश्यैताम् | – | पश्य + एताम् | वृद्धिसन्धिः |
|---|---|---|---|---|
| | महतीं चमूम् | – | महतीम् + चमूम् | अनुस्वारसन्धिः |

| | | | |
|---|---|---|---|
| | व्यूढां द्रुपदपुत्रेण | - | व्यूढाम् + द्रुपदपुत्रेण अनुस्वारसन्धिः |
| **(ख) समासः** | पाण्डुपुत्राणाम् | - | पाण्डोः पुत्राः, तेषाम् - षष्ठीतत्पुरुषः । |
| | द्रुपदपुत्रेण | - | द्रुपदस्य पुत्रः, तेन - षष्ठीतत्पुरुषः । |
| **(ग) कृदन्तः** | व्यूढाम् | - | वि + वह् + क्त (कर्मणि) |
| | आचार्यः | - | दृश्यताम् - 1.2 |
| **(घ) तद्धितान्तः** | धीमता | - | धी + मतुप्, तेन । धीः अस्य अस्मिन् वा अस्ति इति धीमान् । |

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥1.4॥**
**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥1.5॥**
**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥1.6॥**

**पदच्छेदः -**

अत्र, शूराः, महेष्वासाः, भीमार्जुनसमाः, युधि ।
युयुधानः, विराटः, च, द्रुपदः, च, महारथः ॥
धृष्टकेतुः, चेकितानः, काशिराजः, च, वीर्यवान् ।
पुरुजित्, कुन्तिभोजः, च, शैब्यः, च, नरपुङ्गवः ॥
युधामन्युः, च, विक्रान्तः, उत्तमौजाः, च, वीर्यवान् ।
सौभद्रः, द्रौपदेयाः, च, सर्वे, एव, महारथाः ॥

**पदपरिचयः -**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| अत्र | - | अव्ययम् | शूराः | - | अ. पुं. प्र. बहु. |
| महेष्वासाः | - | अ. पुं. प्र. बहु. | भीमार्जुनसमाः | - | अ. पुं. प्र. बहु. |
| युधि | - | युध् - ध. स्त्री. स. एक. | युयुधानः | - | अ. पुं. प्र. एक. |
| विराटः | - | अ. पुं. प्र. एक. | च | - | अव्ययम् |
| द्रुपदः | - | अ. पुं. प्र. एक. | महारथः | - | अ. पुं. प्र. एक. |
| धृष्टकेतुः | - | उ. पुं. प्र. एक. | चेकितानः | - | अ. पुं. प्र. एक. |
| काशिराजः | - | अ. पुं. प्र. एक. | वीर्यवान् | - | वीर्यवत् - त. पुं.प्र. एक. |
| पुरुजित् | - | पुरुजित् - त. पुं. प्र. एक. | कुन्तिभोजः | - | अ. पुं. प्र. एक. |
| शैब्यः | - | अ. पुं. प्र. एक. | नरपुङ्गवः | - | अ. पुं. प्र. एक. |
| युधामन्युः | - | उ. पुं. प्र. एक. | विक्रान्तः | - | अ. पुं. प्र. एक. |
| उत्तमौजाः | - | उत्तमौजस् - स.पुं.प्र.एक. | वीर्यवान् | - | वीर्यवत् - त. पुं.प्र. एक. |
| सौभद्रः | - | अ. पुं. प्र. एक. | द्रौपदेयाः | - | अ. पुं. प्र. बहु. |

सर्वे - अ. सर्व. पुं.प्र.बहु. एव - अव्ययम्
महारथाः - अ. पुं. प्र. बहु.

**पदार्थः –** अत्र = अस्मिन् स्थले, युधि = युद्धे, युयुधानः = युयुधानः, विराटः = विराटः, महारथः = योधानां दशसहस्रेण योद्धा, द्रुपदः = द्रुपदः, धृष्टकेतुः = धृष्टकेतुः, चेकितानः = चेकितानः, वीर्यवान् = वीरः, काशिराजः = काशिराजः, पुरुजित् = पुरुजित्, कुन्तिभोजः = कुन्तिभोजः, नरपुङ्गवः = नरेषु श्रेष्ठः, शैब्यः = शिबेः राजा, युधामन्युः = युधामन्युः, विक्रान्तः = पराक्रमशीलः, उत्तमौजाः = बलवान्, सौभद्रः = अभिमन्युः, द्रोपदेयाः = द्रौपद्याः पञ्च पुत्राः उपपाण्डवाः, भीमार्जुनसमाः = भीमार्जुनाभ्यां समानाः, शूराः = वीराः, सर्वे = सकलाः, महेष्वासाः = महाचापवन्तः, महारथाः एव = महारथाः एव ।

**अन्वयः –** अत्र युधि युयुधानः, विराटः, महारथः च द्रुपदः, धृष्टकेतुः, चेकितानः, वीर्यवान् च काशिराजः, पुरुजित्, कुन्तिभोजः, नरपुङ्गवः च शैब्यः, विक्रान्तः च युधामन्युः, वीर्यवान् च उत्तमौजाः सौभद्रः, द्रोपदेयाः च (इति) भीमार्जुनसमाः शूराः सर्वे एव महेष्वासाः महारथाः (सन्ति) ।

**आकाङ्क्षा –**

**महेष्वासाः (सन्ति)** ।
**कीदृशाः** महेष्वासाः (सन्ति) ? – **शूराः** महेष्वासाः (सन्ति) ।
**पुनश्च कीदृशाः** शूराः महेष्वासाः सन्ति ? – **भीमार्जुनसमाः** शूराः महेष्वासाः सन्ति ।
**के पुनः** भीमार्जुनसमाः शूराः महेष्वासाः सन्ति ?
**–युयुधानः, विराटः, महारथः च द्रुपदः, धृष्टकेतुः, चेकितानः, वीर्यवान् च काशिराजः, पुरुजित्, कुन्तिभोजः, नरपुङ्गवः च शैब्यः, विक्रान्तः च युधामन्युः, वीर्यवान् च उत्तमौजाः सौभद्रः, द्रौपदेयाः च** इति भीमार्जुनसमाः शूराः महेष्वासाः सन्ति ।
युयुधानः, विराटः ........ द्रौपदेयाः च इति भीमार्जुनसमाः शूराः महेष्वासाः **कीदृशाः** सन्ति ?
– युयुधानः, विराटः ........ द्रौपदेयाः च इति भीमार्जुनसमाः शूराः महेष्वासाः **महारथाः** सन्ति ।
युयुधानः, विराटः ........ द्रौपदेयाः च इति भीमार्जुनसमाः शूराः **कति** महेष्वासाः महारथाः सन्ति ?
– युयुधानः, विराटः ........ द्रौपदेयाः च इति भीमार्जुनसमाः शूराः **सर्वे एव** महेष्वासाः महारथाः सन्ति ।
**कुत्र** युयुधानः, विराटः ........ द्रौपदेयाः च इति भीमार्जुनसमाः शूराः सर्वे एव महेष्वासाः महारथाः सन्ति ?
– **युधि** युयुधानः, विराटः ........ द्रौपदेयाः च इति भीमार्जुनसमाः शूराः सर्वे एव महेष्वासाः महारथाः सन्ति ।
**कस्यां** युधि युयुधानः, विराटः ...... द्रौपदेयाः च इति भीमार्जुनसमाः शूराः सर्वे एव महेष्वासाः महारथाः सन्ति ?
– **अत्र** युधि युयुधानः, विराटः ...... द्रौपदेयाः च इति भीमार्जुनसमाः शूराः सर्वे एव महेष्वासाः महारथाः सन्ति ।

**तात्पर्यम् –** अत्र पाण्डवसैन्ये युयुधानः विराटः इत्यादयः भीमार्जुनसमाः शूराः सर्वे धनुर्धराः महारथाः एव सन्ति ।

**व्याकरणम् –**

**(क) सन्धिः** शूरा महेष्वासाः – शूराः + महेष्वासाः विसर्गसन्धिः (लोपः)
महेष्वासा भीमार्जुनसमाः – महेष्वासाः + भीमार्जुनसमाः विसर्गसन्धिः (लोपः)
भीमार्जुनसमा युधि – भीमार्जुनसमाः + युधि विसर्गसन्धिः (लोपः)

| | | |
|---|---|---|
| युयुधानो विराटः | – युयुधानः + विराटः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| विराटश्च | – विराटः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| द्रुपदश्च | – द्रुपदः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| धृष्टकेतुश्चेकितानः | – धृष्टकेतुः + चेकितानः | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| काशिराजश्च | – काशिराजः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| कुन्तिभोजश्च | – कुन्तिभोजः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| शैब्यश्च | – शैब्यः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| युधामन्युश्च | – युधामन्युः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| विक्रान्त उत्तमौजाः | – विक्रान्तः + उत्तमौजाः | विसर्गसन्धिः (लोपः) |
| उत्तमौजाश्च | – उत्तमौजाः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| सौभद्रो द्रौपदेयाः | – सौभद्रः + द्रौपदेयाः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| द्रौपदेयाश्च | – द्रौपदेयाः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| सर्व एव | – सर्वे + एव | यान्तवान्तसन्धिः, यलोपः, प्रकृतिभावः |

**(ख) समासः** महेष्वासाः – महान् इष्वासः येषां ते – बहुव्रीहिः।

भीमार्जुनसमाः – भीमश्च अर्जुनश्च भीमार्जुनौ – द्वन्द्वः।
भीमार्जुनाभ्यां समाः – तृतीयातत्पुरुषः।
भीमार्जुनयोः समाः इति वा – षष्ठीतत्पुरुषः।

महारथः – महान् रथः यस्य सः – बहुव्रीहिः।

नरपुङ्गवः – पुमांश्चासौ गौश्च पुङ्गवः (श्रेष्ठः) – कर्मधारयः।
नरेषु पुङ्गवः – सप्तमीतत्पुरुषः।

उत्तमौजाः – उत्तमम् ओजः यस्य सः – बहुव्रीहिः।

**(ग) कृदन्तः** युधि – युध् + क्विप् (भावे) युध्, तस्याम्।

**(घ) तद्धितान्तः** वीर्यवान् – वीर्य + मतुप्। वीर्यम् अस्य अस्मिन् वा अस्ति।

शैब्यः – शिबि + ष्यञ् (राजा इत्यर्थे) शिबेः राजा।

सौभद्रः – सुभद्रा + अण् (अपत्यार्थे) सुभद्रायाः अपत्यं पुमान्।

द्रौपदी – द्रुपद + अण् (अपत्यार्थे) द्रुपदस्य अपत्यं स्त्री।

द्रौपदेयाः – द्रौपदी + ढक् (अपत्यार्थे) द्रौपद्याः अपत्यानि पुमांसः।

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥1.7॥**

---

उपपाण्डवाः – युधिष्ठिरस्य पुत्रः प्रतिविन्ध्यः, भीमस्य सुतसोमः, अर्जुनस्य श्रुतकीर्तिः, नकुलस्य शतानीकः, सहदेवस्य च श्रुतसेनः।

**पदच्छेदः –** अस्माकम्, तु, विशिष्टाः, ये, तान्, निबोध, द्विजोत्तम ।
नायकाः, मम, सैन्यस्य, संज्ञार्थम्, तान्, ब्रवीमि, ते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अस्माकम् | – | अस्मद् -द.सर्व.ष.बहु. | तु | – | अव्ययम् |
| विशिष्टाः | – | अ. पुं. प्र. बहु. | ये | – | यद्-द. सर्व. पुं. प्र. बहु. |
| तान् | – | तद्-द. सर्व. पुं. द्वि. बहु. | निबोध | – | नि+बुध्-पर.कर्तरि लोट् मपु.एक. |
| द्विजोत्तम | – | अ. पुं. सम्बो. एक. | नायकाः | – | अ. पुं. प्र. बहु. |
| मम | – | अस्मद्-द. सर्व. ष. एक. | सैन्यस्य | – | अ. नपुं. ष.एक. |
| संज्ञार्थम् | – | अ. नपुं. द्वि. एक.क्रियावि. | ब्रवीमि | – | ब्रूञ्-पर.कर्तरि लट् प्रपु. एक. |
| ते | – | युष्मद्-द. सर्व. च. एक. | | | |

**पदार्थः –** द्विजोत्तम = हे द्विजोत्तम द्रोणाचार्य ! अस्माकं तु = अस्माकं कौरवाणां तु, विशिष्टाः = असाधारणाः, ये = ये योद्धारः, तान् = तान्, निबोध = जानीहि, मम = दुर्योधनस्य मम, सैन्यस्य = सेनायाः, नायकाः = ये सेनापतयः, तान् = तान् नायकान्, ते = तुभ्यम्, संज्ञार्थं = सम्यक् ज्ञानार्थं, ब्रवीमि = निवेदयामि ।

**अन्वयः –** द्विजोत्तम ! अस्माकं तु ये विशिष्टाः तान् निबोध । मम सैन्यस्य (ये) नायकाः तान् ते संज्ञार्थं ब्रवीमि ।

**आकाङ्क्षा –**

**विशिष्टाः ।**

**केषां** विशिष्टाः ? – **अस्माकं** विशिष्टाः ।

अस्माकं **ये** विशिष्टाः **तान् किं करोमि** ? – अस्माकं **ये** विशिष्टाः **तान् निबोध** ।

**नायकाः ।**

**कस्य** नायकाः ? – **सैन्यस्य** नायकाः ।

**कस्य** सैन्यस्य नायकाः ? – **मम** सैन्यस्य नायकाः ।

तव सैन्यस्य (ये) नायकाः **तान् किं करोमि** ? – मम सैन्यस्य (ये) नायकाः **तान् ब्रवीमि** ।

तव सैन्यस्य ये नायकाः तान् **किमर्थं ब्रवीमि** ? – मम सैन्यस्य ये नायकाः तान् **संज्ञार्थं ब्रवीमि** ?

तव सैन्यस्य ये नायकाः तान् संज्ञार्थं **कस्मै** ब्रवीमि ? – मम सैन्यस्य ये नायकाः तान् **संज्ञार्थं** ते ब्रवीमि ?

**अस्मिन् श्लोके सम्बोधनपदं किम् ?** – **द्विजोत्तम ।**

**ब्रवीमि ।**

**कान्** ब्रवीमि ? – **तान्** ब्रवीमि ।

तान् **कस्मै** ब्रवीमि ? – तान् **ते** ब्रवीमि ।

**के ते ?** तान् ते ब्रवीमि ? – **ते नायकाः** । तान् ते ब्रवीमि ।

ते **कस्य** नायकाः ? तान् ते ब्रवीमि ? – ते **सैन्यस्य** नायकाः । तान् ते ब्रवीमि ।

ते **कस्य** सैन्यस्य नायकाः ? यान् ते ब्रवीमि ? – ते **मम** सैन्यस्य नायकाः । तान् ते ब्रवीमि ।

ये मम सैन्यस्य नायकाः तान् **किमर्थं** ते ब्रवीमि ? – ये मम सैन्यस्य नायकाः तान् **संज्ञार्थं** ते ब्रवीमि ।

**तात्पर्यम्** – हे द्रोणाचार्य ! मम सैन्ये ये विशिष्टाः सेनापतयः सन्ति तान् भवान् जानाति एव । तथापि भवतः संज्ञानार्थं तेषां नामानि अहं स्मारयामि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अस्माकं तु | – | अस्माकम् + तु अनुस्वारसन्धिः |
| | विशिष्टा ये | – | विशिष्टाः + ये विसर्गसन्धिः (लोपः) |
| | नायका मम | – | नायकाः + मम विसर्गसन्धिः (लोपः) |
| | संज्ञार्थं तान् | – | संज्ञार्थम् + तान् अनुस्वारसन्धिः |
| **(ख) समासः** | द्विजोत्तमः | – | द्विजेषु उत्तमः – सप्तमीतत्पुरुषः । |
| | संज्ञार्थम् | – | संज्ञायै इदम् – चतुर्थीतत्पुरुषः । (नित्यसमासः) |
| **(ग) कृदन्तः** | विशिष्टः | – | वि + शिष् + क्त । (कर्तरि) विशिष्यते इति विशिष्टः । |

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥1.8॥**

**पदच्छेदः** – भवान्, भीष्मः, च, कर्णः, च, कृपः, च, समितिञ्जयः ।
अश्वत्थामा, विकर्णः, च, सौमदत्तिः, तथा, एव, च ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| भवान् | – | भवत्–त.पुं.प्र.एक. | भीष्मः | – | अ.पुं.प्र.एक. |
| च | – | अव्ययम् | कर्णः | – | अ.पुं.प्र.एक. |
| कृपः | – | अ.पुं.प्र.एक. | समितिञ्जयः | – | अ.पुं.प्र.एक. |
| अश्वत्थामा | – | अश्वत्थामन्–न.पुं.प्र.एक. | विकर्णः | – | अ.पुं.प्र.एक. |
| सौमदत्तिः | – | इ.पुं.प्र.एक. | तथा | – | अव्ययम् |
| एव | – | अव्ययम् | च | – | अव्ययम् |

**अन्वयः** – भवान् भीष्मः कर्णः समितिञ्जयः च कृपः अश्वत्थामा विकर्णः तथैव सौमदत्तिः सन्ति ।

**आकाङ्क्षा** –

**सन्ति** । (अध्याहृतम्)

**के के** सन्ति ?

– **भवान् भीष्मः कर्णः समितिञ्जयश्च कृपः अश्वत्थामा विकर्णः सौमदत्तिः च** (सन्ति) ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | भीष्मश्च | – | भीष्मः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | कर्णश्च | – | कर्णः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |

| | | | | |
|---|---|---|---|---|
| | कृपश्च | – | कृपः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | विकर्णश्च | – | विकर्णः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | सौमदत्तिस्तथैव | – | सौमदत्तिः + तथा | विसर्गसन्धिः (सकारः) |
| | | – | सौमदत्तिस्तथा + एव वृद्धिसन्धिः | |
| **(ख) समासः** | समितिञ्जयः | – | समितिं (युद्धं) जयति – कर्तरि खशुप्रत्ययः उपपदसमासश्च। | |
| | अश्वत्थामा | – | अश्वस्य स्थामा इव स्थामा (स्थितिः) यस्य सः – बहुव्रीहिः। | |
| | विकर्णः | – | विशिष्टौ कर्णौ यस्य सः – बहुव्रीहिः। | |
| **(ग) तद्धितान्तः** | सौमदत्तिः | – | सोमदत्त + इञ् (अपत्यार्थे)। सोमदत्तस्य अपत्यं पुमान्। | |

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥1.9॥**

**पदच्छेदः –** अन्ये, च, बहवः, शूराः, मदर्थे, त्यक्तजीविताः।
नानाशस्त्रप्रहरणाः, सर्वे, युद्धविशारदाः ॥

**पदपरिचयः –**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| अन्ये | – | अ. सर्व.पुं.प्र.बहु. | च | – | अव्ययम् |
| बहवः | – | उ.पुं.प्र.बहु. | शूराः | – | अ.पु.प्र.बहु. |
| मदर्थे | – | अव्ययम् | त्यक्तजीविताः | – | अ.पु.प्र.बहु. |
| नानाशस्त्रप्रहरणाः | – | अ.पुं.प्र.बहु. | सर्वे | – | अ.पु.सर्व.प्र.बहु. |
| युद्धविशारदाः | – | अ.पुं.प्र.बहु. | | | |

**पदार्थः –** अन्ये = इतरे, बहवः = नैके, शूराः = विक्रमिणः, मदर्थे = मम कृते, त्यक्तजीविताः = अर्पितप्राणाः, नानाशस्त्रप्रहरणाः = बहुशस्त्राः, सर्वे = सकलाः, युद्धविशारदाः = समरनिपुणाः।

**अन्वयः –** नानाशस्त्रप्रहरणाः शूराः सर्वे युद्धविशारदाः अन्ये च बहवः मदर्थे त्यक्तजीविताः (सन्ति)।

**आकाङ्क्षा –**

**त्यक्तजीविताः** (सन्ति)।

**कस्मै** त्यक्तजीविताः (सन्ति)? – **मदर्थे** त्यक्तजीविताः (सन्ति)।

**के** मदर्थे त्यक्तजीविताः सन्ति? – **अन्ये** मदर्थे त्यक्तजीविताः सन्ति।

अन्ये च **कति** मदर्थे त्यक्तजीविताः सन्ति? – अन्ये च **बहवः** मदर्थे त्यक्तजीविताः सन्ति?

**कीदृशाः** अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति?

– **नानाशस्त्रप्रहरणाः** अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति।

नानाशस्त्रप्रहरणाः **पुनश्च कीदृशाः** अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति?

– नानाशस्त्रप्रहरणाः **शूराः** अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति।

नानाशस्त्रप्रहरणाः शूराः **पुनश्च कीदृशाः** अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति?

– नानाशस्त्रप्रहरणाः शूराः **युद्धविशारदाः** अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति।

नानाशस्त्रप्रहरणाः शूराः **कति** युद्धविशारदाः अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति ?

– नानाशस्त्रप्रहरणाः शूराः **सर्वे** युद्धविशारदाः अन्ये च बहवः मदर्थे त्यक्तजीविताः सन्ति ।

**तात्पर्यम् –** न केवलम् एतावन्तः, अन्येऽपि बहवः मदर्थं प्राणान् समर्पयितुं सिद्धाः बहुविधानि प्रहारसाधनानि शस्त्राणि धृतवन्तः समरनिष्णाताः विक्रमिणः सैन्ये सन्ति ।

**व्याकरणम् –**

**(क) सन्धिः** शूरा मदर्थे – शूराः + मदर्थे विसर्गसन्धिः (लोपः)

**(ख) समासः** त्यक्तजीविताः – त्यक्तं जीवितं यैः ते – बहुव्रीहिः ।

नानाशस्त्रप्रहरणाः – नानाविधानि शस्त्राणि नानाशस्त्राणि – मध्यमपदलोपी तत्पुरुषः । नानाशस्त्राणि प्रहरणानि येषां ते – बहुव्रीहिः ।

युद्धविशारदाः – युद्धे विशारदाः – सप्तमीतत्पुरुषः ।

मदर्थे – मम अर्थे – षष्ठीतत्पुरुषः । अर्थे कृते च द्वौ शब्दौ तादर्थ्येऽव्यय-संज्ञकौ – इति वचनात् अर्थे इत्येतत् अव्ययम् । तदन्तत्वात् अयमपि शब्दः अव्ययम् ।

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥1.10॥**

**पदच्छेदः –** अपर्याप्तम्, तत्, अस्माकम्, बलम्, भीष्माभिरक्षितम् ।
पर्याप्तम्, तु, इदम्, एतेषाम्, बलम्, भीमाभिरक्षितम् ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| अपर्याप्तम् | – अ. नपुं. प्र. एक. | तत् | – तद्-द. सर्व. नपुं. प्र. एक. |
| अस्माकम् | – अस्मद्-द. सर्व.ष.बहु. | बलम् | – अ. नपुं. प्र. एक. |
| भीष्माभिरक्षितम् | – अ. नपुं. प्र. एक. | पर्याप्तम् | – अ. नपुं. प्र. एक. |
| तु | – अव्ययम् | इदम् | – इदम्-म. सर्व. नपुं. प्र.एक. |
| एतेषाम् | – एतद्-द. सर्व.पुं.ष.बहु. | भीमाभिरक्षितम् | – अ. नपुं. प्र. एक. |

**पदार्थः –** अस्माकम् = कौरवाणाम्, भीष्माभिरक्षितम् = भीष्मेण संरक्षितम्, तद् बलम् = तद् सैन्यम्, अपर्याप्तम् = असमर्थम्, एतेषां तु = पाण्डवानां पुनः, भीमाभिरक्षितम् = भीमेन संरक्षितम्, इदं बलम् = इदं सैन्यम्, पर्याप्तम् = समर्थम् ।

**अन्वयः –** अस्माकं भीष्माभिरक्षितं तद् बलम् अपर्याप्तम् । इदं तु एतेषां भीमाभिरक्षितं बलं पर्याप्तम् (अस्ति) ।

**आकाङ्क्षा –**

**अपर्याप्तम्** ।

**किम्** अपर्याप्तम् ? – **तद्** अपर्याप्तम् ।

तद् **किम्** अपर्याप्तम् ? – तद् **बलम्** अपर्याप्तम् ।

| | |
|---|---|
| **कीदृशं** तद् बलम् अपर्याप्तम् ? | – **भीष्माभिरक्षितं** तद् बलम् अपर्याप्तम् । |
| **केषां** भीष्माभिरक्षितं तद् बलम् अपर्याप्तम् ? | – **अस्माकं** भीष्माभिरक्षितं तद् बलम् अपर्याप्तम् । |

अस्माकं भीष्माभिरक्षितं तद् बलम् अपर्याप्तम्, **इदं तु पर्याप्तम्** ।

| | |
|---|---|
| इदं तु **किं** पर्याप्तम् ? | – इदं तु **बलं** पर्याप्तम् । |
| इदं तु **कीदृशं** बलं पर्याप्तम् ? | – इदं तु **भीमाभिरक्षितं** बलं पर्याप्तम् । |
| इदं तु **केषां** भीमाभिरक्षितं बलं पर्याप्तम् ? | – इदं तु **एतेषां** भीमाभिरक्षितं बलं पर्याप्तम् । |

**तात्पर्यम्** – यद्यपि अस्माकं सैन्यस्य रक्षकः भीष्मः तथापि सैन्यमिदम् असमर्थम् । पाण्डवानां सैन्यस्य रक्षकः यद्यपि भीमः तथापि तत्सैन्यम् अत्यन्तं समर्थम् इति मम प्रतिभाति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | अपर्याप्तं तदस्माकम् | – | अपर्याप्तम् + तदस्माकम् | अनुस्वारसन्धिः |
| | तदस्माकम् | – | तत् + अस्माकम् | जश्त्वसन्धिः |
| | तदस्माकं बलम् | – | तदस्माकम् + बलम् | अनुस्वारसन्धिः |
| | बलं भीष्माभिरक्षितम् | – | बलम् + भीष्माभिरक्षितम् | अनुस्वारसन्धिः |
| | त्विदम् | – | तु + इदम् | यण्सन्धिः |
| | पर्याप्तं त्विदम् | – | पर्याप्तम् + त्विदम् | अनुस्वारसन्धिः |
| | एतेषां बलम् | – | एतेषाम् + बलम् | अनुस्वारसन्धिः |
| | बलं भीमाभिरक्षितम् | – | बलम् + भीमाभिरक्षितम् | अनुस्वारसन्धिः |
| **(ख) समासः** | अपर्याप्तम् | – | न पर्याप्तम् – नञ्तत्पुरुषः । | |
| | भीष्माभिरक्षितम् | – | भीष्मेण अभिरक्षितम् – तृतीयातत्पुरुषः । | |
| | भीमाभिरक्षितम् | – | भीमेन अभिरक्षितम् – तृतीयातत्पुरुषः । | |
| **(ग) कृदन्तः** | पर्याप्तम् | – | परि + आप् + क्त । (कर्तरि) | |

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥1.11॥**

**पदच्छेदः** – अयनेषु, च, सर्वेषु, यथाभागम्, अवस्थिताः ।
भीष्मम्, एव, अभिरक्षन्तु, भवन्तः, सर्वे, एव, हि ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अयनेषु | – | अ. नपुं. स. बहु. | च | – | अव्ययम् |
| सर्वेषु | – | अ. पुं. सर्व. स. बहु. | यथाभागम् | – | अव्ययम् |
| अवस्थिताः | – | अ. पुं. प्र. बहु. | भीष्मम् | – | अ.पुं.द्वि.एक. |
| एव | – | अव्ययम् | अभिरक्षन्तु | – | अभि+रक्ष्–पर.लोट्.प्रपु.बहु. |
| भवन्तः | – | भवत्–त.पुं.प्र.बहु. | सर्वे | – | अ. पुं. सर्व. प्र. बहु. |
| हि | – | अव्ययम् | | | |

**पदार्थः** – सर्वेषु = सकलेषु, अयनेषु = व्यूहानां द्वारेषु, यथाभागम् = स्वस्वभागे, अवस्थिताः = स्थिताः, भवन्तः सर्वे = समस्ताः भवन्तः, भीष्मम् एव = भीष्माचार्यम् एव, अभिरक्षन्तु = संरक्षन्तु ।

**अन्वयः** – सर्वेषु अयनेषु यथाभागम् अवस्थिताः भवन्तः सर्वे भीष्मम् एव अभिरक्षन्तु ।

**आकाङ्क्षा** –

**अभिरक्षन्तु** ।

**के** अभिरक्षन्तु ? – **भवन्तः** अभिरक्षन्तु ।

भवन्तः **कियन्तः** अभिरक्षन्तु ? – भवन्तः **सर्वे** अभिरक्षन्तु ।

**कीदृशाः** भवन्तः सर्वे अभिरक्षन्तु ? – **अवस्थिताः** भवन्तः सर्वे अभिरक्षन्तु ।

**कथम्** अवस्थिताः भवन्तः सर्वे अभिरक्षन्तु ? – **यथाभागम्** अवस्थिताः भवन्तः सर्वे अभिरक्षन्तु ।

**कुत्र** यथाभागम् अवस्थिताः भवन्तः सर्वे अभिरक्षन्तु ?

– **अयनेषु** यथाभागम् अवस्थिताः भवन्तः सर्वे अभिरक्षन्तु ।

**कतिषु** अयनेषु यथाभागम् अवस्थिताः भवन्तः सर्वे अभिरक्षन्तु ?

– **सर्वेषु** अयनेषु यथाभागम् अवस्थिताः भवन्तः सर्वे अभिरक्षन्तु ।

सर्वेषु अयनेषु यथाभागम् अवस्थिताः भवन्तः सर्वे **कम् एव** अभिरक्षन्तु ?

– सर्वेषु अयनेषु यथाभागम् अवस्थिताः भवन्तः सर्वे **भीष्मम् एव** अभिरक्षन्तु ।

**तात्पर्यम्** – भवन्तः सर्वेऽपि व्यूहानां द्वारदेशेषु स्वस्वस्थाने तिष्ठन्तु । सेनाधिपतिं भीष्मं च रक्षन्तु ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | एवाभिरक्षन्तु | – एव + अभिरक्षन्तु | सवर्णदीर्घसन्धिः |
| | सर्व एव | – सर्वे + एव | यान्तवान्तादेशसन्धिः, यलोपः, प्रकृतिभावः |
| **(ख) समासः** | यथाभागम् | – भागम् अनतिक्रम्य – अव्ययीभावः । | |
| **(ग) कृदन्तः** | अवस्थिताः | – अव + स्था + क्त । (कर्तरि) | |
| | अयनेषु | – अय् + ल्युट् । (करणे) अयन्ते (गच्छन्ति) एभिः इति अयनानि, तेषु । | |

**तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥1.12॥**

**पदच्छेदः** – तस्य, सञ्जनयन्, हर्षम्, कुरुवृद्धः, पितामहः ।
सिंहनादम्, विनद्य, उच्चैः, शङ्खम्, दध्मौ, प्रतापवान् ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| तस्य | – | तद्–द. सर्व.पुं.ष.एक. | सञ्जनयन् | – | सञ्जनयत्–त.पुं.प्र.एक. |
| हर्षम् | – | अ. पुं. द्वि. एक. | कुरुवृद्धः | – | अ. पुं. प्र. एक. |
| पितामहः | – | अ. पुं. प्र. एक. | सिंहनादम् | – | णमुलन्तम् अव्ययम् |

| | | | | | |
|---|---|---|---|---|---|
| विनद्य | - | ल्यबन्तम् अव्ययम् | उच्चैः | - | अव्ययम् |
| शङ्खम् | - | अ. पुं. द्वि. एक. | दध्मौ | - | ध्मा-पर. कर्तरि लिट्. प्रपु.एक. |
| प्रतापवान् | - | प्रतापवत्-त.पुं.प्र.एक. | | | |

**पदार्थः** – प्रतापवान् = तेजस्वी, कुरुवृद्धः = कुरुषु ज्येष्ठः, पितामहः = भीष्मः, तस्य = दुर्योधनस्य, हर्षम् = मोदम्, सञ्जनयन् = उत्पादयन्, सिंहनादं विनद्य = सिंहः इव गर्जित्वा, शङ्खम् = शङ्खम्, उच्चैः = गाढम्, दध्मौ = आध्मातवान् ।

**अन्वयः** – प्रतापवान् कुरुवृद्धः पितामहः तस्य हर्षं सञ्जनयन् सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ।

**आकाङ्क्षा** –

**दध्मौ** ।

**कः** दध्मौ ? – **पितामहः** दध्मौ ।

**कीदृशः** पितामहः दध्मौ ? – **कुरुवृद्धः** पितामहः दध्मौ ।

**पुनश्च कीदृशः** कुरुवृद्धः पितामहः दध्मौ ? – **प्रतापवान्** कुरुवृद्धः पितामहः दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **कं** दध्मौ ? – प्रतापवान् कुरुवृद्धः पितामहः **शङ्खं** दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **कथं** शङ्खं दध्मौ । – प्रतापवान् कुरुवृद्धः पितामहः **उच्चैः** शङ्खं दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **किं कृत्वा** उच्चैः शङ्खं दध्मौ ?

– प्रतापवान् कुरुवृद्धः पितामहः **विनद्य** उच्चैः शङ्खं दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **कथं** विनद्य उच्चैः शङ्खं दध्मौ ?

– प्रतापवान् कुरुवृद्धः पितामहः **सिंहनादं** विनद्य उच्चैः शङ्खं दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **किं कुर्वन्** सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ?

– प्रतापवान् कुरुवृद्धः पितामहः **सञ्जनयन्** सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **कं** सञ्जनयन् सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ?

– प्रतापवान् कुरुवृद्धः पितामहः **हर्षं** सञ्जनयन् सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ।

प्रतापवान् कुरुवृद्धः पितामहः **कस्य** हर्षं सञ्जनयन् सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ?

– प्रतापवान् कुरुवृद्धः पितामहः **तस्य** हर्षं सञ्जनयन् सिंहनादं विनद्य उच्चैः शङ्खं दध्मौ ।

**तात्पर्यम्** – तदा पितामहः भीष्मः सिंहः इव उच्चैः गर्जनम् अकरोत् । ततः शङ्खमपि उच्चैः अधमत् येन दुर्योधनस्य महान् सन्तोषः जातः ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | हर्षं कुरुवृद्धः | - | हर्षम् + कुरुवृद्धः | अनुस्वारसन्धिः |
| | विनद्योच्चैः | - | विनद्य + उच्चैः | गुणसन्धिः |
| | सिंहनादं विनद्योच्चैः | - | सिंहनादम् + विनद्योच्चैः | अनुस्वारसन्धिः |
| | शङ्खं दध्मौ | - | शङ्खम् + दध्मौ | अनुस्वारसन्धिः |

| | | | |
|---|---|---|---|
| **(ख) समासः** | कुरुवृद्धः | – | कुरुषु वृद्धः – सप्तमीतत्पुरुषः । |
| **(ग) कृदन्तः** | सञ्जनयन् | – | सम् + जन् + णिच् + शतृ (कर्तरि) |
| | सिंहनादं विनद्य | – | सिंह + नद् + णमुल् (भावे) उपमानवाचके शब्दे उपपदे धातोः णमुल् (अम्)<br>वि + नद् + ल्यप् (भावे) |
| **(घ) तद्धितान्तः** | पितामहः | – | पितृ + डामहच् (पिता इत्यर्थे) । पितुः पिता । |
| | प्रतापवान् | – | प्रताप + मतुप् । प्रतापः अस्य अस्मिन् वा अस्ति । |

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥1.13॥**

**पदच्छेदः –** ततः, शङ्खाः, च, भेर्यः, च, पणवानकगोमुखाः ।
सहसा, एव, अभ्यहन्यन्त, सः, शब्दः, तुमुलः, अभवत् ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| ततः | – अव्ययम् | शङ्खाः | – अ. पुं. प्र. बहु. |
| च | – अव्ययम् | भेर्यः | – ई. स्त्री. प्र. बहु. |
| पणवानकगोमुखाः | – अ. पुं. प्र. बहु. | सहसा | – अव्ययम् |
| एव | – अव्ययम् | अभ्यहन्यन्त | – अभि+हन्–आत्म.कर्मणि लङ् प्रपु. बहु. |
| सः | – तद्–द. सर्व. पुं. प्र.एक. | शब्दः | – अ. पुं. प्र. एक. |
| तुमुलः | – अ. पुं. प्र. एक. | अभवत् | – भू–पर. कर्तरि लङ् प्रपु. एक. |

**पदार्थः –** तदा = तस्मिन् समये, शङ्खाः = शङ्खाः, भेर्यः = भेर्यः, पणवानकगोमुखाः = पणवाः आनकाः गोमुखाश्च, सहसा एव = युगपत् एव, अभ्यहन्यन्त = नादिताः अभवन्, सः = सः, शब्दः = नादः, तुमुलः = घोरः, अभवत् = सञ्जातः ।

**अन्वयः –** तदा शङ्खाः भेर्यः पणवानकगोमुखाः च सहसा एव अभ्यहन्यन्त । सः शब्दः तुमुलः अभवत् ।

**आकाङ्क्षा –**

**अभ्यहन्यन्त ।**

**के** अभ्यहन्यन्त ? – **शङ्खाः** अभ्यहन्यन्त ।

शङ्खाः **पुनश्च काः** अभ्यहन्यन्त ? – शङ्खाः **भेर्यश्च** अभ्यहन्यन्त ।

शङ्खाः भेर्यः **पुनश्च के** अभ्यहन्यन्त ? – शङ्खाः भेर्यः **पणवानकगोमुखाः** च अभ्यहन्यन्त ।

शङ्खाः भेर्यः पणवानकगोमुखाः च **कथम्** अभ्यहन्यन्त ?

– शङ्खाः भेर्यः पणवानकगोमुखाः च **सहसा** एव अभ्यहन्यन्त ।

**कदा** शङ्खाः भेर्यः पणवानकगोमुखाः च सहसा एव अभ्यहन्यन्त ?

– **तदा** शङ्खाः भेर्यः पणवानकगोमुखाः च सहसा एव अभ्यहन्यन्त ।

अभवत् ।

| | |
|---|---|
| **कः** अभवत् ? | – **सः** अभवत् । |
| सः **कः** अभवत् ? | – सः **शब्दः** अभवत् । |
| सः शब्दः **कीदृशः** अभवत् ? | – सः शब्दः **तुमुलः** अभवत् । |

**तात्पर्यम्** – तस्मिन् एव काले शङ्खानां धमनम्, भेरीणां ताडनम्, पणवानाम् आनकानां गोमुखानां च वादनं सम्पन्नम्, येन सर्वत्र महान् शब्दः संजातः ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | शङ्खाश्च | – शङ्खाः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | भेर्यश्च | – भेर्यः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | सहसैवाभ्यहन्यन्त | – सहसा + एव | वृद्धिसन्धिः |
| | | – सहसैव + अभ्यहन्यन्त | सवर्णदीर्घसन्धिः |
| | शब्दस्तुमुलोऽभवत् | – शब्दः + तुमुलः | विसर्गसन्धिः (सकारः) |
| | | – शब्दस्तुमुलः + अभवत् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपम् |
| **(ख) समासः** | गोमुखः | – गोः मुखम् इव मुखं यस्य सः – बहुव्रीहिः । वाद्यविशेषः । | |
| | पणवानकगोमुखाः | – पणवाश्च आनकाश्च गोमुखाश्च – द्वन्द्वः । वाद्यविशेषाः । | |

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥1.14॥**

**पदच्छेदः** – ततः, श्वेतैः, हयैः, युक्ते, महति, स्यन्दने, स्थितौ ।
माधवः, पाण्डवः, च, एव, दिव्यौ, शङ्खौ, प्रदध्मतुः ॥

**पदपरिचयः** –

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| ततः | – | अव्ययम् | श्वेतैः | – | अ. पुं. तृ. बहु. |
| हयैः | – | अ. पुं. तृ. बहु. | युक्ते | – | अ. पुं. स. एक. |
| महति | – | महत्–त.पुं.स.एक. | स्यन्दने | – | अ. पुं. स. एक. |
| स्थितौ | – | अ. पुं. प्र. द्विव. | माधवः | – | अ. पुं. प्र. एक. |
| पाण्डवः | – | अ. पुं. प्र. एक. | च | – | अव्ययम् |
| एव | – | अव्ययम् | दिव्यौ | – | अ. पुं. द्वि. द्विव. |
| शङ्खौ | – | अ. पुं. द्वि. द्विव. | प्रदध्मतुः | – | ध्मा–पर. कर्तरि लिट् प्रपु. द्विव. |

**पदार्थः** – ततः = तस्मात्परम्, माधवः = श्रीकृष्णः, पाण्डवश्च = अर्जुनश्च, श्वेतैः = धवलैः, हयैः = अश्वैः, युक्ते = संयुक्ते, महति = विशाले, स्यन्दने = रथे, स्थितौ = उपविष्टौ, दिव्यौ = अलौकिकौ, शङ्खौ = शङ्खौ, प्रदध्मतुः = ध्मातवन्तौ ।

**अन्वयः** – ततः माधवः पाण्डवश्च श्वेतैः हयैः युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

**आकाङ्क्षा** –

**प्रदध्मतुः** ।

**कौ** प्रदध्मतुः? – **माधवः पाण्डवश्च** प्रदध्मतुः ।

माधवः पाण्डवश्च **कौ** प्रदध्मतुः ? – माधवः पाण्डवश्च **शङ्खौ** प्रदध्मतुः ।

माधवः पाण्डवश्च **कीदृशौ** शङ्खौ प्रदध्मतुः ? – माधवः पाण्डवश्च **दिव्यौ** शङ्खौ प्रदध्मतुः ।

माधवः पाण्डवश्च **कथंभूतौ** दिव्यौ शङ्खौ प्रदध्मतुः ?

– माधवः पाण्डवश्च **स्थितौ** दिव्यौ शङ्खौ प्रदध्मतुः ।

माधवः पाण्डवश्च **कुत्र** स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ?

– माधवः पाण्डवश्च **स्यन्दने** स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

माधवः पाण्डवश्च **कीदृशे** स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ?

– माधवः पाण्डवश्च **महति** स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

माधवः पाण्डवश्च **पुनश्च कीदृशे** महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ?

– माधवः पाण्डवश्च **युक्ते** महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

माधवः पाण्डवश्च **कैः** युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ?

– माधवः पाण्डवश्च **हयैः** युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

माधवः पाण्डवश्च **कीदृशैः** हयैः युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ?

– माधवः पाण्डवश्च **श्वेतैः** हयैः युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

**कस्मात्परं** माधवः पाण्डवश्च श्वेतैः हयैः युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ?

– **ततः** माधवः पाण्डवश्च श्वेतैः हयैः युक्ते महति स्यन्दने स्थितौ दिव्यौ शङ्खौ प्रदध्मतुः ।

**तात्पर्यम्** – ततः पश्चात् भगवान् श्रीकृष्णः अर्जुनश्च धवलवर्णैः अश्वैः उह्यमानेन महता रथेन तत्र समागतौ । तौ च युद्धोत्साहवर्धनाय स्वीयौ अलौकिकौ शङ्खौ ध्मातवन्तौ ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | श्वेतैर्हयैः | – | श्वेतैः + हयैः | विसर्गसन्धिः (रेफः) |
| | श्वेतैर्हयैर्युक्ते | – | श्वेतैर्हयैः + युक्ते | विसर्गसन्धिः (रेफः) |
| | पाण्डवश्च | – | पाण्डवः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | पाण्डवश्चैव | – | पाण्डवश्च + एव | वृद्धिसन्धिः |
| **(ख) समासः** | माधवः | – | मायाः (लक्ष्म्याः) धवः – षष्ठीतत्पुरुषः | |
| **(ग) कृदन्तः** | स्यन्दने | – | स्यन्द् + ल्युट् (करणे), तस्मिन् । स्यन्दन्ते (गच्छन्ति) अनेन इति स्यन्दनम् । | |
| | स्थितौ | – | स्था + क्त । (कर्तरि) | |

**(घ) तद्धितान्तः** पाण्डवः - पाण्डु + अण् (अपत्यार्थे)। पाण्डोः अपत्यं पुमान्।
दिव्यौ - दिव् + यत् (भवार्थे)। दिवि भवौ।

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥1.15॥**

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥1.16॥**

**पदच्छेदः** - पाञ्चजन्यम्, हृषीकेशः, देवदत्तम्, धनञ्जयः।
पौण्ड्रम्, दध्मौ, महाशङ्खम्, भीमकर्मा, वृकोदरः ॥
अनन्तविजयम्, राजा, कुन्तीपुत्रः, युधिष्ठिरः।
नकुलः सहदेवः, च, सुघोषमणिपुष्पकौ ॥

**पदपरिचयः –**

| **पदम्** | **विवरणम्** | **पदम्** | **विवरणम्** |
|---|---|---|---|
| पाञ्चजन्यम् | - अ. पुं. द्वि. एक. | हृषीकेशः | - अ. पुं. प्र. एक. |
| देवदत्तम् | - अ. पुं. द्वि. एक. | धनञ्जयः | - अ. पुं. प्र. एक. |
| पौण्ड्रम् | - अ. पुं. द्वि. एक. | दध्मौ | - ध्मा-पर. कर्तरि लिट् प्रपु.एक. |
| महाशङ्खम् | - अ. पुं. द्वि. एक. | भीमकर्मा | - भीमकर्मन्-न. पुं. प्र. एक. |
| वृकोदरः | - अ. पुं. प्र. एक. | अनन्तविजयम् | - अ. पुं. द्वि. एक. |
| राजा | - राजन्-न. पुं. प्र. एक. | कुन्तीपुत्रः | - अ. पुं. प्र. एक. |
| युधिष्ठिरः | - अ. पुं. प्र. एक. | नकुलः | - अ. पुं. प्र. एक. |
| सहदेवः | - अ. पुं. प्र. एक. | च | - अव्ययम् |
| सुघोषमणिपुष्पकौ | - अ. पुं. द्वि. द्विव. | | |

**पदार्थः** – हृषीकेशः = श्रीकृष्णः, पाञ्चजन्यम् = तन्नामकम्, धनञ्जयः = अर्जुनः, देवदत्तम् = तन्नामकम्, भीमकर्मा = भयङ्करकार्यकारी, वृकोदरः = भीमः, पौण्ड्रम् = तन्नामकम्, महाशङ्खम् = महाकारकं शङ्खम्, कुन्तीपुत्रः = कुन्तीसुतः, राजा युधिष्ठिरः = महाराजः युधिष्ठिरः, अनन्तविजयम् = तन्नामकम्, नकुलः सहदेवश्च = नकुलः सहदेवश्च, सुघोषमणिपुष्पकौ = तन्नामकौ, दध्मौ = अधमत्।

**अन्वयः** – हृषीकेशः पाञ्चजन्यं धनञ्जयः देवदत्तं भीमकर्मा वृकोदरः महाशङ्खं पौण्ड्रं कुन्तीपुत्रः राजा युधिष्ठिरः अनन्तविजयं नकुलः सहदेवः च सुघोषमणिपुष्पकौ दध्मौ।

**आकाङ्क्षा –**

**दध्मौ।**

**कः** दध्मौ ? - **हृषीकेशः** दध्मौ।

हृषीकेशः **पुनश्च कः** दध्मौ ? - हृषीकेशः **धनञ्जयश्च** दध्मौ।

हृषीकेशः धनञ्जयः **पुनश्च कः** दध्मौ ? – हृषीकेशः धनञ्जयः **वृकोदरश्च** दध्मौ ।

हृषीकेशः धनञ्जयः **कीदृशश्च** वृकोदरः दध्मौ ?

– हृषीकेशः धनञ्जयः **भीमकर्मा** वृकोदरः च दध्मौ ।

हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः **पुनश्च कः** दध्मौ ?

– हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः **युधिष्ठिरश्च** दध्मौ ।

हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः **कीदृशश्च** युधिष्ठिरः दध्मौ ?

– हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः **कुन्तीपुत्रः** युधिष्ठिरः च दध्मौ ।

हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः **पुनः कीदृशश्च** युधिष्ठिरः दध्मौ ?

– हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः **राजा** युधिष्ठिरः च दध्मौ ।

हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः राजा युधिष्ठिरः **पुनश्च कः** दध्मौ ?

– हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः राजा युधिष्ठिरः **नकुलश्च** दध्मौ ।

हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः राजा युधिष्ठिरः नकुलः **पुनश्च कः** दध्मौ ?

– हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः राजा युधिष्ठिरः नकुलः **सहदेवश्च** दध्मौ ।

हृषीकेशः धनञ्जयः भीमकर्मा वृकोदरः कुन्तीपुत्रः राजा युधिष्ठिरः नकुलः सहदेवश्च **कं कं** दध्मौ ?

– हृषीकेशः **पाञ्चजन्यम्,** धनञ्जयः **देवदत्तम्,** भीमकर्मा वृकोदरः **पौण्ड्रं महाशङ्खम्,** कुन्तीपुत्रः राजा युधिष्ठिरः **अनन्तविजयम्,** नकुलः सहदेवश्च **सुघोषमणिपुष्पकौ** दध्मौ ।

**तात्पर्यम् –** भगवान् श्रीकृष्णः स्वीयं पाञ्चजन्यं शङ्खम् अधमत् । अर्जुनः देवदत्तनामकं स्वीयं शङ्खम् अधमत् । भीमस्तु भयङ्कराणां कार्याणां करणे कुशलः । पौण्ड्रनामकः तस्य शङ्खोऽपि महान् एव । सः तम् अधमत् । युधिष्ठिरः अनन्तविजयनामकं शङ्खम् अधमत् । नकुलः सुघोषनामकं सहदेवः च मणिपुष्पकनामकं शङ्खम् अधमत् ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | |
|---|---|---|
| पाञ्चजन्यं हृषीकेशः | – पाञ्चजन्यम् + हृषीकेशः | अनुस्वारसन्धिः |
| हृषीकेशो देवदत्तम् | – हृषीकेशः + देवदत्तम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| देवदत्तं धनञ्जयः | – देवदत्तम् + धनञ्जयः | अनुस्वारसन्धिः |
| पौण्ड्रं दध्मौ | – पौण्ड्रम् + दध्मौ | अनुस्वारसन्धिः |
| महाशङ्खं भीमकर्मा | – महाशङ्खम् + भीमकर्मा | अनुस्वारसन्धिः |
| अनन्तविजयं राजा | – अनन्तविजयम् + राजा | अनुस्वारसन्धिः |
| कुन्तीपुत्रो युधिष्ठिरः | – कुन्तीपुत्रः + युधिष्ठिरः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| सहदेवश्च | – सहदेवः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |

| | | |
|---|---|---|
| **(ख) समासः** | हृषीकेशः | – हृषीकाणाम् ईशः – षष्ठीतत्पुरुषः। (हृषीकम् इन्द्रियम्)<br>*हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान्।*<br>*हृषीकेशस्ततो विष्णो ख्यातो देवेषु केशव॥ – महाभारतम्* |
| | महाशङ्खम् | – महान् शङ्खः महाशङ्खः, तम् – कर्मधारयः। |
| | वृकोदरः | – वृकस्य उदरम् इव उदरं यस्य सः – बहुव्रीहिः। |
| | कुन्तीपुत्रः | – कुन्त्याः पुत्रः – षष्ठीतत्पुरुषः। |
| | युधिष्ठिरः | – युधि स्थिरः – सप्तमीतत्पुरुषः। समासे सति षत्वम्। |
| | धनञ्जयः | – धनं जयति इति धनञ्जयः। कर्तरि खश् उपपदसमासश्च।<br>*सर्वाञ्जनपदाञ्जित्वा वित्तमादाय केवलम्।*<br>*मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्॥ – महाभारतम्* |
| **घ) तद्धितान्तः** | पाञ्चजन्यः | – पञ्चजन + ञ्य (भवार्थे)। पञ्चजने भवः।<br>*स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्दनः।*<br>*यः स देवमनुष्येषु पाञ्चजन्य इति श्रुतः॥ हरिवंशः – 8917* |

**काश्यश्च परमेष्वासः शिखण्डी च महारथः।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः॥1.17॥**
**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक्॥1.18॥**

**पदच्छेदः –** काश्यः, च, परमेष्वासः, शिखण्डी, च, महारथः।
धृष्टद्युम्नः, विराटः, च, सात्यकिः, च, अपराजितः॥
द्रुपदः, द्रौपदेयाः, च, सर्वशः पृथिवीपते।
सौभद्रः, च, महाबाहुः, शङ्खान्, दध्मुः, पृथक्, पृथक्॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| काश्यः | – अ. पुं. प्र. एक. | च | – अव्ययम् |
| परमेष्वासः | – अ. पुं. प्र. एक. | शिखण्डी | – शिखण्डिन्– न. पुं. प्र. एक. |
| महारथः | – अ. पुं. प्र. एक. | धृष्टद्युम्नः | – अ. पुं. प्र. एक. |
| विराटः | – अ. पुं. प्र. एक. | सात्यकिः | – इ. पुं. प्र. एक. |
| अपराजितः | – अ. पुं. प्र. एक. | द्रुपदः | – अ. पुं. प्र. एक. |
| द्रौपदेयाः | – अ. पुं. प्र. बहु. | सर्वशः | – अव्ययम् |
| पृथिवीपते | – इ. पुं. सम्बो. एक. | सौभद्रः | – अ. पुं. प्र. एक. |
| महाबाहुः | – उ. पुं. प्र. एक. | शङ्खान् | – अ. पुं. द्वि. बहु. |
| दध्मुः | – ध्मा–पर. कर्तरि लिट्. प्रपु.बहु. | पृथक् | – अव्ययम् |

**पदार्थः** – पृथिवीपते = हे धृतराष्ट्र ! परमेष्वासः = परमधनुर्धरः, काश्यः = काश्याः राजा, महारथः = योधानां दशसहस्रेण योद्धा, शिखण्डी = शिखण्डी, धृष्टद्युम्नः = धृष्टद्युम्नः, विराटः = विराटराजः, अपराजितः = पराजेतुम् अशक्यः, सात्यकिः = सात्यकिः, द्रुपदः = द्रुपदः, द्रौपदेयाः = द्रौपद्याः पुत्राः, महाबाहुः = महान्तौ बाहू यस्य सः, सौभद्रः च = अभिमन्युः च, पृथक् पृथक् = अन्यान् अन्यान्, शङ्खान् = शङ्खान्, सर्वशः = सर्वे, दध्मुः = अधमन्।

**अन्वयः** – पृथिवीपते ! परमेष्वासः काश्यः, महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च सर्वशः पृथक् पृथक् शङ्खान् दध्मुः ।

**आकाङ्क्षा** –

दध्मुः ।

**के** दध्मुः ?

– **काश्यः शिखण्डी धृष्टद्युम्नः विराटः सात्यकिः द्रुपदः द्रौपदेयाः सौभद्रः च** दध्मुः ।

**कीदृशः** काश्यः, **कीदृशः** शिखण्डी, धृष्टद्युम्नः, विराटः, **कीदृशः** सात्यकिः, द्रुपदः, द्रौपदेयाः, **कीदृशः** सौभद्रः च दध्मुः ?

– **परमेष्वासः** काश्यः, **महारथः** शिखण्डी, धृष्टद्युम्नः, विराटः, **अपराजितः** सात्यकिः, द्रुपदः, द्रौपदेयाः, **महाबाहुः** सौभद्रः च दध्मुः ।

परमेष्वासः काश्यः, महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च **कति** दध्मुः ?

– परमेष्वासः काश्यः, महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च **सर्वशः** दध्मुः ।

परमेष्वासः काश्यः, महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च सर्वशः **कान्** दध्मुः ?

– परमेष्वासः काश्यः, महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च सर्वशः **शङ्खान्** दध्मुः ।

परमेष्वासः काश्यः, महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च सर्वशः **कथं** शङ्खान् दध्मुः ?

– परमेष्वासः काश्यः महारथः शिखण्डी, धृष्टद्युम्नः, विराटः, अपराजितः सात्यकिः, द्रुपदः, द्रौपदेयाः, महाबाहुः सौभद्रः च सर्वशः **पृथक् पृथक्** शङ्खान् दध्मुः ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ? पृथिवीपते ।**

**तात्पर्यम्** – हे पृथिवीपते धृतराष्ट्र ! युद्धार्थम् उपस्थितः काशिराजः महान् धनुर्धरः अस्ति । तादृशः काशिराजः, महारथः द्रुपदपुत्रः धृष्टद्युम्नः, विराटराजः, अपराजितः सात्यकिः, द्रुपदमहाराजः, द्रौपद्याः पुत्राः उपपाण्डवाः, महाबाहुः अभिमन्युश्चेति सर्वेऽपि पृथक् पृथक् शङ्खान् अधमन् ।

**व्याकरणम् –**

(क) **सन्धिः** काश्यश्च – काश्यः + च विसर्गसन्धिः (सकारः), श्चुत्वम्
विराटश्च – विराटः + च विसर्गसन्धिः (सकारः) श्चुत्वम्
धृष्टद्युम्नो विराटश्च – धृष्टद्युम्नः + विराटः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
सात्यकिश्च – सात्यकिः + च विसर्गसन्धिः (सकारः) श्चुत्वम्
सात्यकिश्चापराजितः – सात्यकिश्च + अपराजितः सवर्णदीर्घसन्धिः
द्रौपदेयाश्च – द्रौपदेयाः + च विसर्गसन्धिः (सकारः) श्चुत्वम्
द्रुपदो द्रौपदेयाश्च – द्रुपदः + द्रौपदेयाश्च विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
सौभद्रश्च – सौभद्रः + च विसर्गसन्धिः (सकारः) श्चुत्वम्

(ख) **समासः** पृथिवीपते – पृथिव्याः पतिः, तत्सम्बुद्धौ – षष्ठीतत्पुरुषः।
परमेष्वासः – आस्ते अत्र इति आसः। इषोः आसः इष्वासः, धनुः इत्यर्थः। परमः इष्वासः यस्य सः – बहुव्रीहिः।
धृष्टद्युम्नः – धृष्टं द्युम्नं येन सः – बहुव्रीहिः।
अपराजितः – न पराजितः – नञ्तत्पुरुषः।
महाबाहुः – महान्तौ बाहू यस्य सः – बहुव्रीहिः।

(ग) **तद्धितान्तः** काश्यः – काशि + ञ्यङ् (राजा इत्यर्थे)। काश्याः राजा।
सात्यकिः – सत्यक + इञ् (अपत्यार्थे)। सत्यकस्य अपत्यं पुमान्।
शिखण्डी – शिखण्ड + इनि (मतुबर्थे)। शिखण्डः चूडा अस्य अस्मिन् वा अस्ति।

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥1.19॥**

**पदच्छेदः –** सः, घोषः, धार्तराष्ट्राणाम्, हृदयानि, व्यदारयत्।
नभः, च, पृथिवीम्, च, एव, तुमुलः, व्यनुनादयन्॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| सः | – | तद्–द. पुं. प्र. एक. | घोषः | – | अ. पुं. प्र. एक. |
| धार्तराष्ट्राणाम् | – | अ. पुं. ष. बहु. | हृदयानि | – | अ. नपुं. द्वि. बहु. |
| व्यदारयत् | – | वि+दृ–णिच्.कर्तरि लङ्प्रपु.एक. | नभः | – | नभस्–स. नपुं. द्वि. एक. |
| च | – | अव्ययम् | पृथिवीम् | – | ई. स्त्री. द्वि. एक. |
| एव | – | अव्ययम् | तुमुलः | – | अ.पुं.प्र.एक. |
| व्यनुनादयन् | – | व्यनुनादयत्–त. पुं. प्र.एक. | | | |

**पदार्थः** – सः = स एषः, तुमुलः = घोरः, घोषः = नादः, नभः = आकाशम्, पृथिवीं च = भूमिं च, व्यनुनादयन् = प्रतिध्वनयन्, धार्तराष्ट्राणाम् = कौरवाणाम्, हृदयानि = मनांसि, व्यदारयत् = अखण्डयत्।

**अन्वयः** – सः तुमुलः घोषः नभः पृथिवीं च व्यनुनादयन् धार्तराष्ट्राणां हृदयानि व्यदारयत्।

**आकङ्क्षा** –

**व्यदारयत् ।**

**कः** व्यदारयत् ? – **घोषः** व्यदारयत्।

**कः** घोषः व्यदारयत् ? – **सः** घोषः व्यदारयत्।

सः **कीदृशः** घोषः व्यदारयत् ? – सः **तुमुलः** घोषः व्यदारयत्।

सः तुमुलः घोषः **कानि** व्यदारयत् ? – सः तुमुलः घोषः **हृदयानि** व्यदारयत्।

सः तुमुलः घोषः **केषां** हृदयानि व्यदारयत् ? – सः तुमुलः घोषः **धार्तराष्ट्राणां** हृदयानि व्यदारयत्।

सः तुमुलः घोषः **किं कुर्वन्** धार्तराष्ट्राणां हृदयानि व्यदारयत् ?

– सः तुमुलः घोषः **व्यनुनादयन्** धार्तराष्ट्राणां हृदयानि व्यदारयत्।

सः तुमुलः घोषः **किं** व्यनुनादयन् धार्तराष्ट्राणां हृदयानि व्यदारयत् ?

– सः तुमुलः घोषः **नभः** व्यनुनादयन् धार्तराष्ट्राणां हृदयानि व्यदारयत्।

सः तुमुलः घोषः नभः **पुनश्च कां** व्यनुनादयन् धार्तराष्ट्राणां हृदयानि व्यदारयत् ?

– सः तुमुलः घोषः नभः **पृथिवीं च** व्यनुनादयन् धार्तराष्ट्राणां हृदयानि व्यदारयत्।

**तात्पर्यम्** – सर्वेऽपि महावीराः युगपदेव शङ्खान् ध्मातवन्तः इति तदा महान् घोरश्च शब्दः समुत्पन्नः। तेन आकाशे भूमौ च प्रतिध्वनिः जातः। तस्य घोषस्य श्रवणेन दुष्टानां कौरवाणां हृदयानि विभिन्नानि इव अभवन्।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| स घोषः | – सः + घोषः | विसर्गसन्धिः (लोपः) |
| घोषो धार्तराष्ट्राणाम् | – घोषः + धार्तराष्ट्राणाम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| धार्तराष्ट्राणां हृदयानि | – धार्तराष्ट्राणाम् + हृदयानि | अनुस्वारसन्धिः |
| नभश्च | – नभः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| पृथिवीं चैव | – पृथिवीम् + च | अनुस्वारसन्धिः |
| चैव | – च + एव | वृद्धिसन्धिः |
| तुमुलो व्यनुनादयन् | – तुमुलः + व्यनुनादयन् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |

**(ग) तद्धितान्तः** धार्तराष्ट्राणाम् – धृतराष्ट्र + अण् (अपत्यार्थे)। धृतराष्ट्रस्य अपत्यानि पुमांसः।

**अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः।**
**प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥1.20॥**

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

**पदच्छेदः –** अथ, व्यवस्थितान्, दृष्ट्वा, धार्तराष्ट्रान्, कपिध्वजः ।
प्रवृत्ते, शस्त्रसम्पाते, धनुः, उद्यम्य, पाण्डवः ॥
हृषीकेशम्, तदा, वाक्यम्, इदम्, आह, महीपते ।

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अथ | – | अव्ययम् | व्यवस्थितान् | – | अ. पुं. द्वि. बहु. |
| दृष्ट्वा | – | अव्ययम् | धार्तराष्ट्रान् | – | अ. पुं. द्वि. बहु. |
| कपिध्वजः | – | अ. पुं. प्र. एक. | प्रवृत्ते | – | अ. पुं. स. एक. |
| शस्त्रसम्पाते | – | अ.पुं. स. एक. | धनुः | – | धनुष्–ष. नपुं. द्वि. एक. |
| उद्यम्य | – | ल्यबन्तम् अव्ययम् | पाण्डवः | – | अ. पुं. प्र. एक. |
| हृषीकेशम् | – | अ. पुं. द्वि. एक. | तदा | – | अव्ययम् |
| वाक्यम् | – | अ. नपुं. द्वि. एक. | इदम् | – | इदम्–म. नपुं. द्वि. एक. |
| आह | – | ब्रूञ्–पर.कर्तरि लट् प्रपु.एक. | महीपते | – | इ. पुं. सम्बो. एक. |

**पदार्थः –** महीपते = हे धृतराष्ट्र ! अथ = ततः, व्यवस्थितान् = उद्युक्तान्, धार्तराष्ट्रान् = कौरवान्, दृष्ट्वा = वीक्ष्य, कपिध्वजः = वानरकेतनः, पाण्डवः = अर्जुनः, शस्त्रसम्पाते = आयुधपाते, प्रवृत्ते = सम्पन्ने, धनुः = चापम्, उद्यम्य = उद्धृत्य, तदा = तस्मिन् समये, हृषीकेशम् = कृष्णम्, इदम् = एतत्, वाक्यम् = वचनम्, आह = वदति ।

**अन्वयः –** महीपते ! अथ व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा कपिध्वजः पाण्डवः शस्त्रसम्पाते प्रवृत्ते धनुः उद्यम्य तदा हृषीकेशम् इदं वाक्यम् आह ।

**आकाङ्क्षा –**

**आह ।**

**कः** आह ? – **पाण्डवः** आह ।

**कीदृशः** पाण्डवः आह ? – **कपिध्वजः** पाण्डवः आह ।

कपिध्वजः पाण्डवः **किम्** आह ? – कपिध्वजः पाण्डवः **वाक्यम्** आह ।

कपिध्वजः पाण्डवः **किं** वाक्यम् आह ? – कपिध्वजः पाण्डवः **इदं** वाक्यम् आह ।

कपिध्वजः पाण्डवः **कम्** इदं वाक्यम् आह ? – कपिध्वजः पाण्डवः **हृषीकेशम्** इदं वाक्यम् आह ।

कपिध्वजः पाण्डवः **किं कृत्वा** हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः **दृष्ट्वा** हृषीकेशम् इदं वाक्यम् आह ।

कपिध्वजः पाण्डवः **कान्** दृष्ट्वा हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः **धार्तराष्ट्रान्** दृष्ट्वा हृषीकेशम् इदं वाक्यम् आह ।

कपिध्वजः पाण्डवः **कथंभूतान्** धार्तराष्ट्रान् दृष्ट्वा हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः **व्यवस्थितान्** धार्तराष्ट्रान् दृष्ट्वा हृषीकेशम् इदं वाक्यम् आह ।

कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **पुनश्च किं कृत्वा** हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **उद्यम्य** हृषीकेशम् इदं वाक्यम् आह ।
कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **किम्** उद्यम्य हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **धनुः** उद्यम्य हृषीकेशम् इदं वाक्यम् आह ।
कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **कदा** धनुः उद्यम्य हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **प्रवृत्ते**(सति)धनुः उद्यम्य हृषीकेशमिदं वाक्यम् आह ।
कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **कस्मिन्** प्रवृत्ते धनुः उद्यम्य हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा **शस्त्रसम्पाते** प्रवृत्ते धनुः उद्यम्य हृषीकेशम् इदं वाक्यम् आह ।
कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसम्पाते प्रवृत्ते धनुः उद्यम्य **कदा** हृषीकेशम् इदं वाक्यम् आह ?
– कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसम्पाते प्रवृत्ते धनुः उद्यम्य **तदा** हृषीकेशम् इदं वाक्यम् आह ।
**कदा** कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसम्पाते प्रवृत्ते धनुः उद्यम्य तदा हृषीकेशम् इदं वाक्यम् आह ?
**अथ** कपिध्वजः पाण्डवः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसम्पाते प्रवृत्ते धनुः उद्यम्य तदा हृषीकेशम् इदं वाक्यम् आह ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ? – महीपते ।**

**तात्पर्यम्** – महीपते ! अथ अर्जुनः युद्धसन्नद्धान् कौरवान् अपश्यत् । तदा शस्त्रप्रहारोऽपि आरब्धः । अर्जुनः धनुः उद्यम्य श्रीकृष्णम् एवम् अवदत् ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | धनुरुद्यम्य | – | धनुः + उद्यम्य विसर्गसन्धिः (रेफः) |
| | हृषीकेशं तदा | – | हृषीकेशम् + तदा अनुस्वारसन्धिः |
| **(ख) समासः** | महीपते | – | मह्याः पतिः, तत्सम्बुद्धौ – षष्ठीतत्पुरुषः । |
| | कपिध्वजः | – | कपिः ध्वजे यस्य सः – बहुव्रीहिः । |
| | शस्त्रसम्पाते | – | शस्त्राणां सम्पातः, तस्मिन् – षष्ठीतत्पुरुषः । |
| | हृषीकेशम् | – | दृश्यताम् – 1.15 |
| **(ग) कृदन्तः** | व्यवस्थितान् | – | वि + अव + स्था + क्त (कर्तरि), तान् |
| | प्रवृत्ते | – | प्र + वृत् + क्त (कर्तरि), तस्मिन् । |
| | सम्पाते | – | सम् + पत् + घञ् (भावे), तस्मिन् । |
| **(घ) तद्धितान्तः** | पाण्डवः | – | दृश्यताम् – 1.1 |
| | धार्तराष्ट्रान् | – | दृश्यताम् – 1.19 |

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥1.21॥**

**पदच्छेदः** – सेनयोः, उभयोः, मध्ये, रथम्, स्थापय, मे, अच्युत ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| सेनयोः | – | आ.स्त्री. ष.द्विव. | उभयोः | – | आ.स्त्री. ष.द्विव. |
| मध्ये | – | अ.पुं. स. एक. | रथम् | – | अ. पुं. द्वि. एक. |
| स्थापय | – | स्था–पर. कर्तरि लोट् मपु. एक. | मे | – | अस्मद्–द. सर्व.ष.एक. |
| अच्युत | – | अ. पुं. सम्बो. एक. | | | |

**पदार्थः** – अच्युत = हे कृष्ण ! सेनयोः = सैन्ययोः, उभयोः = द्वयोः, मध्ये = अन्तरे, मे = मम, रथम् = स्यन्दनम्, स्थापय = नीत्वा स्थापय ।

**अन्वयः** – अच्युत ! सेनयोः उभयोः मध्ये मे रथं स्थापय ।

**आकाङ्क्षा** –

**स्थापय** ।

| | |
|---|---|
| **किं** स्थापय ? | – रथं स्थापय । |
| **कस्य** रथं स्थापय ? | – **मे** रथं स्थापय । |
| **कुत्र** मे रथं स्थापय ? | – **मध्ये** मे रथं स्थापय । |
| **कयोः** मध्ये मे रथं स्थापय ? | – **उभयोः** मध्ये मे रथं स्थापय । |
| **कयोः** उभयोः मध्ये मे रथं स्थापय ? | – **सेनयोः** उभयोः मध्ये मे रथं स्थापय । |
| **अस्मिन् वाक्ये सम्बोधनपदं किम्** ? | – **अच्युत** । |

**तात्पर्यम्** – हे कृष्ण ! अनयोः कौरवपाण्डवसेनयोः मध्यभागे मम रथं स्थापय ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | सेनयोरुभयोर्मध्ये | – | सेनयोः + उभयोः | विसर्गसन्धिः (रेफः) |
| | | – | उभयोः + मध्ये | विसर्गसन्धिः (रेफः) |
| | रथं स्थापय | – | रथम् + स्थापय | अनुस्वारसन्धिः |
| | मेऽच्युत | – | मे + अच्युत | पूर्वरूपसन्धिः |
| **(ख) समासः** | अच्युतः | – | न च्युतः – नञ्तत्पुरुषः । | |

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥1.22॥**

**पदच्छेदः** – यावत्, एतान्, निरीक्षे, अहम्, योद्धुकामान्, अवस्थितान् ।
कैः, मया, सह, योद्धव्यम्, अस्मिन्, रणसमुद्यमे ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरशणम् |
|---|---|---|---|---|---|
| यावत् | – | अव्ययम् | एतान् | – | एतद्–द.सर्व.पुं. द्वि. बहु. |
| निरीक्षे | – | निर् + ईक्ष्–आत्म.कर्तरि लट् उपु.एक. | अहम् | – | अस्मद्–द.सर्व. प्र. एक. |

| | | | |
|---|---|---|---|
| योद्धुकामान् | - अ.पुं. द्वि. बहु. | अवस्थितान् | - अ.पुं. द्वि. बहु. |
| कैः | - किम् -म.सर्व.पुं. तृ.बहु. | मया | - अस्मद्-द.सर्व. तृ. एक. |
| सह | - अव्ययम् | योद्धव्यम् | - अ.नपुं.प्र.एक. |
| अस्मिन् | - इदम्-म.सर्व.पुं. स. एक. | रणसमुद्यमे | - अ. पुं. स. एक. |

**पदार्थः** – यावत् = प्रथमम्, अहम् = अहम्, अस्मिन् = एतस्मिन्, रणसमुद्यमे = युद्धे, कैः सह = कैः साकम्, मया = मया, योद्धव्यम् = युद्धं कर्तव्यम् (इति ज्ञातुम्), एतान् = इमान्, अवस्थितान् = स्थितान्, योद्धुकामान् = युयुत्सून्, निरीक्षे = अवलोकयामि ।

**अन्वयः** – यावत् अहम् अस्मिन् रणसमुद्यमे कैः मया सह योद्धव्यम् (इति ज्ञातुम्) अवस्थितान् एतान् योद्धुकामान् निरीक्षे ।

**आकाङ्क्षा –**

**यावत् अहं निरीक्षे ।**

यावत् अहं **कान्** निरीक्षे ? – यावत् अहं **योद्धुकामान्** निरीक्षे ।

यावत् अहं **कथंभूतान्** योद्धुकामान् निरीक्षे ? – यावत् अहम् **अवस्थितान्** योद्धुकामान् निरीक्षे ।

यावत् अहं **कान्** योद्धुकामान् निरीक्षे ? – यावत् अहम् **एतान्** अवस्थितान् योद्धुकामान् निरीक्षे ।

यावत् अहं **(किं ज्ञातुम्)** एतान् अवस्थितान् योद्धुकामान् निरीक्षे ?

– यावत् अहं **कैः मया सह योद्धव्यम् (इति ज्ञातुम्)** एतान् अवस्थितान् योद्धुकामान् निरीक्षे ।

यावत् अहं **कुत्र** कैः मया सह योद्धव्यम् (इति ज्ञातुम्) एतान् अवस्थितान् योद्धुकामान् निरीक्षे ?

– यावत् अहं **रणसमुद्यमे** कैः मया सह योद्धव्यम् इति ज्ञातुम् एतान् अवस्थितान् योद्धुकामान् निरीक्षे ।

यावत् अहं **कस्मिन्** रणसमुद्यमे कैः मया सह योद्धव्यम् इति ज्ञातुम् एतान् अवस्थितान् योद्धुकामान् निरीक्षे ?

– यावत् अहं **अस्मिन्** रणसमुद्यमे कैः मया सह योद्धव्यम् इति ज्ञातुम् एतान् अवस्थितान् योद्धुकामान् निरीक्षे ।

**तात्पर्यम्** – युद्धं कर्तुं के के उपस्थिताः सन्ति, अस्मिन् च युद्धे कैः कैः सह मया योद्धव्यम् इति अहं ज्ञातुं प्रथमं तान् द्रष्टुम् इच्छामि । तस्मात् मम रथं तत्र स्थापय ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यावदेतान् | - यावत् + एतान् | जश्त्वसन्धिः |
| | निरीक्षेऽहम् | - निरीक्षे + अहम् | पूर्वरूपसन्धिः |
| | कैर्मया | - कैः + मया | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | रणसमुद्यमे | - रणस्य समुद्यमः, तस्मिन् - षष्ठीतत्पुरुषः । | |
| | योद्धुकामान् | - योद्धुं कामः येषां ते, तान् - बहुव्रीहिः । | |
| **(ग) कृदन्तः** | योद्धव्यम् | - युध् + तव्यत् (भावे) | |
| | अवस्थितः | - दृश्यताम् - 1.11 | |

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥1.23॥**

**पदच्छेदः** – योत्स्यमानान्, अवेक्षे, अहम्, ये, एते, अत्र, समागताः ।
धार्तराष्ट्रस्य, दुर्बुद्धेः, युद्धे, प्रियचिकीर्षवः ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| योत्स्यमानान् | – | अ.पुं. द्वि. बहु. | अवेक्षे | – | अव + ईक्ष् –आत्म.कर्तरि लट् उपु.एक. |
| अहम् | – | अस्मद्–द.प्र.एक. | ये | – | यद्–द. पुं. प्र. बहु. |
| एते | – | एतद्–द. पुं. प्र.बहु. | अत्र | – | अव्ययम् |
| समागताः | – | अ. पुं. प्र. बहु. | धार्तराष्ट्रस्य | – | अ. पुं. ष. एक. |
| दुर्बुद्धेः | – | इ.पुं. ष.एक. | युद्धे | – | अ. नपुं. स. एक. |
| प्रियचिकीर्षवः | – | उ. पुं. प्र. बहु. | | | |

**पदार्थः** – दुर्बुद्धेः = दुष्टमतेः, धार्तराष्ट्रस्य = दुर्योधनस्य, युद्धे = रणे, प्रियचिकीर्षवः = प्रियं कर्तुम् इच्छवः, ये एते = ये इमे, अत्र = अस्मिन् स्थाने, समागताः = आयाताः, अहम् = अहम्, योत्स्यमानान् = युद्धं करिष्यमाणान्, अवेक्षे = पश्यामि ।

**अन्वयः** – दुर्बुद्धेः धार्तराष्ट्रस्य युद्धे प्रियचिकीर्षवः ये एते अत्र समागताः (तान्) अहं योत्स्यमानान् अवेक्षे ।

**आकाङ्क्षा** –

**समागताः** ।

**के** समागताः ? – **एते** समागताः ।

**कीदृशाः** एते समागताः ? – **प्रियचिकीर्षवः** एते समागताः ।

**कस्य** प्रियचिकीर्षवः एते समागताः ? – **धार्तराष्ट्रस्य** प्रियचिकीर्षवः एते समागताः ।

**कीदृशस्य** धार्तराष्ट्रस्य प्रियचिकीर्षवः एते समागताः ?

– **दुर्बुद्धेः** धार्तराष्ट्रस्य प्रियचिकीर्षवः एते समागताः ।

दुर्बुद्धेः धार्तराष्ट्रस्य प्रियचिकीर्षवः **कुत्र** एते समागताः ?

– दुर्बुद्धेः धार्तराष्ट्रस्य प्रियचिकीर्षवः **अत्र** एते समागताः ।

दुर्बुद्धेः धार्तराष्ट्रस्य प्रियचिकीर्षवः अत्र ये समागताः **तान् किं करोषि** ?

– दुर्बुद्धेः धार्तराष्ट्रस्य प्रियचिकीर्षवः अत्र ये समागताः **(तान्) अहम् अवेक्षे** ।

दुर्बुद्धेः धार्तराष्ट्रस्य प्रियचिकीर्षवः अत्र ये समागताः **कीदृशान्** तान् त्वम् अवेक्षसे ?

– दुर्बुद्धेः धार्तराष्ट्रस्य प्रियचिकीर्षवः अत्र ये समागताः **योत्स्यमानान्** तान् अवेक्षे ।

**तात्पर्यम्** – युद्धं कर्तुं अत्र ये आगताः सन्ति ते सर्वे युद्धे दुर्बुद्धेः दुर्योधनस्य प्रियं कर्तुमेव उपस्थिताः सन्ति । तान् योद्धुम् इच्छतः योधान् अहं पश्यामि ।

**व्याकरणम्** –

**(क) सन्धिः**
अवेक्षेऽहम् – अवेक्षे + अहम् पूर्वरूपसन्धिः
एतेऽत्र – एते + अत्र पूर्वरूपसन्धिः

| | | | |
|---|---|---|---|
| | य एतेऽत्र | – | ये + एतेऽत्र यान्तवान्तसन्धिः, यलोपः, प्रकृतिभावः |
| | दुर्बुद्धेर्युद्धे | – | दुर्बुद्धेः + युद्धे विसर्गसन्धिः |
| **(ख) समासः** | प्रियचिकीर्षवः | – | प्रियं चिकीर्षवः – द्वितीयातत्पुरुषः। |
| **(ग) कृदन्तः** | युद्धे | – | युध् + क्त। (नपुंसके भावे), तस्मिन्। |
| | समागताः | – | सम् + आ + गम् + क्त। (कर्तरि) |
| | योत्स्यमानान् | – | युध् + लृट्, शानच्, तान्। |
| **(घ) तद्धितान्तः** | धार्तराष्ट्रस्य | – | दृश्यताम् – 1.19 |

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥1.24॥**
**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।**
**उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥1.25॥**

**पदच्छेदः –**
एवम्, उक्तः, हृषीकेशः, गुडाकेशेन, भारत।
सेनयोः, उभयोः, मध्ये, स्थापयित्वा, रथोत्तमम् ॥
भीष्मद्रोणप्रमुखतः, सर्वेषाम्, च, महीक्षिताम्।
उवाच, पार्थ, पश्य, एतान्, समवेतान्, कुरून्, इति ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| एवम् | – | अव्ययम् | उक्तः | – | अ. पुं. प्र. एक. |
| हृषीकेशः | – | अ. पुं. प्र. एक. | गुडाकेशेन | – | अ. पुं. तृ. एक. |
| भारत | – | अ. पुं. सम्बो. एक. | सेनयोः | – | आ. स्त्री. ष. द्विव. |
| उभयोः | – | आ. स्त्री. ष. द्विव. | मध्ये | – | अ. पुं. स. एक. |
| स्थापयित्वा | – | क्त्वान्तम् अव्ययम् | रथोत्तमम् | – | अ. पुं. द्वि. एक. |
| भीष्मद्रोणप्रमुखतः | – | अव्ययम् | सर्वेषाम् | – | अ.पुं.सर्व. ष. बहु. |
| च | – | अव्ययम् | महीक्षिताम् | – | महीक्षित्–त. पुं. ष. बहु. |
| उवाच | – | ब्रूञ्–पर.कर्तरि लिट् प्रपु.एक. | पार्थ | – | अ. पुं. सम्बो. एक. |
| पश्य | – | दृश्–पर.कर्तरि लोट् मपु. एक. | एतान् | – | एतद्–द. पुं. द्वि. बहु. |
| समवेतान् | – | अ. पुं. द्वि. बहु. | कुरून् | – | उ. पुं. द्वि. बहु. |
| इति | – | अव्ययम् | | | |

**पदार्थः –** भारत = हे धृतराष्ट्र ! एवम् = इत्थम्, गुडाकेशेन = अर्जुनेन, उक्तः = कथितः, हृषीकेशः = कृष्णः, सेनयोः = सैन्ययोः, उभयोः = द्वयोः, मध्ये = अन्तरे, भीष्मद्रोणप्रमुखतः = भीष्मद्रोणादीनां सम्मुखे, सर्वेषाम् = अखिलानाम्, महीक्षितां च = राज्ञां च (सम्मुखे), रथोत्तमम् = रथश्रेष्ठम्, स्थापयित्वा = अवस्थाप्य, पार्थ = अर्जुन ! एतान् = इमान्, समवेतान् = संमिलितान्, कुरून् = कुरुवंशीयान्, पश्य =

अवलोकय, इति = एवम्, उवाच = अब्रवीत्।

**अन्वयः –** भारत ! एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षितां (प्रमुखतः) रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

**आकाङ्क्षा –**

**उवाच ।**

**कः** उवाच ? – **हृषीकेशः** उवाच ।

**कथंभूतः** हृषीकेशः उवाच ? – **उक्तः** हृषीकेशः उवाच ।

**कथम्** उक्तः हृषीकेशः उवाच ? – **एवम्** उक्तः हृषीकेशः उवाच ।

एवं **केन** उक्तः हृषीकेशः उवाच ? – एवं **गुडाकेशेन** उक्तः हृषीकेशः उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः **किम्** उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः **'पार्थ ! एतान् समवेतान् कुरून् पश्य'** इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः **किं कृत्वा** 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः **स्थापयित्वा** 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः **कं** स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः **रथोत्तमं** स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः **कुत्र** रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच?

– एवं गुडाकेशेन उक्तः हृषीकेशः **मध्ये** रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः **कयोः** मध्ये रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः **उभयोः** मध्ये रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः **कयोः** उभयोः मध्ये रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः **सेनयोः** उभयोः मध्ये रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये **कुत्र** रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये **भीष्मद्रोणप्रमुखतः** रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये भीष्मद्रोणप्रमुखतः **पुनश्च केषां** (प्रमुखतः) रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये भीष्मद्रोणप्रमुखतः **महीक्षितां** च (प्रमुखतः) रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये भीष्मद्रोणप्रमुखतः **कतीनां** महीक्षितां च प्रमुखतः

रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ?

– एवं गुडाकेशेन उक्तः हृषीकेशः सेनयोः उभयोः मध्ये भीष्मद्रोणप्रमुखतः **सर्वेषां** च महीक्षितां प्रमुखतः रथोत्तमं स्थापयित्वा 'पार्थ ! एतान् समवेतान् कुरून् पश्य' इति उवाच ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ? – भारत ।**

**तात्पर्यम् –** अर्जुनः भगवन्तं श्रीकृष्णं यदा एवम् उक्तवान् तदा श्रीकृष्णः तयोः सेनयोः मध्ये रथं स्थापितवान् । भीष्मस्य द्रोणस्य अन्येषां राज्ञां च सम्मुखे रथं संस्थाप्य सः "अर्जुन ! युद्धं कर्तुम् उपस्थितान् एतान् कौरवपक्षीयान् पश्य" इति अवदत् ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| एवमुक्तो हृषीकेशः | – एवमुक्तः + हृषीकेशः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः | |
| हृषीकेशो गुडाकेशेन | – हृषीकेशः + गुडाकेशेन | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः | |
| सेनयोरुभयोर्मध्ये | – सेनयोः + उभयोः | विसर्गसन्धिः (रेफः) | |
| | – उभयोः + मध्ये | विसर्गसन्धिः (रेफः) | |
| सर्वेषां च | – सर्वेषाम् + च | अनुस्वारसन्धिः | |

**(ख) समासः**

| | |
|---|---|
| गुडाकेशः | – गुडाकायाः ईशः, तेन – बहुव्रीहिः । |
| हृषीकेशः | – दृश्यताम् – 1.15 |
| भीष्मद्रोणप्रमुखतः | – भीष्मश्च द्रोणश्च भीष्मद्रोणौ – द्वन्द्वसमासः । |
| | – भीष्मद्रोणयोः प्रमुखम्, तस्मिन् – षष्ठीतत्पुरुषः । ततः स्वार्थे तसिः। |
| रथोत्तमः | – रथेषु उत्तमः, तम् – सप्तमीतत्पुरुषः । |

**(ग) कृदन्तः**

| | |
|---|---|
| उक्तः | – वच् + क्त । (कर्मणि) |
| स्थापयित्वा | – स्था – णिच् (प्रेरणार्थे) + क्त्वा |
| समवेतान् | – दृश्यताम् – 1.1 |

**(घ) तद्धितान्तः**

| | |
|---|---|
| भारतः | – भरत + अण् (अपत्यार्थे) । भरतस्य गोत्रापत्यं पुमान् । |
| महीक्षिताम् | – मही + क्षित् + क्विप् (कर्तरि), तेषाम् । |
| पार्थ | – पृथा + अण् (अपत्यार्थे) । पृथायाः अपत्यं पुमान्, तत्सम्बुद्धौ । |

**तत्रापश्यत् स्थितान् पार्थः पितृनथ पितामहान्**
**आचार्यान्मातुलान्भ्रातृन्पुत्रान्पौत्रान्सखींस्तथा ॥1.26॥**
**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।**

**पदच्छेदः –** तत्र, अपश्यत्, स्थितान्, पार्थः, पितृन्, अथ, पितामहान् ।
आचार्यान्, मातुलान्, भ्रातृन्, पुत्रान्, पौत्रान्, सखीन्, तथा ॥
श्वशुरान्, सुहृदः, च, एव, सेनयोः, उभयोः, अपि ।

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| तत्र | – | अव्ययम् | अपश्यत् | – | दृशिर्–पर. लङ्. प्रपु. एक. |
| स्थितान् | – | अ. पुं. द्वि. बहु. | पार्थः | – | अ. पुं. प्र. एक. |
| पितॄन् | – | पितृ–ऋ. पुं. द्वि. बहु. | अथ | – | अव्ययम् |
| पितामहान् | – | अ. पुं. द्वि. बहु. | आचार्यान् | – | अ. पुं. द्वि. बहु. |
| मातुलान् | – | अ. पुं. द्वि. बहु. | भ्रातॄन् | – | भ्रातृ–ऋ. पुं. द्वि. बहु. |
| पुत्रान् | – | अ. पुं. द्वि. बहु. | पौत्रान् | – | अ. पुं. द्वि. बहु. |
| सखीन् | – | सखि–इ. पुं. द्वि. बहु. | तथा | – | अव्ययम् |
| श्वशुरान् | – | अ. पुं. द्वि. बहु. | सुहृदः | – | सुहृद्–द. पुं. द्वि. बहु |
| च | – | अव्ययम् | एव | – | अव्ययम् |
| सेनयोः | – | आ. स्त्री. ष. द्विव. | उभयोः | – | आ. स्त्री. ष. द्विव. |
| अपि | – | अव्ययम् | | | |

**पदार्थः –** अथ = ततः, पार्थः = अर्जुनः, तत्र = तस्मिन् प्रदेशे, स्थितान् = वर्तमानान्, पितॄन् = पितृतुल्यान्, पितामहान् = पितुः पितॄन्, आचार्यान् = गुरून्, मातुलान् = मातृसहोदरान्, भ्रातॄन् = सहोदरान्, पुत्रान् = पुत्रतुल्यान्, पौत्रान् = पुत्रपुत्रान्, सखीन् = मित्राणि, श्वशुरान् = भार्यायाः पितॄन्, सुहृदः च = कृतोपकारान् च, उभयोः = द्वयोः, अपि = अपि, सेनयोः = सैन्ययोः, अपश्यत् = दृष्टवान्।

**अन्वयः –** अथ पार्थः तत्र स्थितान् पितॄन् पितामहान् आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखीन् श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत्।

**आकाङ्क्षा –**

**अपश्यत्**।

**कः** अपश्यत् ? – **पार्थः** अपश्यत्।

पार्थः **कान् कान्** अपश्यत् ?

– पार्थः **पितॄन् पितामहान् आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखीन् श्वशुरान् सुहृदः च** अपश्यत्।

पार्थः पितॄन् पितामहान् आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखीन् श्वशुरान् सुहृदः च **कुत्र** अपश्यत् ?

– पार्थः पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च **सेनयोः** अपश्यत्।

पार्थः पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च **कयोः** सेनयोः अपि अपश्यत् ?

– पार्थः पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च **उभयोः** अपि सेनयोः अपश्यत्।

पार्थः **कथंभूतान्** पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत् ?

– पार्थः **स्थितान्** पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत्।

पार्थः **कुत्र** स्थितान् पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत् ?

– पार्थः **तत्र** स्थितान् पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत् ।

**कदा** पार्थः तत्र स्थितान् पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत् ?

– **अथ** पार्थः तत्र स्थितान् पितॄन् पितामहान् .......... श्वशुरान् सुहृदः च उभयोः अपि सेनयोः अपश्यत् ।

**तात्पर्यम्** – तयोः सेनयोः अर्जुनः स्वबान्धवान्, गुरून्, मित्राणि च अपश्यत् ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| तत्रापश्यत् | – | तत्र + अपश्यत् | सवर्णदीर्घसन्धिः |
| सखींस्तथा | – | सखीन् + तथा | रुत्वम् अनुस्वारागामः सत्वं च |
| सुहृदश्चैव | – | सुहृदः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| चैव | – | च + एव | वृद्धिसन्धिः |
| सेनयोरुभयोरपि | – | सेनयोः + उभयोः | विसर्गसन्धिः (रेफः) |
| उभयोरपि | – | उभयोः + अपि | विसर्गसन्धिः (रेफः) |

**(घ) तद्धितान्तः**

| | | |
|---|---|---|
| पार्थः | – | दृश्यताम् – 1.25 |
| पितामहः | – | दृश्यताम् – 1.12 |
| मातुलः | – | मातृ + डुलच् (भ्राता इत्यर्थे) । मातुः भ्राता मातुलः । |

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥1.27॥**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।**

**पदच्छेदः** – तान्, समीक्ष्य, सः, कौन्तेयः, सर्वान्, बन्धून्, अवस्थितान् ।
कृपया, परया, आविष्टः विषीदन्, इदम्, अब्रवीत् ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| तान् | – | तद्–द. सर्व. पुं. द्वि. बहु. | समीक्ष्य | – | ल्यबन्तम् अव्ययम् |
| सः | – | तद्–द. सर्व. पुं. प्र. एक. | कौन्तेयः | – | अ. पुं. प्र. एक. |
| सर्वान् | – | सर्व. अ. पुं. द्वि. बहु. | बन्धून् | – | उ. पुं. द्वि. बहु. |
| अवस्थितान् | – | अ. पुं. द्वि. बहु. | कृपया | – | आ. स्त्री. तृ. एक. |
| परया | – | आ. स्त्री. तृ. एक. | आविष्टः | – | अ. पुं. प्र. एक. |
| विषीदन् | – | विषीदत्–त. पुं. प्र. एक. | इदम् | – | इदम्–म. सर्व नपुं. द्वि. एक. |
| अब्रवीत् | – | ब्रूञ्–पर. लङ्. प्रपु.एक. | | | |

**पदार्थः** – परया = अधिकया, कृपया = दयया, आविष्टः = सहितः, सः कौन्तेयः = सः अर्जुनः, तान् = तान्, सर्वान् = अखिलान्, अवस्थितान् = उपस्थितान्, बन्धून् = बान्धवान्, समीक्ष्य = अवलोक्य, विषीदन् = सन्तप्यमानः, इदम् = एतत्, अब्रवीत् = अवदत् ।

**अन्वयः** – परया कृपया आविष्टः सः कौन्तेयः तान् सर्वान् अवस्थितान् बन्धून् समीक्ष्य विषीदन् इदम् अब्रवीत् ।

**आकाङ्क्षा –**

**अब्रवीत् ।**

**कः** अब्रवीत् ? – **कौन्तेयः** अब्रवीत् ।

**कः** कौन्तेयः अब्रवीत् ? – **सः** कौन्तेयः अब्रवीत् ।

**कथंभूतः** सः कौन्तेयः अब्रवीत् ? – **आविष्टः** सः कौन्तेयः अब्रवीत् ।

**कया** आविष्टः सः कौन्तेयः अब्रवीत् ? – **कृपया** आविष्टः सः कौन्तेयः अब्रवीत् ।

**कीदृश्या** कृपया आविष्टः सः कौन्तेयः अब्रवीत् ? – **परया** कृपया आविष्टः सः कौन्तेयः अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः **किं कुर्वन्** अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः **विषीदन्** अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः विषीदन् **किम्** अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः विषीदन् **इदम्** अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः **किं कृत्वा** विषीदन् इदम् अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः **समीक्ष्य** विषीदन् इदम् अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः **कान्** समीक्ष्य विषीदन् इदम् अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः **तान्** समीक्ष्य विषीदन् इदम् अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः **कान्** तान् समीक्ष्य विषीदन् इदम् अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः तान् **बन्धून्** समीक्ष्य विषीदन् इदम् अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः तान् **कथंभूतान्** बन्धून् समीक्ष्य विषीदन् इदम् अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः तान् **अवस्थितान्** बन्धून् समीक्ष्य विषीदन् इदम् अब्रवीत् ।

परया कृपया आविष्टः सः कौन्तेयः तान् **कति** अवस्थितान् बन्धून् समीक्ष्य विषीदन् इदम् अब्रवीत् ?

– परया कृपया आविष्टः सः कौन्तेयः तान् **सर्वान्** अवस्थितान् बन्धून् समीक्ष्य विषीदन् इदम् अब्रवीत् ।

**तात्पर्यम् –** अर्जुनः तत्र सम्मिलितान् सर्वान् बान्धवान् दृष्ट्वा करुणया आविष्टः अभवत् । सः अत्यन्तं विषादम् अनुभवन् इदं वाक्यम् अवदत् ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | स कौन्तेयः | – सः कौन्तेयः | विसर्गसन्धिः (लोपः) |
| | परयाविष्टः | – परया + आविष्टः | सवर्णदीर्घसन्धिः |
| | आविष्टो विषीदन् | – आविष्टः + विषीदन् | विसर्गसन्धिः(सकारः) रेफः, उकारः गुणः |
| | विषीदन्निदम् | – विषीदन् + इदम् | ङमुडागमसन्धिः |
| **(ख) कृदन्तः** | आविष्टः | – आ+ विश् + क्त (कर्मणि) | |
| | अवस्थितान् | – दृश्यताम् – 1.11 | |
| | समीक्ष्य | – सम् + ईक्ष् + ल्यप् | |
| | विषीदन् | – वि + सद् + शतृ (कर्तरि) | |

(घ) **तद्धितान्तः** कौन्तेयः - कुन्ती+ढक् (अपत्यार्थे, एय इत्यादेशः) कुन्त्याः अपत्यं पुमान्।

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।।1.28।।**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**

**पदच्छेदः –** दृष्ट्वा, इमम्, स्वजनम्, कृष्ण, युयुत्सुम्, समुपस्थितम्।
सीदन्ति, मम, गात्राणि, मुखम्, च, परिशुष्यति ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| दृष्ट्वा | - | अव्ययम् | इमम् | - | इदम्–म. नपुं. द्वि. एक. |
| स्वजनम् | - | अ. नपुं. द्वि. एक. | कृष्ण | - | अ. पुं. सम्बो. एक. |
| युयुत्सुम् | - | उ. पुं. द्वि. एक. | समुपस्थितम् | - | अ. नपुं. द्वि. एक. |
| सीदन्ति | - | सद्–पर.कर्तरि लट् प्रपु.बहु. | मम | - | अस्मद्–द. सर्व. ष. एक. |
| गात्राणि | - | अ. नपुं. प्र. बहु. | मुखम् | - | अ. नपुं. प्र. एक. |
| च | - | अव्ययम् | परिशुष्यति | - | परि + शुष्–पर.कर्तरि लट् प्रपु. एक. |

**पदार्थः –** कृष्ण = मधुसूदन ! युयुत्सुम् = योद्धुमिच्छुम्, समुपस्थितम् = समीपे वर्तमानम्, इमम् = अमुम्, स्वजनम् = आत्मीयजनम्, दृष्ट्वा = अवलोक्य, मम = मे, गात्राणि = अङ्गानि, सीदन्ति = शिथिलीभवन्ति मुखं च = वदनं च, परिशुष्यति = शुष्कं भवति।

**अन्वयः –** कृष्ण ! युयुत्सुं समुपस्थितम् इमं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति, मुखं च परिशुष्यति।

**आकाङ्क्षा –**

**सीदन्ति ।**

**कानि** सीदन्ति ? – **गात्राणि** सीदन्ति ।

**कस्य** गात्राणि सीदन्ति ? – **मम** गात्राणि सीदन्ति ।

**किं कृत्वा** मम गात्राणि सीदन्ति ? – **दृष्ट्वा** मम गात्राणि सीदन्ति ।

**कं** दृष्ट्वा मम गात्राणि सीदन्ति ? – **इमं** दृष्ट्वा मम गात्राणि सीदन्ति ।

तं **कं** दृष्ट्वा मम गात्राणि सीदन्ति ? – इमं **स्वजनं** दृष्ट्वा मम गात्राणि सीदन्ति ।

**कथंभूतं** तं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति ? – **समुपस्थितम्** इमं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति।

**पुनश्च कीदृशं** समुपस्थितं तं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति ?
– **युयुत्सुं** समुपस्थितम् इमं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति ।

**परिशुष्यति च ।**

**किं** च परिशुष्यति ? – **मुखं** च परिशुष्यति ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ? – कृष्ण ।**

**तात्पर्यम् –** हे कृष्ण ! युद्धं कर्तुं समुपस्थिताः एते सर्वेऽपि मदीयाः एव। एतान् पश्यतः मम अङ्गानि सीदन्ति। मुखं च शुष्कं जायते।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | दृष्ट्वेमम् | – | दृष्ट्वा + इमम् | गुणसन्धिः |
| | दृष्ट्वेमं स्वजनम् | – | दृष्ट्वेमम् + स्वजनम् | अनुस्वारसन्धिः |
| | स्वजनं कृष्ण | – | स्वजनम् + कृष्ण | अनुस्वारसन्धिः |
| | युयुत्सुं समुपस्थितम् | – | युयुत्सुम् + समुपस्थितम् | अनुस्वारसन्धिः |
| | मुखं च | – | मुखम् + च | अनुस्वारसन्धिः |
| **(ख) समासः** | स्वजनम् | – | स्वस्य जनः, तम् – षष्ठीतत्पुरुषः । | |
| **(ग) कृदन्तः** | समुपस्थितम् | – | सम् + उप + स्था + क्त । (कर्तरि), तम् । | |
| | दृष्ट्वा | – | दृश्यताम् – 1.2 | |

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥1.29॥**
**गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते ।**
**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥1.30॥**

**पदच्छेदः –** वेपथुः, च, शरीरे, मे, रोमहर्षः, च, जायते ॥
गाण्डीवम्, स्रंसते, हस्तात्, त्वक्, च, एव, परिदह्यते ।
न, च, शक्नोमि, अवस्थातुम्, भ्रमति, इव, च, मे, मनः ॥

**पदपरिचयः –**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| वेपथुः | – | उ. पुं. प्र. एक. | च | – | अव्ययम् |
| शरीरे | – | अ. नपुं. स. एक. | मे | – | अस्मद्–द. सर्व. ष. एक. |
| रोमहर्षः | – | अ. पुं. प्र. एक. | जायते | – | जन्–आत्म. कर्तरि लट्. प्रपु. एक. |
| गाण्डीवम् | – | अ. नपुं. प्र. एक. | स्रंसते | – | स्रंस्–आत्म. कर्तरि लट्. प्रपु. एक. |
| हस्तात् | – | अ. पुं. पं. एक. | त्वक् | – | त्वच्–च. स्त्री. प्र. एक. |
| एव | – | अव्ययम् | परिदह्यते | – | परि +दह्–कर्मणि लट्. प्रपु. एक. |
| न | – | अव्ययम् | शक्नोमि | – | शक्–पर. कर्तरि लट्. उप. एक. |
| अवस्थातुम् | – | अव्ययम् | भ्रमति | – | भ्रम्–पर. कर्तरि लट्. प्रपु. एक. |
| इव | – | अव्ययम् | मनः | – | मनस्–स. नपुं. प्र. एक. |

**पदार्थः –** रोमहर्षः = रोमाञ्चः, मे = मम, शरीरे = देहे, वेपथुः = कम्पनम्, जायते = उद्भवति, हस्तात् = करात्, गाण्डीवम् = गाण्डीवनामकं धनुः, स्रंसते = भ्रश्यति, त्वक् च एव = चर्म च, परिदह्यते = सन्तप्यते, अवस्थातुम् = स्थातुम्, न शक्नोमि = नहि प्रभवामि, मनः = चित्तम्, भ्रमति इव = भ्राम्यति इति मन्ये ।

**अन्वयः –** रोमहर्षः वेपथुश्च मे शरीरे जायते । हस्तात् गाण्डीवं स्रंसते । त्वक् च एव परिदह्यते । अवस्थातुं न शक्नोमि । मे मनः भ्रमति इव ।

**आकाङ्क्षा –**

| | |
|---|---|
| **जायते।** | |
| **कः** जायते ? | – **रोमहर्षः** जायते। |
| रोमहर्षः **पुनश्च कः** जायते ? | – रोमहर्षः **वेपथुश्च** जायते। |
| रोमहर्षः वेपथुश्च **कुत्र** जायते ? | – रोमहर्षः वेपथुश्च **शरीरे** जायते। |
| रोमहर्षः वेपथुश्च **कस्य** शरीरे जायते ? | – रोमहर्षः वेपथुश्च **मे** शरीरे जायते। |
| **स्रंसते।** | |
| **किं** स्रंसते ? | – **गाण्डीवं** स्रंसते। |
| **कस्मात्** गाण्डीवं स्रंसते ? | – **हस्तात्** गाण्डीवं स्रंसते। |
| **परिदह्यते।** | |
| **किं** च एव परिदह्यते ? | – **त्वक् च एव** परिदह्यते। |
| **न च शक्नोमि।** | |
| **किं कर्तुं** न शक्नोमि ? | – **अवस्थातुं** न च शक्नोमि। |
| **भ्रमति इव।** | |
| **किं** भ्रमति इव ? | – **मनः** भ्रमति इव। |
| **कस्य** मनः भ्रमति इव ? | – **मे** मनः भ्रमति इव। |

**तात्पर्यम् –** मम शरीरे कम्पः जायते। अहं रोमाञ्चम् अनुभवन् अस्मि। गाण्डीवं धनुः मम हस्तात् स्रंसते। मम त्वक् दग्धा इव भवति। अहं सम्यक् स्थातुं न शक्नोमि। मम मनः भ्रमति इव।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | वेपथुश्च | – वेपथुः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | रोमहर्षश्च | – रोमहर्षः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | गाण्डीवं स्रंसते | – गाण्डीवम् + स्रंसते | अनुस्वारसन्धिः |
| | चैव | – च + एव | वृद्धिसन्धिः |
| | शक्नोम्यवस्थातुम् | – शक्नोमि + अवस्थातुम् | यण्सन्धिः |
| | भ्रमतीव | – भ्रमति + इव | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | रोमहर्षः | – रोम्णां हर्षः – षष्ठीतत्पुरुषः। | |
| **(ग) कृदन्तः** | अवस्थातुम् | – अव + स्था + तुमुन् | |
| **(घ) तद्धितान्तः** | गाण्डीवम् | – गाण्डि + व। पूर्वपदस्य दीर्घो विकल्पेन।<br>गाण्डिः ग्रन्थिः अस्य अस्मिन् वा अस्ति इति गाण्डीवम्। | |

**निमित्तानि च पश्यामि विपरीतानि केशव।**
**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥1.31॥**

**पदच्छेदः** – निमित्तानि, च, पश्यामि, विपरीतानि, केशव ।
न, च, श्रेयः, अनुपश्यामि, हत्वा, स्वजनम्, आहवे ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| निमित्तानि | – | अ.नपुं.प्र.बहु. | च | – | अव्ययम् |
| पश्यामि | – | दृशिर्–पर. कर्तरि लट्. उपु.एक. | विपरीतानि | – | अ.नपुं.द्वि.बहु. |
| केशव | – | अ.पुं.सम्बो.एक. | न | – | अव्ययम् |
| श्रेयः | – | श्रेयस्– स.नपुं.द्वि.एक. | अनुपश्यामि | – | अनु+दृश्–पर.कर्तरि लट्.उपु.एक. |
| हत्वा | – | अव्ययम् | स्वजनम् | – | अ.पुं.द्वि.एक. |
| आहवे | – | अ.पुं.स.एक. | | | |

**पदार्थः** – विपरीतानि = प्रतिकूलानि, निमित्तानि च = शकुनानि अपि, पश्यामि = ईक्षे, आहवे = युद्धे, स्वजनम् = बन्धुम्, हत्वा = संहत्य, श्रेयः च = शुभं च, न = नहि, अनुपश्यामि = भावयामि ।

**अन्वयः** – केशव ! विपरीतानि च निमित्तानि पश्यामि । आहवे स्वजनं हत्वा श्रेयः च न अनुपश्यामि ।

**आकाङ्क्षा –**

**पश्यामि** ।
**कानि** च पश्यामि ? – **निमित्तानि** च पश्यामि ।
**कीदृशानि** च निमित्तानि पश्यामि ? – **विपरीतानि** च निमित्तानि पश्यामि ।
**अस्मिन् वाक्ये सम्बोधनपदं किम् ?** – **केशव** ।
**अनुपश्यामि** ।
**किं** च न अनुपश्यामि ? – **श्रेयः** च न अनुपश्यामि ।
**किं कृत्वा** श्रेयः च न अनुपश्यामि ? – **हत्वा** श्रेयः च न अनुपश्यामि ।
**कं** हत्वा श्रेयः च न अनुपश्यामि ? – **स्वजनं** हत्वा श्रेयः च न अनुपश्यामि ।
**कुत्र** स्वजनं हत्वा श्रेयः च न अनुपश्यामि ? – **आहवे** स्वजनं हत्वा श्रेयः च न अनुपश्यामि ।

**तात्पर्यम्** – हे केशव ! अहं बहूनि दुश्शकुनानि पश्यामि । युद्धे स्वीयान् बान्धवान् हत्वा किञ्चिदपि श्रेयः न प्राप्नोमि ।

**व्याकरणम् –**

**(क) सन्धिः** श्रेयोऽनुपश्यामि – श्रेयः + अनुपश्यामि विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

**(ख) समासः** स्वजनम् – दृश्यताम् – 1.28

**(ग) कृदन्तः** हत्वा – हन् + क्त्वा ।
विपरीतानि – वि + परि + इण् + क्त (कर्तरि) ।

**(घ) तद्धितान्तः** केशवः – केश + व । प्रशस्ताः केशाः सन्ति अस्य अस्मिन् वा ।

(केशिनामकस्य हन्ता इत्यतः अपि केशवः इति नाम ।)
यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन ।
तस्मात् केशवनाम्ना त्वं लोके ज्ञेयो भविष्यसि ॥ - विष्णुपुराणम्

**न काङ्क्षे विजयं कृष्ण ! न च राज्यं सुखानि च ।**
**किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा ॥1.32॥**

**पदच्छेदः –** न, काङ्क्षे, विजयम्, कृष्ण, न, च, राज्यम्, सुखानि, च ।
किम्, नः, राज्येन, गोविन्द, किम्, भोगैः, जीवितेन, वा ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| न | – | अव्ययम् | काङ्क्षे | – | काङ्क्ष्-आत्म.कर्तरि लट्. उपु.एक. |
| विजयम् | – | अ. पुं. द्वि. एक. | कृष्ण | – | अ. पुं. संबो. एक. |
| च | – | अव्ययम् | राज्यम् | – | अ. नपुं. द्वि. एक. |
| सुखानि | – | अ. नपुं. द्वि.बहु. | किम् | – | किम् - म. नपुं. प्र. एक. |
| नः | – | अस्मद्-द. सर्व. ष. बहु. | राज्येन | – | अ. नपुं. तृ. एक. |
| गोविन्द | – | अ. पुं. सम्बो. एक. | भोगैः | – | अ. पुं. तृ. बहु. |
| जीवितेन | – | अ. नपुं. तृ. एक. | वा | – | अव्ययम् |

**पदार्थः –** कृष्ण = हे वासुदेव ! विजयम् = जयम्, राज्यम् = राष्ट्रम्, सुखानि च = भोगान् अपि, न काङ्क्षे = न अभिलषामि, गोविन्द = हे कृष्ण ! राज्येन = राष्ट्रेण, भोगैः = भोग्यवस्तुभिः, किम् = किं प्रयोजनम्, जीवितेन वा = जीवनेन वा, नः = अस्माकम् ।

**अन्वयः –** कृष्ण ! विजयं राज्यं सुखानि च न काङ्क्षे । गोविन्द ! राज्येन भोगैः जीवितेन वा नः किम् ?

**आकाङ्क्षा –**

**न काङ्क्षे ।**

**कां** न काङ्क्षे ? – विजयं न काङ्क्षे ।

विजयं **पुनश्च किं** न काङ्क्षे ? – विजयं **राज्यं** च न काङ्क्षे ।

विजयं राज्यं **पुनश्च कानि** न काङ्क्षे ? – विजयं राज्यं **सुखानि** च न काङ्क्षे ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ?** – **कृष्ण ।**

**राज्येन किम्** ?

राज्येन **पुनश्च कैः** किम् ? – राज्येन **भोगैश्च** किम् ।

राज्येन भोगैः **पुनश्च केन वा** किम् ? – राज्येन भोगैः **जीवितेन वा** किम् ।

राज्येन भोगैः जीवितेन वा **केषां** किम् ? – राज्येन भोगैः जीवितेन वा **नः** किम् ?

**अस्मिन् वाक्ये सम्बोधनपदं किम् ?** – **गोविन्द ।**

**तात्पर्यम्** – हे कृष्ण ! अहं विजयं न इच्छमि । अहं राज्यं सुखानि वा नेच्छामि । हे गोविन्द ! अस्माकं राज्येन भोगैः प्राणैः वा किं प्रयोजनम् ?

**व्याकरणम्** –

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| विजयं कृष्ण | – | विजयम् + कृष्ण | अनुस्वारसन्धिः |
| राज्यं सुखानि | – | राज्यम् + सुखानि | अनुस्वारसन्धिः |
| किं नः | – | किम् + नः | अनुस्वारसन्धिः |
| नो राज्येन | – | नः + राज्येन | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| किं भोगैर्जीवितेन | – | किम् + भोगैर्जीवितेन | अनुस्वारसन्धिः |
| भोगैर्जीवितेन | – | भोगैः + जीवितेन | विसर्गसन्धिः (रेफः) |

**(ख) कृदन्तः** गोविन्दः – गो + विन्द + श (कर्तरि) । गाः विन्दति इति गोविन्दः । धेनूः प्राप्नोति इत्यर्थः ।

**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥1.33॥**
**आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।**
**मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ॥1.34॥**

**पदच्छेदः** –

येषाम्, अर्थे, काङ्क्षितम्, नः, राज्यम्, भोगाः, सुखानि, च ।
ते, इमे, अवस्थिताः, युद्धे, प्राणान्, त्यक्त्वा, धनानि, च ॥
आचार्याः, पितरः, पुत्राः, तथा, एव, च, पितामहाः ।
मातुलाः, श्वशुराः, पौत्राः, श्यालाः, सम्बन्धिनः, तथा ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| येषाम् | – | यद्–द. सर्व. नपुं. ष.बहु. | अर्थे | – | अव्ययम् |
| काङ्क्षितम् | – | अ. नपुं. प्र. एक. | नः | – | अस्मद्–द. सर्व ष.बहु. |
| राज्यम् | – | अ. नपुं .प्र. एक. | भोगाः | – | अ. पुं. प्र.बहु. |
| सुखानि | – | अ. नपुं. प्र.बहु. | च | – | अव्ययम् |
| ते | – | तद्–द.सर्व.पुं.प्र.बहु. | इमे | – | इदम्–म. सर्व पुं. प्र.बहु. |
| अवस्थिताः | – | अ. पुं. प्र.बहु. | युद्धे | – | अ. नपुं. स. एक. |
| प्राणान् | – | अ. पुं. द्वि.बहु. | त्यक्त्वा | – | अव्ययम् |
| धनानि | – | अ. नपुं. द्वि.बहु. | आचार्याः | – | अ. पुं. प्र.बहु. |
| पितरः | – | पितृ – ऋ. पुं. प्र.बहु. | पुत्राः | – | अ. पुं. प्र.बहु. |
| तथा | – | अव्ययम् | एव | – | अव्ययम् |

| | | | | | |
|---|---|---|---|---|---|
| पितामहाः | – | अ. पुं. प्र.बहु. | मातुलाः | – | अ. पुं. प्र.बहु. |
| श्वशुराः | – | अ. पुं. प्र.बहु. | पौत्राः | – | अ. पुं. प्र.बहु. |
| श्यालाः | – | अ. पुं. प्र.बहु. | सम्बन्धिनः | – | सम्बन्धिन्–न. पुं. प्र.बहु. |

**पदार्थः** – येषाम् = येषां जनानाम्, अर्थे = कृते, राज्यम् = राष्ट्रम्, भोगाः = भोग्यवस्तूनि, सुखानि च = सुखदायकानि वस्तूनि च, काङ्क्षितम् = वाञ्छितम्, ते = तादृशाः, इमे = एते, आचार्याः = गुरवः, पितरः = पितरः, पुत्राः = पुत्राः, तथा एव = एवम्, पितामहाः = पितामहाः, मातुलाः = मातुलाः, श्वशुराः = श्वशुराः, पौत्राः = पौत्राः, श्यालाः = भार्यायाः सोदराः, तथा = तथा, सम्बन्धिनः = बान्धवाः, प्राणान् = असून्, धनानि च = अर्थान् च, त्यक्त्वा = विसृज्य, युद्धे = रणे, अवस्थिताः = स्थिताः ।

**अन्वयः** – येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते इमे आचार्याः पितरः पुत्राः तथा एव पितामहाः मातुलाः श्वशुराः पौत्राः श्यालाः तथा सम्बन्धिनः प्राणान् धनानि च त्यक्त्वा युद्धे अवस्थिताः ।

**आकाङ्क्षा** –

**काङ्क्षितम्** ।

**किं किं** काङ्क्षितम् ? – **राज्यं भोगाः सुखानि** च काङ्क्षितम् ।

राज्यं भोगाः सुखानि च **केषां** काङ्क्षितम् ? – राज्यं भोगाः सुखानि च **नः** काङ्क्षितम् ।

येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **कथंभूताः** ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **अवस्थिताः** ।

येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **कुत्र** अवस्थिताः ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **युद्धे** अवस्थिताः ।

येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **किं कृत्वा** युद्धे अवस्थिताः ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **त्यक्त्वा** युद्धे अवस्थिताः ।

येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **कान्** त्यक्त्वा युद्धे अवस्थिताः ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते **प्राणान्** त्यक्त्वा युद्धे अवस्थिताः ।

येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते प्राणान् **पुनश्च कानि** त्यक्त्वा युद्धे अवस्थिताः ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च नः काङ्क्षितं ते प्राणान् **धनानि च** त्यक्त्वा युद्धे अवस्थिताः ।

येषाम् अर्थे राज्यं भोगाः सुखानि च काङ्क्षितं ते **के** प्राणान् धनानि च त्यक्त्वा युद्धे अवस्थिताः ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च काङ्क्षितं ते **इमे** प्राणान् धनानि च त्यक्त्वा युद्धे अवस्थिताः ।

येषाम् अर्थे राज्यं भोगाः सुखानि च काङ्क्षितं ते इमे **के के** प्राणान् धनानि च त्यक्त्वा युद्धे अवस्थिताः ?

– येषाम् अर्थे राज्यं भोगाः सुखानि च काङ्क्षितं ते इमे **आचार्याः पितरः पुत्राः तथा एव पितामहाः मातुलाः श्वशुराः पौत्राः श्यालाः तथा सम्बन्धिनः** प्राणान् धनानि च त्यक्त्वा युद्धे अवस्थिताः ।

**तात्पर्यम्** – येषां कृते राज्यं भोगाः सुखानि वा अपेक्षितानि आसन् ते एव बान्धवाः अधुना स्वप्राणान् धनानि च त्यक्तुम् उद्युक्ताः सन्तः युद्धे उपस्थिताः सन्ति । उपस्थिताश्च एते मम आचार्याः, पितरः, पुत्राः, पितामहाः, मातुलाः, श्वशुराः, पौत्राः, श्यालाः, बान्धवाश्च सन्ति ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| काङ्क्षितं नः | – | काङ्क्षितम् + नः | अनुस्वारसन्धिः |
| नो राज्यम् | – | नः + राज्यम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| राज्यं भोगाः | – | राज्यम् + भोगाः | अनुस्वासरन्धिः |
| त इमेऽवस्थिताः | – | ते + इमे | यान्तवान्तादेशसन्धिः, यलोपः, प्रकृतिभावः |
| | – | इमे + अवस्थिताः | पूर्वरूपसन्धिः |
| अवस्थिता युद्धे | – | अवस्थिताः + युद्धे | विसर्गसन्धिः (लोपः) |
| प्राणांस्त्यक्त्वा | – | प्राणान् + त्यक्त्वा | सत्वसन्धिः (रेफः, विसर्गः अनुस्वारः सकारश्च) |
| तथैव | – | तथा + एव | वृद्धिसन्धिः |
| पुत्रास्तथैव | – | पुत्राः + तथैव | विसर्गसन्धिः (सकारः) |
| सम्बन्धिनस्तथा | – | सम्बन्धिनः + तथा | विसर्गसन्धिः (सकारः) |

**(ख) कृदन्तः**

| | | |
|---|---|---|
| काङ्क्षितम् | – | काङ्क्ष् + क्त। (कर्मणि) |
| अवस्थिताः | – | दृश्यताम् – 1.11 |
| युद्धम् | – | दृश्यताम् – 1.23 |
| त्यक्त्वा | – | त्यज् + क्त्वा। |

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥1.35॥**

**पदच्छेदः –** एतान्, न, हन्तुम्, इच्छामि, घ्नतः, अपि, मधुसूदन।
अपि, त्रैलोक्यराज्यस्य, हेतोः, किम्, नु, महीकृते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| एतान् | – | एतद्–द .सर्व. पुं. द्वि.बहु. | न | – | अव्ययम् |
| हन्तुम् | – | अव्ययम् | इच्छामि | – | इष् – पर. कर्तरि उ.पु.एक. |
| घ्नतः | – | घ्नत् – त. पुं. द्वि.बहु. | अपि | – | अव्ययम् |
| मधुसूदन | – | अ. पुं. सम्बो. एक. | त्रैलोक्यराज्यस्य | – | अ. नपुं. ष. एक. |
| हेतोः | – | उ. पुं. ष. एक. | किम् | – | किम्–म.सर्व नपुं. प्र. एक. |
| नु | – | अव्ययम् | महीकृते | – | महीकृत् – त. पुं. च. एक. |

**पदार्थः –** मधुसूदन = हे कृष्ण ! त्रैलोक्यराज्यस्य = त्रिलोकाधिपत्यस्य, हेतोः अपि = हेतोः अपि, घ्नतः अपि = हन्तॄन् अपि, एतान् = इमान्, हन्तुम् = नाशयितुम्, न इच्छामि = नहि वाञ्छामि, किं नु = किं पुनः, महीकृते = भूमिप्राप्तये।

**अन्वयः –** मधुसूदन ! त्रैलोक्यराज्यस्य हेतोः घ्नतः अपि एतान् हन्तुं न इच्छामि। किं नु महीकृते ?

**आकाङ्क्षा –**

**न इच्छामि ।**

**किं** न इच्छामि ? – **हन्तुं** न इच्छामि ।

**कान्** हन्तुं न इच्छामि ? – **एतान्** न हन्तुं न इच्छामि ।

**कीदृशान् अपि** एतान् हन्तुं न इच्छामि ? – **घ्नतः अपि** एतान् हन्तुं न इच्छामि ।

**कस्य हेतोः अपि** घ्नतः अपि एतान् हन्तुं न इच्छामि ?

– **त्रैलोक्यराज्यस्य हेतोः अपि** घ्नतः अपि एतान् हन्तुं न इच्छामि ।

त्रैलोक्यराज्यस्य हेतोः अपि घ्नतः अपि एतान् हन्तुं न इच्छामि । **एवं सति इच्छामि ।**

– त्रैलोक्यराज्यस्य हेतोः अपि घ्नतः एतान् हन्तुं न इच्छामि । **किं नु महीकृते ।**

**अस्मिन् वाक्ये सम्बोधनपदं किम् ? – मधुसूदन ।**

**तात्पर्यम् –** हे कृष्ण ! यदि ते मां मारयन्ति मारयन्तु कामम् । तैः मार्यमाणोऽपि नाहं तान् मारयितुम् इच्छामि । ननु भोः ! त्रैलोक्यराज्यं तव सिद्ध्यति – तथापि नाहं मारयितुम् इच्छामि । एवं स्थिते केवलायाः अस्याः भूमेः प्राप्तये किमहं मारयामि ?

**व्याकरणम् –**

**(क) सन्धिः** घ्नतोऽपि – घ्नतः + अपि विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च
किं नु – किम् + नु अनुस्वारसन्धिः

**(ख) समासः** अच्युतः – दृश्यताम् – 1.21
महीकृते – मह्याः कृत्, तस्मै – षष्ठीतत्पुरुषः । कृञ्धातोः सर्वेषामपि धातूनाम् अर्थः सम्भवति इति कृते इत्यस्य प्राप्तये इत्यर्थः ।

**(ग) कृदन्तः** घ्नतः – हन् (लट्) शतृ (कर्तरि) । घ्नन्, तान् ।
हन्तुम् – हन् + तुमुन् ।

**विशेषः –** मधुसूदनः – मधुं (तन्नामकं) दैत्यं सूदयति इति मधुसूदनः ।
– मधु + सूद् + णिच् (स्वार्थे) + ल्यु (अन)
सूदनं मधुदैत्यस्य यस्मात् स मधुसूदनः । – *ब्रह्मवैवर्तपुराणे – 110*

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।**
**पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥1.36॥**

**पदच्छेदः –** निहत्य, धार्तराष्ट्रान्, नः, का, प्रीतिः, स्यात्, जनार्दन ।
पापम्, एव, आश्रयेत्, अस्मान्, हत्वा, एतान्, आततायिनः ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| निहत्य | – | ल्यबन्तम् अव्ययम् | धार्तराष्ट्रान् | – | अ. पुं. द्वि. बहु. |
| प्रीतिः | – | इ. स्त्री. प्र. एक. | स्यात् | – | अस्–पर. कर्तरि वि.लिङ्. प्रपु.एक. |

| | | | | |
|---|---|---|---|---|
| जनार्दन | - अ. पुं. सम्बो. एक. | पापम् | - | अ. नपुं. प्र. एक. |
| एव | - अव्ययम् | आश्रयेत् | - | आ+श्रि-पर.कर्तरि वि.लिङ्.प्रपु. एक. |
| अस्मान् | - अस्मद् -द. सर्व. द्वि. बहु. | हत्वा | - | अव्ययम् |
| एतान् | - एतद् -द. सर्व. पुं. द्वि. बहु. | आततायिनः | - | आततायिन्-न. पुं. द्वि. बहु. |

**पदार्थः** – जनार्दन = हे कृष्ण ! धार्तराष्ट्रान् = धृतराष्ट्रस्य पुत्रान्, निहत्य = हत्वा, का = कीदृशी, प्रीतिः = आनन्दः, नः = अस्माकम्, स्यात् = भवेत्, आततायिनः = हन्तुम् उद्यतान्, एतान् = इमान्, हत्वा = नाशयित्वा, पापम् = किल्बिषम्, एव = एव, अस्मान् = अस्मान्, आश्रयेत् = प्राप्नुयात् ।

**अन्वयः** – जनार्दन ! धार्तराष्ट्रान् निहत्य (स्थितानाम्) नः का प्रीतिः स्यात् ? (प्रत्युत) आततायिनः एतान् हत्वा स्थितान् अस्मान् पापम् एव आश्रयेत् ।

**आकाङ्क्षा** –

**स्यात्** ।

**का** स्यात् ? – **प्रीतिः** स्यात् ।

**केषां** प्रीतिः स्यात् ? – **नः** प्रीतिः स्यात् ।

**किं कृत्वा** (स्थितानाम्) नः प्रीतिः स्यात् ? – **निहत्य** स्थितानां नः प्रीतिः स्यात् ।

**कान्** निहत्य स्थितानां नः प्रीतिः स्यात् ? – **धार्तराष्ट्रान्** निहत्य स्थितानां नः प्रीतिः स्यात् ।

धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः **का** स्यात् । **प्रत्युत किं स्यात्** ?

– धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः **न** स्यात् । (प्रत्युत) **आश्रयेत्** ।

धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **किम्** आश्रयेत् ?

– धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **पापम् एव** आश्रयेत् ।

धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **कान्** पापम् एव आश्रयेत् ?

– धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । **अस्मान्** पापम् एव आश्रयेत् ।

धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **किं कृत्वा** (स्थितान्) अस्मान् पापम् एव आश्रयेत् ?

– धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **हत्वा** (स्थितान्) अस्मान् पापम् एव आश्रयेत् ।

धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **कान्** हत्वा स्थितान् अस्मान् पापम् एव आश्रयेत् ?

– धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **एतान्** हत्वा स्थितान् अस्मान् पापम् एव आश्रयेत् ।

धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **कीदृशान्** एतान् हत्वा स्थितान् अस्मान् पापम् एव आश्रयेत् ?

– धार्तराष्ट्रान् निहत्य स्थितानां नः प्रीतिः न स्यात् । प्रत्युत **आततायिनः** एतान् हत्वा स्थितान् अस्मान् पापम् एव आश्रयेत् ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ? – जनार्दन ।**

**तात्पर्यम्** – हे जनार्दन! एतेषां कौरवाणां मारणेन अस्माभिः का वा तृप्तिः जायते ? प्रत्युत कृतपातकानाम् एतेषां मारणेन पापमेव अस्मान् स्पृशेत् ।

**व्याकरणम्** –

**(क) सन्धिः** स्याज्जनार्दन - स्यात् + जनार्दन जश्त्वसन्धिः, श्चुत्वसन्धिः

| | | | | |
|---|---|---|---|---|
| | एवाश्रयेदस्मान् | - | एव + आश्रयेत् | सवर्णदीर्घसन्धिः |
| | | | आश्रयेत् + अस्मान् | जश्त्वसन्धिः |
| | हत्वैतान् | - | हत्वा + एतान् | वृद्धिसन्धिः |
| **(ग) कृदन्तः** | निहत्य | - | नि + हन् + ल्यप् । | |
| | जनार्दनः | - | जन + अर्द + ल्यु (कर्तरि) जनान् अर्दयति । | |
| | | | जनाः यथा पुरुषार्थान् याचन्ते तथा करोति इत्यर्थः । | |
| | हत्वा | - | दृश्यताम् - 1.31 | |
| **(घ) तद्धितान्तः** | धार्तराष्ट्रः | - | दृश्यताम् - 1.19 | |

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥1.37॥**

**पदच्छेदः –** तस्मात्, न, अर्हाः, वयम्, हन्तुम्, धार्तराष्ट्रान्, स्वबान्धवान् ।
स्वजनम्, हि, कथम्, हत्वा, सुखिनः, स्याम, माधव ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| तस्मात् | - | तद्-द.सर्व.नपुं. पं.एक. | न | - | अव्ययम् |
| अर्हाः | - | अ. पुं. प्र.बहु. | वयम् | - | अस्मद्-द. सर्व. प्र. बहु. |
| हन्तुम् | - | अव्ययम् | धार्तराष्ट्रान् | - | अ. पुं. द्वि. बहु. |
| स्वबान्धवान् | - | अ. पुं. द्वि. बहु. | स्वजनम् | - | अ. पुं. द्वि. एक. |
| हि | - | अव्ययम् | कथम् | - | अव्ययम् |
| हत्वा | - | अव्ययम् | सुखिनः | - | सुखिन्-न. पुं. प्र. बहु. |
| स्याम | - | अस्-पर. कर्तरि वि.लिङ्. उपु. बहु. | माधव | - | अ. पुं. सम्बो. एक. |

**पदार्थः –** माधव = हे रमापते ! तस्मात् = तस्मात् कारणात्, स्वबान्धवान् = निजबन्धून्, धार्तराष्ट्रान् = कौरवान्, वयम् = वयम्, हन्तुम् = विनाशयितुम्, न = नहि, अर्हाः = योग्याः, हि = यस्मात्, स्वजनम् = निजजनम्, हत्वा = विनाश्य, कथम् = केन प्रकारेण, सुखिनः = सन्तुष्टाः, स्याम = भवेम ।

**अन्वयः –** माधव ! तस्मात् वयं स्वबान्धवान् धार्तराष्ट्रान् हन्तुं न अर्हाः । स्वजनं हि हत्वा कथं सुखिनः स्याम ?

**आकाङ्क्षा –**

**न अर्हाः** ।

| | |
|---|---|
| **के** न अर्हाः ? | - **वयं** न अर्हाः । |
| **कस्मात्** वयं न अर्हाः ? | - **तस्मात्** वयं न अर्हाः । |
| तस्मात् वयं **किं कर्तुं** न अर्हाः ? | - तस्मात् वयं **हन्तुं** न अर्हाः । |
| तस्मात् वयं **कान्** हन्तुं न अर्हाः ? | - तस्मात् वयं **धार्तराष्ट्रान्** हन्तुं न अर्हाः । |
| तस्मात् वयं **कीदृशान्** धार्तराष्ट्रान् हन्तुं न अर्हाः ? | - तस्मात् वयं **स्वबान्धवान्** धार्तराष्ट्रान् हन्तुं न अर्हाः। |

**स्याम** ।

**कीदृशाः** स्याम ? – **सुखिनः** स्याम ।

**किं कृत्वा** सुखिनः स्याम ? – **हत्वा** सुखिनः स्याम ।

**कं** हत्वा सुखिनः स्याम ? – **स्वजनं** हत्वा सुखिनः स्याम ।

स्वजनं हि हत्वा **कथं** सुखिनः स्याम ।

**अस्मिन् वाक्ये सम्बोधनपदं किम् ?** – **माधव** ।

**तात्पर्यम् –** अतः स्वबान्धवान् धृतराष्ट्रपुत्रान् एतान् कौरवान् हन्तुं वयं न अर्हाः । स्वबान्धवान् एव हत्वा वयं कथं वा सुखिनः भवेम ?

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | तस्मान्न | – | तस्मात् + न | अनुनासिकसन्धिः |
| | तस्मान्नार्हाः | – | तस्मान्न + अर्हाः | सवर्णदीर्घसन्धिः |
| | अर्हा वयम् | – | अर्हाः + वयम् | विसर्गसन्धिः (लोपः) |
| | वयं हन्तुम् | – | वयम् + हन्तुम् | अनुस्वारसन्धिः |
| | हन्तुं धार्तराष्ट्रान् | – | हन्तुम् + धार्तराष्ट्रान् | अनुस्वारसन्धिः |
| | स्वजनं हि | – | स्वजनम् + हि | अनुस्वारसन्धिः |
| | कथं हत्वा | – | कथम् + हत्वा | अनुस्वारसन्धिः |

| | | | |
|---|---|---|---|
| **(ख) समासः** | स्वबान्धवान् | – | स्वस्य बान्धवाः स्वबान्धवाः, तान् – षष्ठीतत्पुरुषः । |
| | स्वजनः | – | दृश्यताम् – 1.28 |
| | माधवः | – | दृश्यताम् – 1.14 |
| **(ग) कृदन्तः** | हन्तुम् | – | दृश्यताम् – 1.35 |
| | बान्धवः | – | बन्धु + अण् (स्वार्थे) |
| | हत्वा | – | दृश्यताम् – 1.31 |
| **(घ) तद्धितान्तः** | धार्तराष्ट्रः | – | दृश्यताम् – 1.19 |
| | सुखिनः | – | सुख + इनि (मतुबर्थे) । सुखम् एषां एषु वा अस्ति इति सुखिनः । |

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥1.38॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥1.39॥**

**पदच्छेदः –** यद्यपि, एते, न, पश्यन्ति, लोभोपहतचेतसः ।
कुलक्षयकृतम्, दोषम्, मित्रद्रोहे, च, पातकम् ॥
कथम्, न, ज्ञेयम्, अस्माभिः, पापात्, अस्मात्, निवर्तितुम् ।
कुलक्षयकृतम्, दोषम्, प्रपश्यद्भिः, जनार्दन ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| यदि | – अव्ययम् | अपि | – अव्ययम् |
| एते | – एतद् –द. सर्व पुं. प्र. बहु. | न | – अव्ययम् |
| पश्यन्ति | – दृश् – पर. लट्. प्रपु. बहु. | लोभोपहतचेतसः | – लोभोपहतचेतस्–स.पुं.प्र.बहु. |
| कुलक्षयकृतम् | – अ. पुं. द्वि. एक. | दोषम् | – अ. पुं. द्वि. एक. |
| मित्रद्रोहे | – अ. पुं. स. एक. | च | – अव्ययम् |
| पातकम् | – अ. नपुं. द्वि. एक. | कथम् | – अव्ययम् |
| ज्ञेयम् | – अ. नपुं. प्र. एक. | अस्माभिः | – अस्मद्–द.सर्व. तृ. बहु. |
| पापात् | – अ. नपुं. पं. एक. | अस्मात् | – अस्मद्–द.सर्व. पं. बहु. |
| निवर्तितुम् | – अव्ययम् | कुलक्षयकृतम् | – अ. पुं. द्वि. एक. |
| दोषम् | – अ. पुं. द्वि. एक. | प्रपश्यद्भिः | – प्रपश्यत्–त. पुं. तृ. बहु. |
| जनार्दन | – अ. पुं. सम्बो. एक. | | |

**पदार्थः –** जनार्दन = हे कृष्ण ! यद्यपि = यद्यपि, लोभोपहतचेतसः = लोभाविष्टचित्ताः, एते = इमे धार्तराष्ट्राः कुलक्षयकृतम् = वंशनाशजन्यम्, दोषम् = अनर्थम्, मित्रद्रोहे = वयस्यमारणे, पातकं च = पापं च, न पश्यन्ति = नहि वीक्षन्ते, कुलक्षयकृतम् = वंशनाशजन्यम्, दोषम् = अनर्थम्, प्रपश्यद्भिः =अवलोकयद्भिः, अस्माभिः = अस्माभिः, अस्मात् = एतस्मात्, पापात् = दोषात्, निवर्तितुम् = निवारयितुम्, कथम् = केन प्रकारेण, न ज्ञेयम् = न अवगन्तव्यम् ।

**अन्वयः –** जनार्दन ! यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति (तथापि) कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः अस्मात् पापात् निवर्तितुं कथं न ज्ञेयम् ?

**आकाङ्क्षा –**

**न पश्यन्ति ।**

**के** न पश्यन्ति ? – एते न पश्यन्ति ।

एते **कीदृशाः** न पश्यन्ति ? – एते **लोभोपहतचेतसः** न पश्यन्ति ।

एते लोभोपहतचेतसः **कं** न पश्यन्ति ? – एते लोभोपहतचेतसः **दोषं** न पश्यन्ति ।

एते लोभोपहतचेतसः **कीदृशं** दोषं न पश्यन्ति ? – एते लोभोपहतचेतसः **कुलक्षयकृतं** दोषं न पश्यन्ति ।

एते लोभोपहतचेतसः कुलक्षयकृतं दोषं **पुनश्च किं** न पश्यन्ति ?

– एते लोभोपहतचेतसः कुलक्षयकृतं दोषं **पातकं च** न पश्यन्ति ।

एते लोभोपहतचेतसः कुलक्षयकृतं दोषं **कस्मिन्** पातकं च न पश्यन्ति ?

– एते लोभोपहतचेतसः कुलक्षयकृतं दोषं **मित्रद्रोहे** पातकं च न पश्यन्ति ।

– **यद्यपि** एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति **(तथापि) कथं न ज्ञेयम्** ।

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति (तथापि) **कैः** कथं न ज्ञेयम् ?

– यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **अस्माभिः** कथं न ज्ञेयम् ?

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **किं कुर्वद्भिः** अस्माभिः कथं न ज्ञेयम् ?

– यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **प्रपश्यद्भिः** अस्माभिः कथं न ज्ञेयम् ।

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **कं** प्रपश्यद्भिः अस्माभिः कथं न ज्ञेयम् ?

- यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **दोषं** प्रपश्यद्भिः अस्माभिः कथं न ज्ञेयम् ।

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **कीदृशं** दोषं प्रपश्यद्भिः अस्माभिः कथं न ज्ञेयम् ?

– यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि **कुलक्षयकृतं** दोषं प्रपश्यद्भिः अस्माभिः कथं न ज्ञेयम् ।

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः **किं कर्तुं** कथं न ज्ञेयम् ?

– यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः **निवर्तितुं** कथं न ज्ञेयम् ।

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः **कस्मात्** निवर्तितुं कथं न ज्ञेयम् ?

– यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः **पापात्** निवर्तितुं कथं न ज्ञेयम् ।

यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः **कस्मात्** पापात् निवर्तितुं कथं न ज्ञेयम् ?

– यद्यपि एते लोभोपहतचेतसः कुलक्षयकृतं दोषं मित्रद्रोहे पातकं च न पश्यन्ति तथापि कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः **अस्मात्** पापात् निवर्तितुं कथं न ज्ञेयम् ।

**अस्मिन् श्लोके सम्बोधनपदं किम् ? – जनार्दन ।**

**तात्पर्यम् –** यद्यपि एते तृष्णाविष्टचिताः युद्धात् जायमानं वंशनाशं मित्रद्रोहं च अनर्थं न जानन्ति तथापि तत्सर्वं जानन्तः वयं किमर्थम् अस्मात् युद्धरूपात् पापकार्यात् विमुखाः न भवेम ? वैमुख्ये सत्येव अस्य अनर्थस्य निवारणं शक्यमिति तदेव युक्तम् इति मे मतिः ।

**व्याकरणम् –**

| **(क) सन्धिः** | | | |
|---|---|---|---|
| | यद्यप्येते | – यद्यपि + एते | – यण्सन्धिः |
| | कुलक्षयकृतं दोषम् | – कुलक्षयकृतम् + दोषम् | – अनुस्वारसन्धिः |
| | दोषं मित्रद्रोहे | – दोषम् + मित्रद्रोहे | – अनुस्वारसन्धिः |
| | कथं न | – कथम् + न | – अनुस्वारसन्धिः |

| | | |
|---|---|---|
| पापादस्मान्निवर्तितुम् | – पापात् + अस्मात् | – जश्त्वसन्धिः |
| | अस्मात् + निवर्तितुम् | – अनुनासिकसन्धिः |
| दोषं प्रपश्यद्भिर्जनार्दन | – दोषम् + प्रपश्यद्भिः | – अनुनासिकसन्धिः |
| | प्रपश्यद्भिः + जनार्दन | – विसर्गसन्धिः (रेफः) |

**(ख) समासः** लोभोपहतचेतसः – लोभेन उपहतं लोभोपहतम् – तृतीयातत्पुरुषः ।
लोभोपहतं चेतः येषां ते – बहुव्रीहिः ।
कुलक्षयकृतम् – कुलानां क्षयः कुलक्षयः – षष्ठीतत्पुरुषः ।
कुलक्षयेण कृतः कुलक्षयकृतः, तम् – तृतीयातत्पुरुषः ।

**(ग) कृदन्तः** उपहतः – उप + हन् + क्त । (कर्मणि)
कृतः – कृ + क्त । (कर्मणि)

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥1.40॥**

**पदच्छेदः –** कुलक्षये, प्रणश्यन्ति, कुलधर्माः, सनातनाः ।
धर्मे, नष्टे, कुलम्, कृत्स्नम्, अधर्मः, अभिभवति, उत ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| कुलक्षये | – | अ. पुं. स.एक. | प्रणश्यन्ति | – | प्र+नश् –पर. कर्तरि लट्. प्रपु.बहु. |
| कुलधर्माः | – | अ. पुं. प्र. बहु. | सनातनाः | – | अ. पुं. प्र. बहु. |
| धर्मे | – | अ. पुं. स. एक. | नष्टे | – | अ. पुं. स. एक. |
| कुलम् | – | अ. नपुं. द्वि. एक. | कृत्स्नम् | – | अ. नपुं. द्वि. एक. |
| अधर्मः | – | अ. पुं. प्र. एक. | अभिभवति | – | अभि+भू–पर. लट्. प्रपु. एक. |
| उत | – | अव्ययम् | | | |

**पदार्थः –** कुलक्षये = वंशनाशे, सनातनाः = प्राचीनाः, कुलधर्माः = वंशधर्माः, प्रणश्यन्ति = क्षीयन्ते, धर्मे = सनातनधर्मे, नष्टे = क्षीणे, कृत्स्नम् उत = सर्वम् अपि, कुलम् = वंशम्, अधर्मः = अनाचारः, अभिभवति = आक्राम्यति ।

**अन्वयः –** कुलक्षये सनातनाः कुलधर्माः प्रणश्यन्ति । धर्मे नष्टे कृत्स्नम् उत कुलम् अधर्मः अभिभवति ।

**आकाङ्क्षा –**

**प्रणश्यन्ति ।**
**के** प्रणश्यन्ति ? – **कुलधर्माः** प्रणश्यन्ति ।
**कीदृशाः** कुलधर्माः प्रणश्यन्ति ? – **सनातनाः** कुलधर्माः प्रणश्यन्ति ।
**कस्मिन् (सति)** सनातनाः कुलधर्माः प्रणश्यन्ति ? – **कुलक्षये** (सति) सनातनाः कुलधर्माः प्रणश्यन्ति ।
**तेन किम्** ? – **अभिभवति** ।
**कः** अभिभवति ? – **अधर्मः** अभिभवति ।

**किम्** अधर्मः अभिभवति ? – **कुलम्** अधर्मः अभिभवति ।
**कीदृशं च** कुलम् अधर्मः अभिभवति ? – **कृत्स्नम् उत** कुलम् अधर्मः अभिभवति ।
**कदा** कृत्स्नम् उत कुलम् अधर्मः अभिभवति ? – **नष्टे** (सति) कृत्स्नम् उत कुलम् अधर्मः अभिभवति ।
**कस्मिन्** नष्टे (सति) कृत्स्नम् उत कुलम् अधर्मः अभिभवति ?
– **धर्मे** नष्टे सति कृत्स्नम् उत कुलम् अधर्मः अभिभवति ।

**तात्पर्यम्** – कुलानि यदि नश्यन्ति तर्हि सनातनाः कुलधर्माः नश्यन्ति । धर्मः यदि नष्टः भवति तर्हि अधर्मः कुलानि आवृत्य तिष्ठति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कुलं कृत्स्नम् | – कुलम् + कृत्स्नम् | अनुस्वारसन्धिः |
| | अधर्मोऽभिभवत्युत | – अधर्मः + अभिभवति, | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः पूर्वरूपं च |
| | | – अभिभवति + उत | यणसन्धिः |
| **(ख) समासः** | कुलक्षये | – कुलस्य क्षयः, तस्मिन् – षष्ठीतत्पुरुषः । | |
| | कुलधर्माः | – कुलस्य धर्माः – षष्ठीतत्पुरुषः । | |
| | अधर्मः | – न धर्मः – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | नष्टः | – नश् + क्त (कर्तरि) | |
| **(घ) तद्धितान्तः** | सनातनः | – सना + ट्युल् (भव इत्यर्थे) । सदा भवः इत्यर्थः । | |

**अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥1.41॥**

**पदच्छेदः** – अधर्माभिभवात्, कृष्ण, प्रदुष्यन्ति, कुलस्त्रियः ।
स्त्रीषु, दुष्टासु, वार्ष्णेय, जायते, वर्णसङ्करः ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| अधर्माभिभवात् | – अ.पुं.पं.एक. | कृष्ण | – अ.पुं.सम्बो.एक. |
| प्रदुष्यन्ति | – प्र+दुष्–पर.कर्तरि लट् प्रपु.बहु. | कुलस्त्रियः | – ई.स्त्री.प्र.बहु. |
| स्त्रीषु | – ई.स्त्री.स.बहु. | दुष्टासु | – आ.स्त्री.स.बहु. |
| वार्ष्णेय | – अ.पुं.सम्बो.एक. | जायते | – जन्–आत्म.कर्तरि लट् प्रपु.एक. |
| वर्णसङ्करः | – अ.पुं.प्र.एक. | | |

**पदार्थः** – कृष्ण = हे माधव ! अधर्माभिभवात् = अधर्माक्रमणात्, कुलस्त्रियः = साध्व्यः, प्रदुष्यन्ति = व्यभिचरन्ति, वार्ष्णेय = कृष्ण ! स्त्रीषु = नारीषु, दुष्टासु = व्यभिचरितासु, वर्णसङ्करः = वर्णमिश्रणम्, जायते = भवति ।

**अन्वयः** – कृष्ण ! अधर्माभिभवात् कुलस्त्रियः प्रदुष्यन्ति । वार्ष्णेय ! स्त्रीषु दुष्टासु वर्णसङ्करः जायते ।

**आकाङ्क्षा** –

**प्रदुष्यन्ति** ।

| | |
|---|---|
| **काः** प्रदुष्यन्ति ? | – **कुलस्त्रियः** प्रदुष्यन्ति । |
| **कस्मात्** कुलस्त्रियः प्रदुष्यन्ति ? | – **अधर्माभिभवात्** कुलस्त्रियः प्रदुष्यन्ति । |
| अस्मिन् वाक्ये सम्बोधनपदं किम् ? | – **कृष्ण !** |
| **तेन किम् ?** | – **जायते** । |
| **कः** जायते ? | – **वर्णसङ्करः** जायते । |
| **कदा** वर्णसङ्करः जायते ? | – **दुष्टासु (सतीषु)** वर्णसङ्करः जायते । |
| **कासु** दुष्टासु (सतीषु) वर्णसङ्करः जायते ? | – **स्त्रीषु** दुष्टासु (सतीषु) वर्णसङ्करः जायते । |
| **अस्मिन् वाक्ये सम्बोधनपदं किम् ?** | – **वार्ष्णेय ।** |

**तात्पर्यम्** – अधर्मः यदि कुलानि आवृणोति तर्हि कुलस्त्रियः प्रदुष्यन्ति । ताः यदा प्रदुष्यन्ति तदा वर्णसङ्करः भवति ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(ख) समासः** | अधर्माभिभवात् | – अधर्मस्य अभिभवः, तस्मात् – षष्ठीतत्पुरुषः । |
| | कुलस्त्रियः | – कुलस्य स्त्रियः – षष्ठीतत्पुरुषः । |
| | वर्णसङ्करः | – वर्णानां सङ्करः – षष्ठीतत्पुरुषः । |
| | अधर्मः | – दृश्यताम् – 1.40 |
| **(ग) कृदन्तः** | अभिभवः | – अभि + भू + अच् । (भावे) |
| **(घ) तद्धितान्तः** | वार्ष्णेयः | – वृष्णि + ढक् (अपत्यार्थे) (एयादेशः) वृष्णेः गोत्रापत्यं पुमान् । |

**सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥1.42॥**

**पदच्छेदः** – सङ्करः, नरकाय, एव, कुलघ्नानाम्, कुलस्य, च ।
पतन्ति, पितरः, हि, एषाम्, लुप्तपिण्डोदकक्रियाः ॥

**पदपरिचयः** –

| **पदम्** | **विवरणम्** | **पदम्** | **विवरणम्** |
|---|---|---|---|
| सङ्करः | – अ.पुं.प्र.एक. | नरकाय | – अ.पुं.च.एक. |
| एव | – अव्ययम् | कुलघ्नानाम् | – अ.पुं.ष.बहु. |
| कुलस्य | – अ.नपुं.ष.एक. | च | – अव्ययम् |
| पतन्ति | – पत्–पर.कर्तरि लट् प्रपु.बहु. | पितरः | – पितृ–ऋ.पुं.प्र.बहु. |
| हि | – अव्ययम् | एषाम् | – इदम् .सर्व.म.पुं.ष.बहु. |
| लुप्तपिण्डोदकक्रियाः | – अ.पुं.प्र.बहु. | | |

**पदार्थः** – कुलघ्नानाम् = वंशनाशकानाम्, सङ्करः = मिश्रणम्, कुलस्य = वंशस्य, नरकाय एव = नरकलोकाय एव, लुप्तपिण्डोदकक्रियाः = नष्टपिण्डजलतर्पणाः, एषाम् = एतेषाम्, पितरः = पितृदेवताः, पतन्ति = ग्लायन्ति।

**अन्वयः** – सङ्करः कुलघ्नानां कुलस्य च नरकाय एव भवति। एषां पितरः लुप्तपिण्डोदकक्रियाः पतन्ति।

**आकाङ्क्षा** –

**भवति**। (अध्याहृतम्)

**कः** भवति ? – **सङ्करः** भवति।

सङ्करः **कस्मै एव** भवति ? – सङ्करः **नरकाय एव** भवति।

सङ्करः **केषां** नरकाय एव भवति ? – सङ्करः **कुलघ्नानां** नरकाय एव भवति।

सङ्करः कुलघ्नानां **पुनश्च कस्य** नरकाय एव भवति ? – सङ्करः कुलघ्नानां **कुलस्य** च नरकाय एव भवति।

**तेन किम् ?** – **पतन्ति**।

**के** पतन्ति ? – **पितरः** पतन्ति।

पितरः **कीदृशाः** पतन्ति ? – पितरः **लुप्तपिण्डोदकक्रियाः** पतन्ति।

**केषां** पितरः लुप्तपिण्डोदकक्रियाः पतन्ति ? – **एषां** पितरः लुप्तपिण्डोदकक्रियाः पतन्ति।

**तात्पर्यम्** – वर्णसङ्करः नरकस्य कारणं भवति। तेन कुलघातकाः कुलानि च नरकं गच्छन्ति। तेषां पितरः पिण्डोदकवञ्चिताः भवन्ति। ततश्च ते नरके पतन्ति।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| सङ्करो नरकायैव | – सङ्करः + नरकाय | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः |
| | – नरकाय + एव | वृद्धिसन्धिः |
| कुलघ्नानां कुलस्य | – कुलघ्नानाम् + कुलस्य | अनुस्वारसन्धिः |
| पितरो ह्येषाम् | – पितरः + हि | विसर्गसन्धिः, (सकारः) रेफः, उकारः गुणः |
| | – हि + एषाम् | यण्सन्धिः |
| एषां लुप्तपिण्डोदकक्रियाः | – एषाम् + लुप्त....क्रियाः | अनुस्वारसन्धिः |

**(ख) समासः** लुप्तपिण्डोदकक्रियाः – पिण्डं च उदकक्रिया च पिण्डोदकक्रिये – द्वन्द्वः। लुप्ते पिण्डोदकक्रिये येषां ते – बहुव्रीहिः।

**(ग) कृदन्तः**

| | |
|---|---|
| सङ्करः | – सम् + डुकृञ् + अप् (भावे) |
| कुलघ्नः | – कुल + हन् + क्विप् (कर्तरि)। कुलं हन्ति। |
| लुप्तः | – लुप् + क्त (कर्तरि) |

**दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥1.43॥**

**पदच्छेदः –** दोषैः, एतैः, कुलघ्नानाम्, वर्णसङ्करकारकैः ।
उत्साद्यन्ते, जातिधर्माः, कुलधर्माः, च, शाश्वताः ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| दोषैः | – | अ.पुं.तृ.बहु. | एतैः | – | एतद् सर्व.द.पुं.तृ.बहु. |
| कुलघ्नानाम् | – | अ.पुं.ष.बहु. | वर्णसङ्करकारकैः | – | अ.पुं.तृ.बहु. |
| उत्साद्यन्ते | – | उत् + सद्.णिच्,कर्मणि.लट् प्रपु.बहु. | जातिधर्माः | – | अ.पुं.प्र.बहु. |
| कुलधर्माः | – | अ.पुं.प्र.बहु. | च | – | अव्ययम् |
| शाश्वताः | – | अ.पुं.प्र.बहु. | | | |

**पदार्थः –** कुलघ्नानां = वंशनाशकानाम्, वर्णसङ्करकारकैः = वर्णसाङ्कर्यहेतुभिः, एतैः = एभिः, दोषैः =पापैः, शाश्वताः = सनातनाः, जातिधर्माः = वर्णधर्माः, कुलधर्माः च = वशंधर्माः च, उत्साद्यन्ते = विनाश्यन्ते ।

**अन्वयः –** कुलघ्नानां वर्णसङ्करकारकैः एतैः दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ।

**आकाङ्क्षा –**

**उत्साद्यन्ते** ।

**के** उत्साद्यन्ते ? – **जातिधर्माः** उत्साद्यन्ते ।

जातिधर्माः **पुनश्च के** उत्साद्यन्ते ? – जातिधर्माः **कुलधर्माः च** उत्साद्यन्ते ।

**कीदृशाः** जातिधर्माः कुलधर्माः च उत्साद्यन्ते ? – **शाश्वताः** जातिधर्माः कुलधर्माः च उत्साद्यन्ते ।

**कैः** शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ?

– **दोषैः** शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ।

**कीदृशैः** दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ?

– **वर्णसङ्करकारकैः** दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ।

वर्णसङ्करकारकैः **कैः** दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ?

– वर्णसङ्करकारकैः **एतैः** दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ।

**केषां** वर्णसङ्करकारकैः एतैः दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते?

– **कुलघ्नानां** वर्णसङ्करकारकैः एतैः दोषैः शाश्वताः जातिधर्माः कुलधर्माः च उत्साद्यन्ते ।

**तात्पर्यम् –** कुलघातकानां वर्णसङ्करकारकैः एतैः दोषैः शाश्वताः वर्णधर्माः कुलधर्माश्च विनष्टाः भवन्ति ।

**व्याकरणम् –**

**(क) सन्धिः** दोषैरेतैः – दोषैः + एतैः विसर्गसन्धिः (रेफः)
कुलघ्नानां वर्णसङ्करकारकैः – कुलघ्नानाम् + वर्णसङ्करकारकैः अनुस्वारसन्धिः
कुलधर्माश्च – कुलधर्माः + च विसर्गसन्धिः (सकारः) श्चुत्वम्

**(ख) समासः** कुलघ्नः – दृश्यताम् – 1.42
वर्णसङ्करकारकैः – वर्णसङ्करस्य कारकाः, तैः – षष्ठीतत्पुरुषः ।

| | | |
|---|---|---|
| | वर्णसङ्करः | – दृश्यताम् – 1.42 |
| | जातिधर्माः | – जातेः धर्माः – षष्ठीतत्पुरुषः । |
| | कुलधर्मः | – दृश्यताम् – 1.40 |
| **(ग) कृदन्तः** | कारकः | – कृ + ण्वुल् (अक) (कर्तरि) |
| | जातिः | – जन् + क्तिन् (भावे) |
| **(घ) तद्धितान्तः** | शाश्वतः | – शश्वत् + अण् (भवार्थे) । सदा भवः । |

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।**
**नरकेऽनियतं वासो भवतीत्यनुशुश्रुम ॥1.44॥**

**पदच्छेदः –** उत्सन्नकुलधर्माणाम्, मनुष्याणाम् जनार्दन ।
नरके, अनियतम्, वासः, भवति, इति, अनुशुश्रुम ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| उत्सन्नकुलधर्माणाम् | – | अ.पुं.ष.बहु. | मनुष्याणाम् | – | अ.पुं.ष.बहु. |
| जनार्दन | – | अ.पुं.सम्बो.एक. | नरके | – | अ.पुं.स.एक. |
| अनियतम् | – | अ.पुं.प्र.एक. | वासः | – | अ.पुं.प्र.एक. |
| भवति | – | भू–पर.कर्तरि लट् प्रपु.एक. | इति | – | अव्ययम् |
| अनुशुश्रुम | – | अनु+श्रु–पर. कर्तरि लिट् उपु.बहु. | | | |

**पदार्थः –** जनार्दन = हे कृष्ण ! उत्सन्नकुलधर्माणाम् = नष्टवंशाचाराणाम्, मनुष्याणाम् = नराणाम्, अनियतम् = दीर्घकालं यावत्, नरके = निरये, वासः = स्थितिः, भवति इति = सम्पद्यते इति, अनुशुश्रुम = श्रुतवन्तः ।

**अन्वयः –** जनार्दन ! 'उत्सन्नकुलधर्माणां मनुष्याणां नरके अनियतं वासः भवति' इति अनुशुश्रुम ।

**आकाङ्क्षा –**

**अनुशुश्रुम ।**

**किम्** अनुशुश्रुम ? – **'भवति' इति** अनुशुश्रुम ।

'**कः** भवति' इति अनुशुश्रुम ? – '**वासः** भवति' इति अनुशुश्रुम ।

'**कुत्र** वासः भवति' इति अनुशुश्रुम ? – '**नरके** वासः भवति' इति अनुशुश्रुम ।

'नरके **कथं** वासः भवति' इति अनुशुश्रुम ? – 'नरके **अनियतं** वासः भवति' इति अनुशुश्रुम ।

**केषां** 'नरके अनियतं वासः भवति' इति अनुशुश्रुम ?
– **मनुष्याणां** 'नरके अनियतं वासः भवति' इति अनुशुश्रुम ।

**कीदृशानां** मनुष्याणां 'नरके अनियतं वासः भवति' इति अनुशुश्रुम ?
– **उत्सन्नकुलधर्माणां** मनुष्याणां 'नरके अनियतं वासः भवति' इति अनुशुश्रुम ।

**अस्मिन् श्लोके सम्बोधनपदं किम् ?** – **जनार्दन** ।

**तात्पर्यम्** – येषां कुलधर्माः नष्टाः सन्ति तेषां नरके अतिदीर्घकालं यावत् वासः भविष्यति इति अस्माभिः श्रुतम्।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | उत्सन्नकुलधर्माणां मनुष्याणाम् | – उत्सन्नकुलधर्माणाम् + मनुष्याणाम् | अनुस्वारसन्धिः |
| | मनुष्याणां जनार्दन | – मनुष्याणाम् + जनार्दन | अनुस्वारसन्धिः |
| | नरकेऽनियतम् | – नरके + अनियतम् | पूर्वरूपसन्धिः |
| | अनियतं वासः | – अनियतम् + वासः | अनुस्वारसन्धिः |
| | वासो भवतीत्यनुशुश्रुम | – वासः + भवति | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | | – भवति + इति | सवर्णदीर्घसन्धिः |
| | | – इति + अनुशुश्रुम | यणसन्धिः |

**(ख) समासः** उत्सन्नकुलधर्माणाम् – कुलस्य धर्मः कुलधर्मः – षष्ठीतत्पुरुषः।
उत्सन्नः कुलधर्मः येषां ते, तेषाम् – बहुव्रीहिः।

| | | |
|---|---|---|
| **(ग) कृदन्तः** | उत्सन्नः | – उत् + सद् + क्त (कर्तरि)। |
| | नियतम् | – नि + यम् + क्त (कर्मणि)। |
| | वासः | – वस् + घञ् (भावे) |
| **(घ) तद्धितान्तः** | मनुष्यः | – मनु + षुक् (ष्) + यत्। मनोः अपत्यं पुमान् इत्यर्थः। |

**अहो बत महत्पापं कर्तुं व्यवसिता वयम्।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥1.45॥**

**पदच्छेदः** – अहो, बत, महत्, पापम्, कर्तुम्, व्यवसिताः, वयम्।
यत्, राज्यसुखलोभेन, हन्तुम्, स्वजनम्, उद्यताः ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| अहो | – अव्ययम् | बत | – अव्ययम् |
| महत् | – त.नपुं.द्वि.एक. | पापम् | – अ.नपुं.द्वि.एक. |
| कर्तुम् | – अव्ययम् | व्यवसिताः | – अ.पुं.प्र.बहु. |
| वयम् | – अस्मद्–सर्व.द.प्र.बहु. | यत् | – अव्ययम् |
| राज्यसुखलोभेन | – अ.पुं.तृ.एक. | हन्तुम् | – अव्ययम् |
| स्वजनम् | – अ.पुं.द्वि.एक. | उद्यताः | – अ.पुं.प्र.बहु. |

**पदार्थः** – अहो बत = आश्चर्यम्, वयम् = वयम्, महत् = अलघु, पापम् = दोषम्, कर्तुम् = आचरितुम्, व्यवसिताः = प्रवृत्ताः, यत् = यस्मात् हेतोः, राज्यसुखलोभेन = राज्यसौख्यलोलुपत्वेन, स्वजनम् = निजजनम्, हन्तुम् = नाशयितुम्, उद्यताः = प्रवृत्ताः।

**अन्वयः** – अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः यत् राज्यसुखलोभेन स्वजनं हन्तुम् उद्यताः ।

**आकाङ्क्षा –**

**व्यवसिताः** ।

| | |
|---|---|
| **के** व्यवसिताः । | – वयं **व्यवसिताः** । |
| वयं **किमर्थं** व्यवसिताः ? | – वयं **कर्तुं** व्यवसिताः । |
| वयं **किं कर्तुं** व्यवसिताः ? | – वयं **पापं कर्तुं** व्यवसिताः । |
| वयं **कीदृशं** पापं कर्तुं व्यवसिताः ? | – वयं **अहो बत ! महत्** पापं कर्तुं व्यवसिताः । |

अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, कस्मात् ? – अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, यत् **उद्यताः** ।

अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, **तत् किं यत् कर्तुम्** उद्यताः ?

– अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, **यत् हन्तुम्** उद्यताः ।

अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, यत् **कं** हन्तुम् उद्यताः ?

– अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, यत् **स्वजनं** हन्तुम् उद्यताः ।

अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, यत् स्वजनं **केन हेतुना** हन्तुम् उद्यताः ?

– अहो बत ! वयं महत् पापं कर्तुं व्यवसिताः, यत् स्वजनं **राज्यसुखलोभेन** हन्तुम् उद्यताः ।

**तात्पर्यम्** – हन्त ! राज्यसुखस्य लोभेन स्वजनान् एव मारयितुम् उद्युक्ताः वयं महदेव पापं कर्तुं प्रवृत्ताः स्मः ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | पापं कर्तुम् | – | पापम् + कर्तुम् | अनुस्वारसन्धिः |
| | कर्तुं व्यवसिताः | – | कर्तुम् + व्यवसिताः | अनुस्वारसन्धिः |
| | व्यवसिता वयम् | – | व्यवसिताः + वयम् | विसर्गसन्धिः (लोपः) |
| | यद्राज्यसुखलोभेन | – | यत् + राज्यसुखलोभेन | जश्त्वसन्धिः |
| | हन्तुं स्वजनम् | – | हन्तुम् + स्वजनम् | अनुस्वारसन्धिः |
| **(ख) समासः** | राज्यसुखलोभेन | – | राज्यस्य सुखम्, राज्यसुखम् – षष्ठीतत्पुरुषः । | |
| | | | – राज्यसुखे लोभः, तेन – सप्तमीतत्पुरुषः । | |
| **(ग) कृदन्तः** | व्यवसितः | – | वि + अव + सो + क्त (कर्तरि) । | |
| | उद्यतः | – | उद् + यम् + क्त (कर्तरि) । | |

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥1.46॥**

**पदच्छेदः –** यदि, माम्, अप्रतीकारम्, अशस्त्रम्, शस्त्रपाणयः ।
धार्तराष्ट्राः, रणे, हन्युः, तत्, मे, क्षेमतरम्, भवेत् ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| यदि | – | अव्ययम् | माम् | – | अस्मद् – द. सर्व.द्वि.एक. |
| अप्रतीकारम् | – | अ.पुं.द्वि.एक. | अशस्त्रम् | – | अ.पुं.द्वि.एक. |
| शस्त्रपाणयः | – | इ.पुं.प्र.बहु. | धार्तराष्ट्राः | – | अ.पुं.प्र.बहु. |
| रणे | – | अ.पुं.स.एक. | हन्युः | – | हन्–पर.कर्तरि वि.लिङ् .प्रपु.बहु. |
| तत् | – | तद्–द. सर्व.नपुं.प्र.एक. | मे | – | अस्मद्–द. सर्व.ष.एक. |
| क्षेमतरम् | – | अ.नपुं.प्र.एक. | भवेत् | – | भू–पर.कर्तरि.वि.लिङ् .प्रपु.एक. |

**पदार्थः** – यदि = पक्षान्तरे, शस्त्रपाणयः = आयुधधारिणः, धार्तराष्ट्राः = धृतराष्ट्रपुत्राः, अशस्त्रम् = आयुधरहितम्, अप्रतीकारम् = प्रतिक्रियाशून्यम्, माम् = माम्, रणे = युद्धे, हन्युः = नाशयेयुः, तत् = तत्, मे = मम, क्षेमतरम् = शुभकरम्, भवेत् = स्यात् ।

**अन्वयः** – यदि धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः तत् मे क्षेमतरं भवेत् ।

**आकाङ्क्षा –**

**हन्युः** ।

**के** हन्युः ? – **धार्तराष्ट्राः** हन्युः ।

धार्तराष्ट्राः **कं** हन्युः ? – धार्तराष्ट्राः **मां** हन्युः ।

धार्तराष्ट्राः **कीदृशाः** मां हन्युः ? – धार्तराष्ट्राः **शस्त्रपाणयः** मां हन्युः ।

धार्तराष्ट्राः शस्त्रपाणयः **कीदृशं** मां हन्युः ? – धार्तराष्ट्राः शस्त्रपाणयः **अशस्त्रं** मां हन्युः ।

धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रं **पुनश्च कीदृशं** मां हन्युः ?

– धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् **अप्रतीकारं** मां हन्युः ।

धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां **कुत्र** हन्युः ?

धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां **रणे** हन्युः ।

**यदि** धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः (तर्हि) **किं भवेत्** ?

– यदि धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः तर्हि **क्षेमतरं भवेत्** ।

यदि धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः तर्हि **किं** क्षेमतरं भवेत् ?

– यदि धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः तर्हि **तत्** क्षेमतरं भवेत् ।

यदि धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः तर्हि तत् **कस्य** क्षेमतरं भवेत् ?

– यदि धार्तराष्ट्राः शस्त्रपाणयः अशस्त्रम् अप्रतीकारं मां रणे हन्युः तर्हि तत् **मे** क्षेमतरं भवेत् ।

**तात्पर्यम्** – किञ्चिदपि प्रतीकारम् अकुर्वन्तम् अगृहीतशस्त्रं च मां गृहीतशस्त्राः एते कौरवाः यदि युद्धे मारयन्ति तर्हि तदेव मम क्षेमतरं भवति इति भावयामि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अशस्त्रं शस्त्रपाणयः | – अशस्त्रम् + शस्त्रपाणयः | अनुस्वारसन्धिः |
| | धार्तराष्ट्रा रणे | – धार्तराष्ट्राः + रणे | विसर्गसन्धिः (लोपः) |
| | हन्युस्तन्मे | – हन्युः + तत् | विसर्गसन्धिः (सकारः) |
| | | तत् + मे | अनुनासिकसन्धिः |
| | क्षेमतरं भवेत् | – क्षेमतरम् + भवेत् | अनुस्वारसन्धिः |
| **(ख) समासः** | अप्रतीकारम् | – न विद्यते प्रतीकारः यस्य सः अप्रतीकारः, तम् – नञ्बहुव्रीहिः । | |
| | अशस्त्रम् | – न विद्यते शस्त्रं यस्य सः अशस्त्रः, तम् – नञ्बहुव्रीहिः । | |
| | शस्त्रपाणयः | – शस्त्रं पाणौ येषां ते – व्यधिकरणबहुव्रीहिः । | |
| **(ग) कृदन्तः** | प्रतीकारम् | – प्रति + कृ + घञ् (भावे), तम् । प्रतीकारः / प्रतिकारः । | |
| **(घ) तद्धितान्तः** | धार्तराष्ट्राः | – दृश्यताम् – 1.19 | |
| | क्षेमतरम् | – क्षेम + तरप् (अतिशयार्थे) । अतिशयेन क्षेमम् । | |

**एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥1.47॥**

**पदच्छेदः** – एवम्, उक्त्वा, अर्जुनः, सङ्ख्ये, रथोपस्थे, उपाविशत् ।
विसृज्य, सशरम्, चापम्, शोकसंविग्नमानसः ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| एवम् | – | अव्ययम् | उक्त्वा | – | अव्ययम् |
| अर्जुनः | – | अ.पुं.प्र.एक. | सङ्ख्ये | – | अ.नपुं.स.एक. |
| रथोपस्थे | – | अ.पुं.स.एक. | उपाविशत् | – | उप + विश्–पर.कर्तरि लङ् प्रपु.एक. |
| विसृज्य | – | अव्ययम् | सशरम् | – | अ.पुं.द्वि.एक. |
| चापम् | – | अ.पुं.द्वि.एक. | शोकसंविग्नमानसः | – | अ.पुं.प्र.एक. |

**पदार्थः** – सङ्ख्ये = युद्धे, एवम् = अनेन प्रकारेण, उक्त्वा = भाषित्वा, शोकसंविग्नमानसः = दुःखाकुलचित्तः, अर्जुनः = धनञ्जयः, सशरम् = सबाणम्, चापम् = धनुः, विसृज्य = मुक्त्वा, रथोपस्थे = रथमध्यभागे, उपाविशत् = उपविष्टवान् ।

**अन्वयः** – सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः सशरं चापं विसृज्य रथोपस्थे उपाविशत् ।

**आकाङ्क्षा** –

**उपाविशत् ।**

**कः** उपाविशत् ? – **अर्जुनः** उपाविशत् ।

**कीदृशः** अर्जुनः उपाविशत् ? – **शोकसंविग्नमानसः** अर्जुनः उपाविशत् ।

**किं कृत्वा** शोकसंविग्नमानसः अर्जुनः उपाविशत् ?

– **उक्त्वा** शोकसंविग्नमानसः अर्जुनः उपाविशत् ।

**कथम्** उक्त्वा शोकसंविग्नमानसः अर्जुनः उपाविशत् ?

– **एवम्** उक्त्वा शोकसंविग्नमानसः अर्जुनः उपाविशत् ।

**कुत्र** एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः उपाविशत् ?

– **सङ्ख्ये** एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः उपाविशत् ।

सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः **पुनः किं कृत्वा** उपाविशत् ?

– सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः **विसृज्य** उपाविशत् ।

सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः **कं** विसृज्य उपाविशत् ?

– सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः **चापं** विसृज्य उपाविशत् ।

सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः **कीदृशं** चापं विसृज्य उपाविशत् ?

– सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः **सशरं** चापं विसृज्य उपाविशत् ।

सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः सशरं चापं विसृज्य **कुत्र** उपाविशत् ?

– सङ्ख्ये एवम् उक्त्वा शोकसंविग्नमानसः अर्जुनः सशरं चापं विसृज्य **रथोपस्थे** उपाविशत् ।

**तात्पर्यम् –** युद्धक्षेत्रे अर्जुनः श्रीकृष्णम् एवम् उक्त्वा धनुः बाणं च विसृज्य दुःखतप्तमानसः सन् रथे उपविष्टवान् ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | उक्त्वार्जुनः | – उक्त्वा + अर्जुनः | सवर्णदीर्घसन्धिः |
| | रथोपस्थ उपाविशत् | – रथोपस्थे + उपाविशत् | यान्तवान्तादेशसन्धिः, यलोपः, प्रकृतिभावश्च |
| | सशरं चापम् | – सशरम् + चापम् | अनुस्वारसन्धिः |
| | चापं शोकसंविग्नमानसः | – चापम् + शोकसंविग्नमानसः | अनुस्वारसन्धिः |
| **(ख) समासः** | रथोपस्थे | – रथस्य उपस्थः, तस्मिन् – षष्ठीतत्पुरुषः । | |
| | सशरम् | – शरेण सह वर्तते इति – बहुव्रीहिः । | |
| | शोकसंविग्नमानसः | – शोकेन संविग्नं शोकसंविग्नम् – तृतीयातत्पुरुषः । शोकसंविग्नं मानसं यस्य सः – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | विसृज्य | – वि + सृज् + ल्यप् । | |
| | संविग्नम् | – सम् + विज् + क्त । (कर्तरि) | |
| **(घ) तद्धितान्तः** | मानसम् | – मनस् + अण् (स्वार्थे) | |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥

## श्रीमद्भगवद्गीता

अथ द्वितीयोऽध्यायः

# सांख्ययोगः

**सञ्जय उवाच –** **तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥2.1॥**

**पदच्छेदः** – सञ्जयः उवाच – तम्, तथा, कृपया, आविष्टम्, अश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तम्, इदम्, वाक्यम्, उवाच, मधुसूदनः ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| तम् | – तद्–द.सर्व. पुं. द्वि.एक. | तथा | – अव्ययम् |
| कृपया | – आ. स्त्री. तृ. एक. | आविष्टम् | – अ. पुं. द्वि. एक. |
| अश्रुपूर्णाकुलेक्षणम् | – अ. पुं. द्वि. एक. | विषीदन्तम् | – विषीदत् त.पुं. द्वि.एक. |
| इदम् | – इदम्–म. सर्व. नपुं.द्वि.एक. | वाक्यम् | – अ. नपुं. द्वि. एक. |
| उवाच | – वच्–पर.कर्तरि लिट् प्रपु.एक. | मधुसूदनः | – अ. पुं. प्र. एक. |

**पदार्थः** – मधुसूदनः = श्रीकृष्णः, तथा = तेन प्रकारेण, कृपया = दयया, आविष्टम् = आक्रान्तम्, अश्रुपूर्णाकुलेक्षणम् = बाष्पपूर्णनेत्रम्, विषीदन्तम् = दुःखितम्, तम् = तम् (अर्जुनम् ), इदम् = एतत्, वाक्यम् = वचनम्, उवाच = अवदत् ।

**अन्वयः** – मधुसूदनः तथा कृपया आविष्टम् अश्रुपूर्णाकुलेक्षणं विषीदन्तं तम् इदं वाक्यम् उवाच ।

**आकाङ्क्षा** –

**उवाच** ।

**कः** उवाच ? – **मधुसूदनः** उवाच ।

मधुसूदनः **कम्** उवाच ? – मधुसूदनः **तम्** उवाच ।

मधुसूदनः **कथंभूतं** तम् उवाच ? – मधुसूदनः **आविष्टं** तम् उवाच ।

मधुसूदनः **कया** आविष्टं तम् उवाच ? – मधुसूदनः **कृपया** आविष्टं तम् उवाच ।

मधुसूदनः कृपया **कथम्** आविष्टं तम् उवाच ? – मधुसूदनः कृपया **तथा** आविष्टं तम् उवाच ।

मधुसूदनः कृपया तथा आविष्टं **पुनश्च कीदृशं** तम् उवाच ?
– मधुसूदनः कृपया तथा आविष्टम् **अश्रुपूर्णाकुलेक्षणं** तम् उवाच ।

मधुसूदनः कृपया तथा आविष्टम् अश्रुपूर्णाकुलेक्षणं **किं कुर्वन्तं** तम् उवाच ?
– मधुसूदनः कृपया तथा आविष्टम् अश्रुपूर्णाकुलेक्षणं **विषीदन्तं** तम् उवाच ।

---

**वि.सू.** – अस्मिन् अध्याये इतः अग्रिमेषु च अध्यायेषु अनुस्वारसन्धिः न प्रदर्श्यते ।

मधुसूदनः कृपया तथा आविष्टम् अश्रुपूर्णाकुलेक्षणं विषीदन्तं तं **किम्** उवाच ?

– मधुसूदनः कृपया तथा आविष्टम् अश्रुपूर्णाकुलेक्षणं विषीदन्तं तं **वाक्यम्** उवाच ।

मधुसूदनः कृपया तथा आविष्टम् अश्रुपूर्णाकुलेक्षणं विषीदन्तं तम् **किं** वाक्यम् उवाच ?

– मधुसूदनः कृपया तथा आविष्टम् अश्रुपूर्णाकुलेक्षणं विषीदन्तं तम् **इदं** वाक्यम् उवाच ।

**तात्पर्यम्** – भगवान् श्रीकृष्णः अर्जुनस्य शोचनीयाम् अवस्थां दृष्टवान् । ततः दयया आक्रान्तं शोकं च अनुभवन्तं तं सः एवम् उक्तवान् ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | कृपयाविष्टम् | – कृपया + आविष्टम् – सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अश्रुपूर्णाकुलेक्षणम् | – अश्रुभिः पूर्णे अश्रुपूर्णे – तृतीयातत्पुरुषः । |
| | | – अश्रुपूर्णे च आकुले च – आश्रुपूर्णाकुले – कर्मधारयः । |
| | | – अश्रुपूर्णाकुले ईक्षणे यस्य सः, तम् – बहुव्रीहिः । |
| **(ग) कृदन्तः** | विषीदन्तम् | – वि + सद् + शतृ (कर्तरि) तम् । |
| | आविष्टम् | – आ + विश् + क्त (कर्तरि) तम् । |
| | मधुसूदनः | – दृश्यताम् – 1.35 |

**श्रीभगवानुवाच** – **कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥2.2॥**

**पदच्छेदः** – श्रीभगवान् उवाच – कुतः, त्वा, कश्मलम्, इदम्, विषमे, समुपस्थितम् ।
अनार्यजुष्टम्, अस्वर्ग्यम्, अकीर्तिकरम्, अर्जुन ॥

**पदपरिचयः** –

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| कुतः | – | अव्ययम् | त्वा | – | युष्मद्–द. सर्व. पुं. द्वि. एक. |
| कश्मलम् | – | अ. नपुं. प्र. एक. | इदम् | – | म. सर्व. नपुं. प्र. एक. |
| विषमे | – | अ. पुं. स. एक. | समुपस्थितम् | – | अ. नपुं. प्र. एक. |
| अनार्यजुष्टम् | – | अ. नपुं. प्र. एक. | अस्वर्ग्यम् | – | अ. नपुं. प्र. एक. |
| अकीर्तिकरम् | – | अ. नपुं. प्र. एक. | अर्जुन | – | अ. पुं. सम्बो. एक. |

**पदार्थः** – अर्जुन = हे अर्जुन ! विषमे = विपत्तिकाले, अनार्यजुष्टम् = असाधुसेवितम्, अस्वर्ग्यम् = स्वर्गायोग्यम्, अकीर्तिकरम् = अयशस्करम्, इदम् = एतत्, कश्मलम् = चित्तकालुष्यम्, कुतः = कस्मात् कारणात्, त्वा = त्वाम्, समुपस्थितम् = समागतम् ।

**अन्वयः** – अर्जुन ! विषमे अनार्यजुष्टम् अस्वर्ग्यम् अकीर्तिकरम् इदं कश्मलं कुतः त्वा समुपस्थितम् ?

**आकाङ्क्षा** –

**समुपस्थितम्** ।

**किं** समुपस्थितम् ? – **इदं** समुपस्थितम् ।

इदं **किं** समुपस्थितम् ? — इदं **कश्मलं** समुपस्थितम् ।
**कीदृशम्** इदं कश्मलं समुपस्थितम् ? — **अनार्यजुष्टम्** इदं कश्मलं समुपस्थितम् ।
अनार्यजुष्टम् **पुनश्च कीदृशम्** इदं कश्मलं समुपस्थितम् ?
— अनार्यजुष्टम् **अस्वर्ग्यम्** इदं कश्मलं समुपस्थितम् ।
अनार्यजुष्टम् अस्वर्ग्यं **पुनश्च कीदृशम्** इदं कश्मलं समुपस्थितम् ?
— अनार्यजुष्टम् अस्वर्ग्यम् **अकीर्तिकरम्** इदं कश्मलं समुपस्थितम् ।
**कुत्र** अनार्यजुष्टम् अस्वर्ग्यम् अकीर्तिकरम् इदं कश्मलं समुपस्थितम् ?
— **विषमे** अनार्यजुष्टम् अस्वर्ग्यम् अकीर्तिकरम् इदं कश्मलं समुपस्थितम् ।
विषमे अनार्यजुष्टम् अस्वर्ग्यम् अकीर्तिकरम् इदं कश्मलं **कं** समुपस्थितम् ?
— विषमे अनार्यजुष्टम् अस्वर्ग्यम् अकीर्तिकरम् इदं कश्मलं **त्वा** समुपस्थितम् ।
— विषमे अनार्यजुष्टम् अस्वर्ग्यम् अकीर्तिकरम् इदं कश्मलं **कुतः** त्वा समुपस्थितम् ?
अस्मिन् श्लोके सम्बोधनपदं किम् ? — **अर्जुन** ।

**तात्पर्यम्** — हे अर्जुन ! क्लिष्टसमये असाधुसेवितम्, अस्वर्गफलम्, अयशस्करं च एतादृशं चित्तकालुष्यं कथं त्वां समागतम् ?

**व्याकरणम्** —

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कुतस्त्वा | — | कुतः + त्वा  विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | अनार्यजुष्टम् | — | आर्यैः जुष्टम् — आर्यजुष्टम् — तृतीयातत्पुरुषः । |
| | | | न आर्यजुष्टम् — नञ्तत्पुरुषः । |
| | अस्वर्ग्यम् | — | न स्वर्ग्यम् — नञ्तत्पुरुषः । |
| | अकीर्तिकरम् | — | न कीर्तिकरम् — नञ्तत्पुरुषः । |
| **(ग) कृदन्तः** | समुपस्थितम् | — | सम् + उप + स्था + क्त (कर्तरि) |
| | जुष्टम् | — | जुष् + क्त (कर्मणि) |
| **(घ) तद्धितान्तः** | कुतः | — | किम् + तसिल् (कु आदेशः) । कस्मात् इत्यर्थः । |

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥2.3॥**

**पदच्छेदः** — क्लैब्यम्, मा, स्म, गमः, पार्थ, न, एतत्, त्वयि, उपपद्यते ।
क्षुद्रम्, हृदयदौर्बल्यम्, त्यक्त्वा, उत्तिष्ठ, परन्तप ॥

**पदपरिचयः** —

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| क्लैब्यम् | — | अ. नपुं. द्वि. एक. | मा | — | अव्ययम् |
| स्म | — | अव्ययम् | गमः | — | गम्–कर्तरि लुङ्. मपु.एक. |
| पार्थ | — | अ. पुं. सम्बो.एक. | न | — | अव्ययम् |

| | | | | | |
|---|---|---|---|---|---|
| एतत् | - एतद्-द. सर्व. नपुं. प्र.एक. | त्वयि | - | युष्मद्-द.सर्व.स.एक. |
| उपपद्यते | - उप+पद्-आत्म.कतरि लट्.प्रपु.एक. | क्षुद्रम् | - | अ. नपुं. द्वि. एक. |
| हृदयदौर्बल्यम् | - अ.नपुं.द्वि.एक. | त्यक्त्वा | - | क्त्वान्तम् अव्ययम् |
| उत्तिष्ठ | - उद् + स्था-पर.कर्तरि लोट्.मपु.एक. | परन्तप | - | अ.पुं.सम्बो.एक. |

**पदार्थः** – पार्थ = हे अर्जुन ! क्लैब्यम् = नपुंसकत्वम्, मा स्म गमः = मा प्राप्नुहि, त्वयि = भवति, एतत् = इदम्, न उपपद्यते = न युज्यते, परन्तप = शत्रुपीडक ! (अर्जुन), क्षुद्रम् = तुच्छम्, हृदयदौर्बल्यम् = चित्तवैक्लव्यम्, त्यक्त्वा = विसृज्य, उत्तिष्ठ = सन्नद्धो भव ।

**अन्वयः** – हे पार्थ ! ईदृशं क्लैब्यं मा स्म गमः । त्वयि एतत् न उपपद्यते । परन्तप ! क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ ।

**आकाङ्क्षा** –

**मा स्म गमः** ।

| | |
|---|---|
| **किं** मा स्म गमः ? | – **क्लैब्यं** मा स्म गमः । |
| **(यतः) न उपपद्यते** । | |
| **किं** न उपपद्यते ? | – **एतत्** न उपपद्यते । |
| **कस्मिन्** एतत् न उपपद्यते ? | – **त्वयि** एतत् न उपपद्यते । |
| **(अतः) परन्तप ! उत्तिष्ठ** । | |
| **किं कृत्वा** उत्तिष्ठ । | – **त्यक्त्वा** उत्तिष्ठ । |
| **किं त्यक्त्वा** उत्तिष्ठ । | – **हृदयदौर्बल्यं** त्यक्त्वा उत्तिष्ठ । |
| **कीदृशं** हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ ? | – **क्षुद्रं** हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ । |
| अस्मिन् श्लोके सम्बोधनपदे के ? | – **अर्जुन । परन्तप ।** |

**तात्पर्यम्** – हे अर्जुन ! नपुंसकत्वं मा प्राप्नुहि । वीरस्य तव एतत् न युज्यते । एतादृशं तुच्छं चित्तवैक्लव्यं त्यक्त्वा युद्धार्थं सन्नद्धो भव ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नैतत् | – न + एतत् | वृद्धिसन्धिः |
| | त्वय्युपपद्यते | – त्वयि + उपपद्यते | यणसन्धिः |
| | त्यक्त्वोत्तिष्ठ | – त्यक्त्वा + उत्तिष्ठ | गुणसन्धिः |
| **(ख) समासः** | हृदयदौर्बल्यम् | – हृदयस्य दौर्बल्यम् | – षष्ठीतत्पुरुषः |
| **(ग) कृदन्तः** | त्यक्त्वा | – त्यज् + क्त्वा । | |
| **(घ) तद्धितान्तः** | क्लैब्यम् | – क्लीब + ष्यञ् (भावे) । क्लीबस्य भावः इत्यर्थः । | |
| | दौर्बल्यम् | – दुर्बल + ष्यञ् (भावे) । दुर्बलस्य भावः इत्यर्थः । | |

**अर्जुन उवाच** – **कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥2.4॥**

**पदच्छेदः** – अर्जुनः उवाच – कथम्, भीष्मम्, अहम्, सङ्ख्ये, द्रोणम्, च, मधुसूदन।
इषुभिः, प्रतियोत्स्यामि, पूजार्हौ, अरिसूदन ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| कथम् | – | अव्ययम् | भीष्मम् | – | अ. पुं. द्वि. एक. |
| अहम् | – | अस्मद्–द. सर्व. प्र. एक. | सङ्ख्ये | – | अ. नपुं. स. एक. |
| द्रोणम् | – | अ. पुं. द्वि. एक. | च | – | अव्ययम् |
| मधुसूदन | – | अ. पुं. सम्बो.एक. | इषुभिः | – | उ.पुं. तृ.बहु. |
| प्रतियोत्स्यामि | – | प्रति + युध्–पर.लृट्. उपु. एक. | पूजार्हौ | – | अ. पुं. द्वि. द्विव. |
| अरिसूदन | – | अ. पुं. सम्बो. एक. | | | |

**पदार्थः** – मधुसूदन = हे कृष्ण ! अहम् = अहम्, सङ्ख्ये = युद्धे, कथम् = केन प्रकारेण,पूजार्हौ = सम्मान्यौ, भीष्मं द्रोणं च = भीष्मं द्रोणं च, इषुभिः = बाणैः, प्रतियोत्स्यामि = सम्प्रहरिष्यामि, अरिसूदन = हे शत्रुभञ्जन !

**अन्वयः** – मधुसूदन ! अहं सङ्ख्ये कथम् इषुभिः पूजार्हौ भीष्मं द्रोणं च प्रतियोत्स्यामि ? अरिसूदन !

**आकाङ्क्षा** –

**प्रतियोत्स्यामि** ।

**कुत्र** प्रतियोत्स्यामि ? – **सङ्ख्ये** प्रतियोत्स्यामि ।
सङ्ख्ये **कं** प्रतियोत्स्यामि ? – सङ्ख्ये **भीष्मं** प्रतियोत्स्यामि ।
सङ्ख्ये भीष्मं **पुनश्च कं** प्रतियोत्स्यामि ? – सङ्ख्ये भीष्मं **द्रोणं च** प्रतियोत्स्यामि ।
सङ्ख्ये **कीदृशौ** भीष्मं द्रोणं च प्रतियोत्स्यामि ? – सङ्ख्ये **पूजार्हौ** भीष्मं द्रोणं च प्रतियोत्स्यामि ।
सङ्ख्ये पूजार्हौ भीष्मं द्रोणं च **कैः** प्रतियोत्स्यामि ? – सङ्ख्ये पूजार्हौ भीष्मं द्रोणं च **इषुभिः** प्रतियोत्स्यामि ।
सङ्ख्ये **कथं** पूजार्हौ भीष्मं द्रोणं च इषुभिः प्रतियोत्स्यामि ?
अस्मिन् श्लोके सम्बोधनपदे के ? **– मधुसूदन । अरिसूदन ।**

**तात्पर्यम्** – हे मधुसूदन ! पितामहः भीष्मः आचार्यः द्रोणश्च मम अत्यन्तं पूजार्हौ । अहं युद्धे कथं तौ प्रति बाणप्रयोगं करवाणि ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पूजार्हावरिसूदन | – पूजार्हौ + अरिसूदन | यान्तवान्तादेशसन्धिः |
| **(ख) समासः** | पूजार्हौ | – पूजाम् अर्हौ – द्वितीयातत्पुरुषः । | |
| **(ग) कृदन्तः** | अर्हः | – अर्ह् + अच् (कर्तरि) | |

**गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥2.5॥**

**पदच्छेदः –** गुरून्, अहत्वा, हि, महानुभावान्, श्रेयः, भोक्तुम्, भैक्ष्यम्, अपि, इह, लोके। हत्वा, अर्थकामान्, तु , गुरून्, इह, एव, भुञ्जीय, भोगान्, रुधिरप्रदिग्धान् ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| गुरून् | – उ.पुं.द्वि.बहु. | अहत्वा | – क्त्वान्तम् अव्ययम् |
| हि | – अव्ययम् | महानुभावान् | – अ.पुं.द्वि.बहु. |
| श्रेयः | – श्रेयस्–स.नपुं.प्र.एक. | भोक्तुम् | – तुमुन्नन्तम् अव्ययम् |
| भैक्ष्यम् | – अ.नपुं.द्वि.एक. | अपि | – अव्ययम् |
| इह | – अव्ययम् | लोके | – अ.पुं.स.एक. |
| हत्वा | – क्त्वान्तम् अव्ययम् | अर्थकामान् | – अ.पुं.द्वि.बहु. |
| तु | – अव्ययम् | एव | – अव्ययम् |
| भुञ्जीय | – भुज्–आत्म.वि.लिङ्.उपु.एक. | भोगान् | – अ.पुं.द्वि.बहु. |
| रुधिरप्रदिग्धान् | – अ.पुं.द्वि.बहु. | | |

**पदार्थः –** महानुभावान् = महाशयान्, गुरून् = आचार्यान्, अहत्वा = अविनाश्य(स्थितस्य मम), भैक्ष्यम् = भिक्षाम्, भोक्तुम् = खादितुम्, इह लोके = अस्मिन् लोके, श्रेयः = साधु, गुरून् = आचार्यान्, हत्वा = विनाश्य, इह एव = अस्मिन् प्रपञ्चे एव, रुधिरप्रदिग्धान् = रक्तमिश्रितान्, अर्थकामान् = अर्थकामरूपान्, भोगान् = वस्तुविशेषान्, भुञ्जीय = आस्वादयेयम्।

**अन्वयः –** महानुभावान् गुरून् अहत्वा (स्थितस्य मम) भैक्ष्यं भोक्तुम् इह लोके श्रेयः। गुरून् हत्वा इह एव रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ?

**आकाङ्क्षा –**

**श्रेयः**।

**किं कर्तुं** श्रेयः ? – **भोक्तुं** श्रेयः।

**किं** भोक्तुं श्रेयः ? – **भैक्ष्यं** भोक्तुं श्रेयः।

**किं कृत्वा** (स्थितस्य मम) भैक्ष्यं भोक्तुं श्रेयः ? – **अहत्वा** (स्थितस्य मम) भैक्ष्यं भोक्तुं श्रेयः।

**कान्** अहत्वा स्थितस्य मम भैक्ष्यं भोक्तुं श्रेयः ? – **गुरून्** अहत्वा स्थितस्य मम भैक्ष्यं भोक्तुं श्रेयः।

**कीदृशान्** गुरून् अहत्वा स्थितस्य मम भैक्ष्यं भोक्तुं श्रेयः ?

– **महानुभावान्** गुरून् अहत्वा स्थितस्य मम भैक्ष्यं भोक्तुं श्रेयः।

महानुभावान् गुरून् अहत्वा स्थितस्य मम भैक्ष्यं **कुत्र** भोक्तुं श्रेयः ?

– महानुभावान् गुरून् अहत्वा स्थितस्य मम भैक्ष्यं **लोके** भोक्तुं श्रेयः।

महानुभावान् गुरून् अहत्वा स्थितस्य मम भैक्ष्यं **कस्मिन्** लोके भोक्तुं श्रेयः ?

– महानुभावान् गुरून् अहत्वा स्थितस्य मम भैक्ष्यम् **इहैव** लोके भोक्तुं श्रेयः।

भुञ्जीय ।

**कान्** भुञ्जीय ? - **भोगान्** भुञ्जीय ।

**कान्** भोगान् भुञ्जीय ? - **अर्थकामान्** भोगान् भुञ्जीय ।

**कीदृशान्** अर्थकामान् भोगान् भुञ्जीय ? - **रुधिरप्रदिग्धान्** अर्थकामान् भोगान् भुञ्जीय ।

**कुत्र** रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ?

- **इह एव** रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ।

**किं कृत्वा** इह एव रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ?

- **हत्वा** इह एव रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ।

**कान्** हत्वा इह एव रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ?

- **गुरून्** हत्वा इह एव रुधिरप्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ।

**तात्पर्यम् –** एतान् महानुभावान् गुरून् भीष्मद्रोणादीन् अहत्वा भिक्षायाचनेन जीवनमपि वरम् । किन्तु एतेषां हननेन प्राप्यमाणाः ये भोगाः रक्तलिप्ताः भविष्यन्ति तेषाम् उपभोगः सर्वथा नोचितः ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | श्रेयो भोक्तुम् | - श्रेयः + भोक्तुम् | विसर्गसन्धिः (सकारः) उकारः, गुणः |
| | अपीह | - अपि + इह | सवर्णदीर्घसन्धिः |
| | इहैव | - इह + एव | वृद्धिसन्धिः |
| **(ख) समासः** | महानुभावान् | - महान् अनुभावः येषां ते, तान् - बहुव्रीहिः । | |
| **(ग) कृदन्तः** | हत्वा | - दृश्यताम् - 1.31 | |
| | भोक्तुम् | - भुज् + तुमुन् । | |
| **(घ) तद्धितान्तः** | श्रेयः | - प्रशस्त + ईयसुन् (अतिशये) प्रशस्तशब्दस्य श्र इति आदेशः । | |
| | भैक्ष्यम् | - भिक्षा + ष्यञ् (स्वार्थे) | |

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥2.6॥**

**पदच्छेदः –** न, च, एतत्, विद्मः, कतरत्, नः, गरीयः, यत्, वा, जयेम, यदि, वा, नः, जयेयुः । यान्, एव, हत्वा, न, जिजीविषामः, ते, अवस्थिताः, प्रमुखे, धार्तराष्ट्राः ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| न | - अव्ययम् | च | - अव्ययम् |
| एतत् | - द.सर्व.नपुं.द्वि.एक. | विद्मः | - विद्-पर.कर्तरि लट्.उपु.बहु. |
| कतरत् | - कतरत्-त.नपुं.प्र.एक. | नः | - अस्मद्-द.सर्व.ष.बहु. |
| गरीयः | - गरीयस्-स.नपुं.प्र.एक. | यत् | - यद्-द.सर्व.नपुं.प्र.एक. |
| वा | - अव्ययम् | जयेम | - जि-पर.कर्तरि वि.लिङ्.उपु.बहु. |

| | | | | |
|---|---|---|---|---|
| यदि | – अव्ययम् | नः | – | अस्मद्–द.सर्व.द्वि.बहु. |
| जयेयुः | – जि–पर.कर्तरि वि.लिङ्.प्रपु.बहु. | यान् | – | यद्–द.सर्व.पुं.द्वि.बहु. |
| एव | – अव्ययम् | हत्वा | – | क्त्वान्तम् अव्ययम् |
| जिजीविषामः | – जीव्–(सन्)पर.कर्तरि लट्.उपु.बहु. | ते | – | तद्–द.सर्व.पुं.प्र.बहु. |
| अवस्थिताः | – अ.पुं.प्र.बहु. | प्रमुखे | – | अ.पुं.स.एक. |
| धार्तराष्ट्राः | – अ.पुं.प्र.बहु. | | | |

**पदार्थः** – न च = न च, एतत् = इदम्, विद्मः = जानीमः, कतरत् = किम्, नः = अस्माकम्, गरीयः = श्रेयः, यद् वा = यदि वा, जयेम = जयं प्राप्नुयाम, यदि वा = अथ वा, नः = अस्मान्, जयेयुः = (ते) पराजयेरन्, यान् एव = यान् एव, हत्वा = मारयित्वा, न जिजीविषामः = जीवितुं न इच्छामः, ते धार्तराष्ट्राः= तादृशाः धृतराष्ट्रस्य सुताः, प्रमुखे = सम्मुखे, अवस्थिताः = उपस्थिताः ।

**अन्वयः** – यान् हत्वा न जिजीविषामः ते एव धार्तराष्ट्राः प्रमुखे अवस्थिताः (तस्मात्) यद् वा जयेम यदि वा नो जयेयुः (अनयोः) कतरत् नः गरीयः (इति) एतत् न विद्मः ।

**आकाङ्क्षा** –

**न विद्मः** ।

**किं** न विद्मः ? – **एतत्** न विद्मः ।

**किम्** एतत् न विद्मः ?

**'यद्वा जयेम यदि वा नो जयेयुः (अनयोः) कतरत् गरीयः** (इति) एतत् न विद्मः ।

यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् **केषां** गरीयः इति एतत् न विद्मः ?

– यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् **नः** गरीयः इति एतत् न विद्मः ।

**कुतः** यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् **नः** गरीयः इति एतत् न विद्मः ?

– (यतः) **अवस्थिताः** (तस्मात्) यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ।

**के** अवस्थिताः यस्मात् यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ?

– **धार्तराष्ट्राः** अवस्थिताः तस्मात् यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ।

**कीदृशाः** धार्तराष्ट्राः अवस्थिताः यस्मात् यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ?

– **यानेव हत्वा न जिजीविषामः ते** धार्तराष्ट्राः अवस्थिताः तस्मात् यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ।

यानेव हत्वा न जिजीविषामः ते धार्तराष्ट्राः **कुत्र** अवस्थिताः यस्मात् यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ?

– यानेव हत्वा न जिजीविषामः ते धार्तराष्ट्राः **प्रमुखे** अवस्थिताः तस्मात् यद्वा जयेम यदि वा नो जयेयुः अनयोः कतरत् नः गरीयः इति एतत् न विद्मः ।

**तात्पर्यम्** – यान् हत्वा वयं जीवितुं न शक्नुमः तादृशाः दुर्योधनादयः समरे उपस्थिताः सन्ति। युद्धे अन्यस्य हननम् अन्यस्य च जीवनम् इत्येतत् अवश्यम्भावि। तस्मात् यदि वयं जीवनम् इच्छामः तर्हि अवश्यं तेषां मरणं काङ्क्षणीयम्। अथ वयं मरणम् इच्छामः ते कामं जीवन्ति। किन्तु समरशूराणाम् अस्माकम् एतत् अवमानं भवति। तस्मात् अनयोः किम् अस्माकम् उचितमिति न जानीमः।

**व्याकरणम्** –

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| चैतत् | – | च + एतत् | वृद्धिसन्धिः |
| एतद्विद्मः | – | एतत् + विद्मः | जश्त्वसन्धिः |
| कतरन्नः | – | कतरत् + नः | अनुनासिकसन्धिः |
| नो गरीयो यद्वा | – | नः + गरीयः | विसर्गसन्धिः (सकारः) उकारः, गुणः |
| | | गरीयः + यत् | विसर्गसन्धिः (सकारः) उकारः, गुणः |
| | | यत् + वा | जश्त्वसन्धिः |
| नो जयेयुः | – | नः + जयेयुः | विसर्गसन्धिः (सकारः) उकारः, गुणः |
| जिजीविषामस्ते | – | जिजीविषामः + ते | विसर्गसन्धिः (सकारः) |
| तेऽवस्थिताः | – | ते + अवस्थिताः | पूर्वरूपसन्धिः |

**(ख) कृदन्तः** अवस्थिताः – दृश्यताम् – 1.11

**(ग) तद्धितान्तः**

| | | |
|---|---|---|
| कतरत् | – | किम् + डतरच् (स्वार्थे)। |
| गरीयः | – | गुरु + ईयसुन् (अतिशये)। अतिशयेन गुरुः इत्यर्थः। |
| धार्तराष्ट्राः | – | दृश्यताम् – 1.19 |

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥2.7॥**

**पदच्छेदः** – कार्पण्यदोषोपहतस्वभावः, पृच्छामि, त्वाम्, धर्मसम्मूढचेताः।
यत्, श्रेयः, स्यात्, निश्चितम्, ब्रूहि, तत्, मे, शिष्यः, ते, अहम्, शाधि, माम्, त्वाम्, प्रपन्नम्॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| कार्पण्यदोषोपहतस्वभावः | – अ.पुं.प्र.एक. | पृच्छामि | – प्रच्छ्–पर.कर्तरि लट्.उपु.एक. |
| त्वाम् | – युष्मद्–द.सर्व.द्वि.एक. | धर्मसम्मूढचेताः | – धर्मसम्मूढचेतस्–स.पुं.प्र.एक. |
| यत् | – यद्–द.सर्व.नपुं.प्र.एक. | श्रेयः | – श्रेयस्–स.नपुं.प्र.एक. |
| स्यात् | – अस्–पर.कर्तरि वि.लिङ्.प्रपु.एक. | निश्चितम् | – अ.नपुं.प्र.एक. |
| ब्रूहि | – ब्रूञ्–पर.कर्तरि लोट्.मपु.एक. | तत् | – तद्–द.सर्व.नपुं.द्वि.एक. |
| मे | – अस्मद्–द.सर्व.ष.एक. | शिष्यः | – अ.पुं.प्र.एक. |
| ते | – युष्मद्–द.सर्व.ष.एक. | अहम् | – अस्मद्–द.सर्व.प्र.एक. |

शाधि - शास्-पर.कर्तरि लोट्.मपु.एक. माम् - अस्मद्-द.सर्व.द्वि.एक.
प्रपन्नम् - अ.पुं.द्वि.एक.

**पदार्थः –** कार्पण्यदोषोपहतस्वभावः = लुब्धत्वदोषेण नष्टस्वभावः, पृच्छामि = प्रश्नं करोमि, त्वाम् = भवन्तम्, धर्मसम्मूढचेताः = धर्मे मूढमनस्कः, मे = मम, यत् निश्चितं श्रेयः = यत् असन्दिग्धं हितम्, स्यात् = भवेत्, तत् ब्रूहि = तद् वद, अहं ते शिष्यः = अहं तव शासनीयः, त्वां प्रपन्नम् = त्वाम् उपगतम्, मां शाधि = माम् उपदिश।

**अन्वयः –** कार्पण्यदोषोपहतस्वभावः धर्मसम्मूढचेताः त्वां पृच्छामि – यत् निश्चितं श्रेयः स्यात् तत् मे ब्रूहि। अहं ते शिष्यः। त्वां प्रपन्नं मां शाधि।

**आकाङ्क्षा –**

**पृच्छामि ।**

अहं **कीदृशः** पृच्छामि ? – अहं **कार्पण्यदोषोपहतस्वभावः** पृच्छामि।

अहं कार्पण्यदोषोपहतस्वभावः **पुनश्च कीदृशः** पृच्छामि ?

– अहं कार्पण्यदोषोपहतस्वभावः **धर्मसम्मूढचेताः** पृच्छामि।

अहं धर्मसम्मूढचेताः कार्पण्यदोषोपहतस्वभावः **कं** पृच्छामि ?

– अहं धर्मसम्मूढचेताः कार्पण्यदोषोपहतस्वभावः **त्वां** पृच्छामि।

अहं धर्मसम्मूढचेताः कार्पण्यदोषोपहतस्वभावः त्वां पृच्छामि (तस्मात्) **किं ब्रूहि** ?

– अहं धर्मसम्मूढचेताः कार्पण्यदोषोपहतस्वभावः त्वां पृच्छामि तस्मात् **तत् ब्रूहि**।

अहं धर्मसम्मूढचेताः कार्पण्यदोषोपहतस्वभावः त्वां पृच्छामि तस्मात् **कीदृशं** तत् ब्रूहि ?

अहं धर्मसम्मूढचेताः कार्पण्यदोषोपहतस्वभावः त्वां पृच्छामि तस्मात् **यत् निश्चितं श्रेयः** तत् ब्रूहि।

**शिष्यः ।**

**कः** शिष्यः ? – **अहं** शिष्यः।
अहं **कस्य** शिष्यः ? – अहं **ते** शिष्यः।
अहं ते शिष्यः। **तेन किम्** ? – अहं ते शिष्यः। **शाधि**।
**कं** शाधि ? – **मां** शाधि।
**कीदृशं** मां शाधि ? – **प्रपन्नं** मां शाधि।
**कं** प्रपन्नं मां शाधि ? – **त्वां** प्रपन्नं मां शाधि।

**तात्पर्यम् –** एते सर्वे मदीयाः। तस्मात् एतेषां न किञ्चिदपि हानिः भवेत् इति लुब्धत्वेन दोषेण इदानीं मम विचारशक्तिः नष्टा अस्ति। धर्मविषये मम चेतः सम्मूढम् अस्ति। अतः पृच्छामि – इदानीं मम यत् असन्दिग्धं श्रेयः तत् त्वं वद। अहं त्वामेव शरणं गतः अस्मि। माम् उपदिश।

**व्याकरणम् –**

**(क) सन्धिः** यच्छ्रेयः – यत् + श्रेयः श्चुत्वम्, छत्वसन्धिः
स्यान्निश्चितम् – स्यात् + निश्चितम् अनुनासिकसन्धिः
तन्मे – तत् + मे जश्त्वम्, अनुनासिकसन्धिः

| | | |
|---|---|---|
| शिष्यस्ते | – शिष्यः + ते | विसर्गसन्धिः (सकारः) |
| तेऽहम् | – ते + अहम् | पूर्वरूपसन्धिः |

**(ख) समासः** कार्पण्यदोषोपहतस्वभावः – कार्पण्यं दोषः कार्पण्यदोषः – कर्मधारयः ।
– कार्पण्यदोषेण उपहतः कार्पण्यदोषोपहतः – तृतीयातत्पुरुषः ।
– कार्पण्यदोषोपहतः स्वभावः यस्य सः – बहुव्रीहिः ।

धर्मसम्मूढचेताः – धर्मे सम्मूढम् धर्मसम्मूढम् – सप्तमीतत्पुरुषः ।
– धर्मसम्मूढं चेतः यस्य सः – बहुव्रीहिः ।

**(ग) कृदन्तः** निश्चितम् –निस् + चि + क्त (कर्मणि)
शिष्यः –शास् + क्यप् (कर्मणि) । शासनीयः इत्यर्थः ।
प्रपन्नम् –प्र + पद् + क्त (कर्तरि)

**नहि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥2.8॥**

**पदच्छेदः –** न, हि, प्रपश्यामि, मम, अपनुद्यात्, यत्, शोकम्, उच्छोषणम्, इन्द्रियाणाम् ।
अवाप्य, भूमौ, असपत्नम्, ऋद्धम्, राज्यम्, सुराणाम्, अपि, च, आधिपत्यम् ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| नहि | – अव्ययम् | प्रपश्यामि | – प्र + दृशिर्–पर.कर्तरि लट्.उपु.एक. |
| मम | – अस्मद्–द.सर्व.ष.एक. | अपनुद्यात् | – अप+नुद्–पर.वि.लिङ्.प्रपु.एक. |
| यत् | – यद्–द.सर्व.नपुं.प्र.एक. | शोकम् | – अ.पुं.द्वि.एक. |
| उच्छोषणम् | – अ.पुं.द्वि.एक. | इन्द्रियाणाम् | – अ.नपुं.ष.बहु. |
| अवाप्य | – ल्यबन्तम् अव्ययम् | भूमौ | – इ.स्त्री.स.एक. |
| असपत्नम् | – अ.नपुं.द्वि.एक. | ऋद्धम् | – अ.नपुं.द्वि.एक. |
| राज्यम् | – अ.नपुं.द्वि.एक. | सुराणाम् | – अ.पुं.ष.बहु. |
| अपि | – अव्ययम् | च | – अव्ययम् |
| आधिपत्यम् | – अ.नपुं.द्वि.एक. | | |

**पदार्थः –** भूमौ = महीतले, असपत्नम् = प्रतिस्पर्धिविरहितम्, ऋद्धम् = धनधान्यादिभिःसमृद्धम्, राज्यं च = राज्यं च, सुराणाम् = देवानाम्, आधिपत्यम् = स्वामित्वम्, अवाप्य अपि = प्राप्य अपि, मम = मम, इन्द्रियाणाम् = इन्द्रियाणाम्, उच्छोषणम् = शोषकम्, शोकम् = दुःखम्, यत् अपनुद्यात् = यत् दूरीकुर्यात् (तत्), नहि प्रपश्यामि = विशेषतः न पश्यामि ।

**अन्वयः –** भूमौ असपत्नम् ऋद्धं महत् राज्यं सुराणाम् आधिपत्यं च अवाप्य अपि (स्थितस्य) मम यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् (तत्कर्म) नहि प्रपश्यामि ।

आकाङ्क्षा –

**नहि प्रपश्यामि ।**

**किं** नहि प्रपश्यामि ? – **(तत् कर्म)** नहि प्रपश्यामि ।

**कीदृशं** (तत् कर्म) नहि प्रपश्यामि ? – **यद् अपनुद्यात्** (तत् कर्म) नहि प्रपश्यामि ।

**तत् किम्** अपनुद्यात् यत् कर्म नहि प्रपश्यामि ? – **यत् शोकम्** अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**तत् कीदृशं** शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **यत् उच्छोषणं** शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**तत् केषाम्** उच्छोषणं शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **यत् इन्द्रियाणाम्** उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**किं कृत्वापि स्थितस्य** तत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **अवाप्यापि स्थितस्य** यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

अवाप्यापि स्थितस्य **कस्य** यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ?

– अवाप्यापि स्थितस्य **मम** यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**किं किम्** अवाप्यापि स्थितस्य मम तत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **राज्यम् आधिपत्यं च** अवाप्यापि स्थितस्य मम यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**कीदृशं** राज्यम्, **केषाम्** आधिपत्यं च अवाप्यापि स्थितस्य मम तत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **असपत्नं** राज्यम्, **सुराणाम्** आधिपत्यं च अवाप्यापि स्थितस्य मम यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**पुनश्च कीदृशम्** असपत्नं राज्यम्, सुराणाम् आधिपत्यं च अवाप्यापि स्थितस्य मम तत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **ऋद्धम्** असपत्नं राज्यम्, सुराणाम् आधिपत्यं च अवाप्यापि स्थितस्य मम यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**कुत्र** ऋद्धम् असपत्नं राज्यम्, सुराणाम् आधिपत्यं च अवाप्यापि स्थितस्य मम तत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् यत् कर्म नहि प्रपश्यामि ?

– **भूमौ** ऋद्धम् असपत्नं राज्यम्, सुराणाम् आधिपत्यं च अवाप्यापि स्थितस्य मम यत् इन्द्रियाणाम् उच्छोषणं शोकम् अपनुद्यात् तत् कर्म नहि प्रपश्यामि ।

**तात्पर्यम्** – मया भूमौ अस्यां निष्कण्टकं समृद्धं राज्यं प्राप्येत, देवानां च आधिपत्यं लभ्येत, तथापि इन्द्रियाणां विशोषकः अयं शोकः गुरुबान्धवादीनां हननेच्छया समुत्पन्नः येन दूरीभवति तादृशं किमपि कर्म न पश्यामि ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | ममापनुद्याद् | – मम + अपनुद्यात् | सवर्णदीर्घसन्धिः |
| | यच्छोकम् | – यत् + शोकम् | श्चुत्वसन्धिः, छत्वसन्धिः |
| | भूमावसपत्नम् | – भूमौ + असपत्नम् | यान्तवान्तादेशसन्धिः |
| | चाधिपत्यम् | – च + आधिपत्यम् | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | असपत्नम् | – न विद्यते सपत्नः यस्य तत् – नञ्बहुव्रीहिः । | |
| **(ग) कृदन्तः** | उच्छोषणम् | – उत् + शुष् + ल्यु (कर्तरि) | |
| | अवाप्य | – अव + आप् + ल्यप् | |
| **(घ) तद्धितान्तः** | राज्यम् | – राजन् + यत् (कर्मार्थे भावार्थे वा) । राज्ञः कर्म भावः वा इत्यर्थः । | |
| | आधिपत्यम् | – अधिपति + यक् (भावे) अधिपतित्वम् इत्यर्थः । | |

**सञ्जय उवाच –** **एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥2.9॥**

**पदच्छेदः –** सञ्जयः उवाच – एवम्, उक्त्वा, हृषीकेशम्, गुडाकेशः, परन्तप ।
न, योत्स्ये, इति, गोविन्दम्, उक्त्वा, तूष्णीम्, बभूव, ह ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| एवम् | – | अव्ययम् | उक्त्वा | – | क्त्वान्तम् अव्ययम् |
| हृषीकेशम् | – | अ.पुं.द्वि.एक. | गुडाकेशः | – | अ.पुं.प्र.एक. |
| परन्तप | – | अ.पुं.सम्बो.एक. | न | – | अव्ययम् |
| योत्स्ये | – | युध्–आत्म.कर्तरि लृट्.उपु.एक. | इति | – | अव्ययम् |
| गोविन्दम् | – | अ.पुं.द्वि.एक. | उक्त्वा | – | क्त्वान्तम् अव्ययम् |
| तूष्णीम् | – | अव्ययम् | बभूव | – | भू–पर. कर्तरि लिट्.प्रपु.एक. |
| ह | – | अव्ययम् | | | |

**पदार्थः –** परन्तप = हे धृतराष्ट्र ! हृषीकेशम् = श्रीकृष्णम्, एवम् = अनेन प्रकारेण, उक्त्वा = कथयित्वा, गुडाकेशः = अर्जुनः, न योत्स्ये इति = युद्धं न करिष्यामि इति, गोविन्दम् = कृष्णम्, उक्त्वा = कथयित्वा, तूष्णीम् = मौनी, बभूव ह = अभवत् किल ।

**अन्वयः –** परन्तप ! हृषीकेशम् एवम् उक्त्वा गुडाकेशः 'न योत्स्ये' इति गोविन्दम् उक्त्वा तूष्णीं बभूव ।

**आकाङ्क्षा –**

**बभूव ।**

**कः** बभूव ? – **गुडाकेशः** बभूव ।

गुडाकेशः **कथं** बभूव ? – गुडाकेशः **तूष्णीं** बभूव ।

**किं कृत्वा** गुडाकेशः तूष्णीं बभूव ? – **उक्त्वा** गुडाकेशः तूष्णीं बभूव ।

**किम्** उक्त्वा गुडाकेशः तूष्णीं बभूव ? — **एवम्** उक्त्वा गुडाकेशः तूष्णीं बभूव ।

**कम्** एवम् उक्त्वा गुडाकेशः तूष्णीं बभूव ? — **हृषीकेशम्** एवम् उक्त्वा गुडाकेशः तूष्णीं बभूव ।

हृषीकेशम् एवम् उक्त्वा गुडाकेशः **किं कृत्वा** तूष्णीं बभूव ?

— हृषीकेशम् एवम् उक्त्वा गुडाकेशः **उक्त्वा** तूष्णीं बभूव ।

हृषीकेशम् एवम् उक्त्वा गुडाकेशः **किमिति** उक्त्वा तूष्णीं बभूव ?

— हृषीकेशम् एवम् उक्त्वा गुडाकेशः **'न योत्स्ये'** इति उक्त्वा तूष्णीं बभूव ।

हृषीकेशम् एवम् उक्त्वा गुडाकेशः 'न योत्स्ये' इति **कम्** उक्त्वा तूष्णीं बभूव ?

— हृषीकेशम् एवम् उक्त्वा गुडाकेशः 'न योत्स्ये' इति **गोविन्दम्** उक्त्वा तूष्णीं बभूव ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? — **परन्तप ।**

**तात्पर्यम् –** अर्जुनः अनेन प्रकारेण कृष्णम् उक्त्वा अहं युद्धं न करिष्यामि इति स्वाशयं च निवेद्य तूष्णीम् अभवत् इति सञ्जयः धृतराष्ट्रम् अवदत् ।

**व्याकरणम् –**

| | | |
|---|---|---|
| **(क) सन्धिः** | योत्स्य इति | – योत्स्ये + इति यान्तवान्तादेशसन्धिः, यलोपः प्रकृतिभावश्च |
| **(ग) कृदन्तः** | उक्त्वा | – वच् + क्त्वा |
| | गोविन्दम् | – दृश्यताम् – 1.32 |

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**<br>**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥2.10॥**

**पदच्छेदः –** तम्, उवाच, हृषीकेशः, प्रहसन्, इव, भारत । सेनयोः, उभयोः, मध्ये, विषीदन्तम्, इदम्, वचः ॥

**पदच्छेदः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| तम् | - | तद्–द्.सर्व.पुं.द्वि.एक. | उवाच | - | वच्–पर.कर्तरि लिट्.प्रपु.एक. |
| हृषीकेशः | - | अ.पुं.प्र.एक. | प्रहसन् | - | प्रहसत्–त.पुं.प्र.एक. |
| इव | - | अव्ययम् | भारत | - | अ.पुं.सम्बो.एक. |
| सेनयोः | - | आ.स्त्री.ष.द्विव | उभयोः | - | उभा–सर्व. आ.स्त्री.ष.द्विव |
| मध्ये | - | अ.पुं.स.एक. | विषीदन्तम् | - | विषीदत्–त.पुं.द्वि.एक. |
| इदम् | - | इदम्–म.सर्व.नपुं.द्वि.एक. | वचः | - | वचस्–स.नपुं.द्वि.एक. |

**पदार्थः –** भारत = हे भरतकुलोद्भव धृतराष्ट्र ! हृषीकेशः = श्रीकृष्णः, प्रहसन् इव = हासं कुर्वन् इव, उभयोः = द्वयोः, सेनयोः मध्ये = सैन्ययोः मध्ये, विषीदन्तम् = विषादम् अनुभवन्तम्, तम् = अर्जुनम्, इदं वचः = एतत् वचनम्, उवाच = उक्तवान् ।

**अन्वयः –** भारत ! हृषीकेशः प्रहसन् इव उभयोः सेनयोः मध्ये विषीदन्तं तम् इदं वचः उवाच ।

**आकाङ्क्षा –**

**उवाच** ।

**कः** उवाच ? – **हृषीकेशः** उवाच ।

हृषीकेशः **किं कुर्वन् इव** उवाच ? – हृषीकेशः **प्रहसन् इव** उवाच ।

हृषीकेशः प्रहसन्निव **कम्** उवाच ? – हृषीकेशः प्रहसन्निव **तम्** उवाच ।

हृषीकेशः प्रहसन्निव **किं कुर्वन्तं** तम् उवाच ? – हृषीकेशः प्रहसन्निव **विषीदन्तं** तम् उवाच ।

हृषीकेशः प्रहसन्निव **कुत्र** विषीदन्तं तम् उवाच ? – हृषीकेशः प्रहसन्निव **मध्ये** विषीदन्तं तम् उवाच ।

हृषीकेशः प्रहसन्निव **कयोः** मध्ये विषीदन्तं तम् उवाच ?

– हृषीकेशः प्रहसन्निव **सेनयोः** मध्ये विषीदन्तं तम् उवाच ।

हृषीकेशः प्रहसन्निव **कयोः** सेनयोः मध्ये विषीदन्तं तम् उवाच ?

– हृषीकेशः प्रहसन्निव **उभयोः** सेनयोः मध्ये विषीदन्तं तम् उवाच ।

हृषीकेशः प्रहसन्निव उभयोः सेनयोः मध्ये विषीदन्तं तं **किम्** उवाच ?

– हृषीकेशः प्रहसन्निव उभयोः सेनयोः मध्ये विषीदन्तं तं **वचः** उवाच ।

हृषीकेशः प्रहसन्निव उभयोः सेनयोः मध्ये विषीदन्तं तं **किं** वचः उवाच ?

– हृषीकेशः प्रहसन्निव उभयोः सेनयोः मध्ये विषीदन्तं तम् **इदं** वचः उवाच ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? **– भारत ।**

**तात्पर्यम् –** हे धृतराष्ट्र ! अनेन प्रकारेण अर्जुनः सैन्ययोः मध्ये विषादम् अनुभवन् अतिष्ठत् । तदा भगवान् श्रीकृष्णः तम् उद्दिश्य प्रहसन् इव एतत् वचनम् अवदत् ।

**रामानुजीयमतम् –** इदं वचः = 'न त्वेवाहं जातु नासम् इत्यारभ्य' 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इत्येतदन्तम् इत्यर्थः ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | प्रहसन्निव | – | प्रहसन् + इव | ङमुडागमसन्धिः |
| | सेनयोरुभयोर्मध्ये | – | सेनयोः + उभयोः + मध्ये | विसर्गसन्धिः (रेफः) |
| **(ख) कृदन्तः** | प्रहसन् | – | प्र + हस् + शतृ (कर्तरि) । | |
| | विषीदन्तम् | – | वि + सीद् + शतृ (कर्तरि), तम् । | |

**श्रीभगवान् उवाच –** **अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥2.11॥**

**पदच्छेदः –** अशोच्यान्, अन्वशोचः, त्वम्, प्रज्ञावादान्, च, भाषसे ।
गतासून्, अगतासून्, च, न, अनुशोचन्ति, पण्डिताः ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| अशोच्यान् | – अ.पुं.द्वि.बहु. | अन्वशोचः | – अनु+शुच्–पर.कर्तरि लुङ्.मपु.एक. |

| | | | | | |
|---|---|---|---|---|---|
| त्वम् | - | युष्मद्-द.सर्व.प्र.एक. | प्रज्ञावादान् | - | अ.पुं.द्वि.बहु. |
| च | - | अव्ययम् | भाषसे | - | भाष्-आत्म.कर्तरि लट्.मपु.एक. |
| गतासून् | - | उ.पुं.द्वि.बहु. | अगतासून् | - | उ.पुं.द्वि.बहु. |
| न | - | अव्ययम् | अनुशोचन्ति | - | अनु+शुच्-पर.कर्तरि लट्.प्रपु.बहु. |
| पण्डिताः | - | अ.पुं.प्र.बहु. | | | |

**पदार्थः** – त्वम् = त्वम्, अशोच्यान् = येषु शोकः न करणीयः तान्, अन्वशोचः = शोकम् अकरोः, प्रज्ञावादान् च = बुद्धिवादान् च, भाषसे = वदसि, गतासून् = मृतान्, अगतासून् च = जीवतः, पण्डिताः = विवेकिनः, न अनुशोचन्ति = न शोचन्ति ।

**अन्वयः**:– त्वम् अशोच्यान् अन्वशोचः । प्रज्ञावादान् च भाषसे । पण्डिताः गतासून् अगतासून् च न अनुशोचन्ति।

**आकाङ्क्षा** –

**त्वम् अन्वशोचः** ।

त्वं **कान्** अन्वशोचः ? – त्वम् **अशोच्यान्** अन्वशोचः ।

त्वम् अशोच्यान् अन्वशोचः । **पुनश्च किं करोषि ?** – त्वम् अशोच्यान् अन्वशोचः । त्वं **भाषसे** ।

त्वम् अशोच्यान् अन्वशोचः । त्वं **कान्** च भाषसे ? – त्वम् अशोच्यान् अन्वशोचः । त्वं **प्रज्ञावादान्** च भाषसे ।

**न अनुशोचन्ति** ।

के न अनुशोचन्ति ? – पण्डिताः न **अनुशोचन्ति** ।

पण्डिताः कान् न अनुशोचन्ति ? – पण्डिताः **गतासून्** न अनुशोचन्ति ।

पण्डिताः गतासून् **पुनश्च कान्** न अनुशोचन्ति ? – पण्डिताः गतासून् **अगतासून्** च न अनुशोचन्ति ।

**तात्पर्यम्** – हे अर्जुन ! येषु शोकः न करणीयः तेषु त्वं शोकं करोषि । पण्डितानां वादमपि उपस्थापयसि । वस्तुतः विवेकिनः मृतेषु जीवत्सु च शोकं न कुर्वन्ति ।

**माध्वमतम्**–हे अर्जुन ! ये अशोच्याः तान् प्रति शोकं करोषि । अपि च आत्मप्रतिभासानि वाक्यानि (प्रज्ञावादान्) वदसि । पणडिताः गतासून् प्रति यथा नानुशोचन्ति तथा अगतासून् प्रत्यपि नानुशोचन्ति ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| अन्वशोचस्त्वम् | – अन्वशोचः + त्वम् | विसर्गसन्धिः (सकारः) |
| प्रज्ञावादांश्च | – प्रज्ञावादान् + च | रुत्वम्, अनुस्वारागमः, विसर्गः, सत्वम्, श्चुत्वम् |
| गतासूंश्च | – गतासून् + च | रुत्वम्, अनुस्वारागमः, विसर्गः, सत्वम्, श्चुत्वम् |
| नानुशोचन्ति | – न + अनुशोचन्ति | सवर्णदीर्घसन्धिः |

**(ख) समासः**

| | |
|---|---|
| अशोच्यान् | – न शोच्याः अशोच्याः, तान् – नञ्तत्पुरुषः । |
| प्रज्ञावादान् | – प्रज्ञापूर्वकाः वादाः, तान् – मध्यमपदलोपी तत्पुरुषः । |
| गतासून् | – गताः असवः येभ्यः ते, तान् – बहुव्रीहिः । |
| अगतासून् | – न गतासवः, तान् – नञ्बहुव्रीहिः । |

**(ग) कृदन्तः** शोच्यान् – शुच् + ण्यत् (कर्मणि), तान् । शोचनीयान् इत्यर्थः ।

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥2.12॥**

**पदच्छेदः -** न, तु, एव, अहम्, जातु, न, आसम्, न, त्वम्, न, इमे, जनाधिपाः ।
न, च, एव, न, भविष्यामः, सर्वे, वयम् , अतः, परम् ॥

**पदपरिचयः -**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| न | - | अव्ययम् | तु | - | अव्ययम् |
| एव | - | अव्ययम् | अहम् | - | अस्मद्-द.सर्व.प्र.एक. |
| जातु | - | अव्ययम् | आसम् | - | अस-पर.कर्तरि लङ्.उपु.एक. |
| त्वम् | - | युष्मद्-द. सर्व.प्र.एक. | इमे | - | इदम्-म.सर्व.पुं.प्र.बहु. |
| जनाधिपाः | - | अ.पुं.प्र.बहु. | च | - | अव्ययम् |
| भविष्यामः | - | भू-पर.कर्तरि लृट्.उपु.बहु. | सर्वे | - | अ.सर्व.पुं.प्र.बहु. |
| वयम् | - | अस्मद्-द.सर्व.प्र.बहु . | अतः | - | अव्ययम् |
| परम् | - | अ.नपुं.द्वि.एक.क्रियाविशेषणम् | | | |

**पदार्थः -** अहम् = अहम्, जातु = कदाचिदपि, न तु एव न आसम् = अवश्यम् आसम्, त्वं न तु एव न (आसीः) = त्वमपि अवश्यम् आसीः, इमे = एते, जनाधिपाः = राजानः, न तु एव न नासन् = अवश्यम् आसन्, अतः परम् = इतः ऊर्ध्वम्, सर्वे वयम् = वयं समस्ताः, न च एव न भविष्यामः = अवश्यम् भविष्यामः ।

**अन्वयः -** अहं जातु न आसम्, न तु एव त्वम् (आसीः), न इमे जनाधिपाः (आसन्), न अतः परं वयं सर्वे न च एव भविष्यामः ।

**आकाङ्क्षा -**

अहं **आसम्** ।
अहं **कथम्** आसम् ? - अहं **जातु न तु एव न आसम्** ।
त्वं **कथम् (आसीः)** ? - त्वं **जातु न तु एव न आसीः** ।
जनाधिपाः **कथम् (आसन्)** ? - जनाधिपाः **न तु एव न (आसन्)** ।
**के** जनाधिपाः न तु एव न आसन् ? - **इमे** जनाधिपाः न तु एव न आसन् ।
**वयं न चैव न भविष्यामः** ।
**कति** वयं न चैव न भविष्यामः ? - **सर्वे** वयं न चैव न भविष्यामः ।
**कदा** सर्वे वयं न चैव न भविष्यामः ? - **अतःपरं** सर्वे वयं न चैव न भविष्यामः ।

**तात्पर्यम् -** अहं सर्वदा आसम् । त्वं सर्वदा आसीः । एते राजानः अपि सर्वदा आसन् । इतःपरमपि वयं सर्वे सर्वदा भविष्यामः । आत्मा स्थिरः इति वयं सर्वे सर्वदा अवश्यं भवामः इत्यभिप्रायः ।

**व्याकरणम् -**

**(क) सन्धिः** त्वेवाहम् - तु + एव + अहम् यणसन्धिः, सवर्णदीर्घसन्धिः

| | | | |
|---|---|---|---|
| | नासम् | – न + आसम् | सवर्णदीर्घसन्धिः |
| | नेमे | – न + इमे | गुणसन्धिः |
| | चैव | – च + एव | वृद्धिसन्धिः |
| **(ख) समासः** | जनाधिपाः | – जनानाम् अधिपाः – षष्ठीतत्पुरुषः । | |

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥2.13॥**

**पदच्छेदः –** देहिनः, अस्मिन्, यथा, देहे, कौमारम्, यौवनम्, जरा ।
तथा, देहान्तरप्राप्तिः, धीरः, तत्र, न, मुह्यति ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| देहिनः | – देहिन्–न.पुं.ष.एक. | अस्मिन् | – इदम्–म.सर्व.पुं.स.एक. |
| यथा | – अव्ययम् | देहे | – अ.पुं.स.एक. |
| कौमारम् | – अ.नपुं.प्र.एक. | यौवनम् | – अ.नपुं.प्र.एक. |
| जरा | – आ.स्त्री.प्र.एक. | तथा | – अव्ययम् |
| देहान्तरप्राप्तिः | – इ.स्त्री.प्र.एक. | धीरः | – अ.पुं.प्र.एक. |
| तत्र | – अव्ययम् | न | – अव्ययम् |
| मुह्यति | – मुह्–पर. कर्तरि लट्. प्र.पु.एक. | | |

**पदार्थः –** यथा = येन प्रकारेण, देहिनः = आत्मनः, अस्मिन् = एतस्मिन्, देहे = शरीरे, कौमारम् = बाल्यम्, यौवनम् = तारुण्यम्, जरा = वृद्धत्वम्, तथा = तेन प्रकारेण, देहान्तरप्राप्तिः = अन्यशरीरलाभः, धीरः = पण्डितः, तत्र = तस्मिन् विषये, न मुह्यति = न शोचति ।

**अन्वयः –** देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा (च) तथा देहान्तरप्राप्तिः । तत्र धीरः न मुह्यति ।

**आकाङ्क्षा –**

**कौमारम् ।**

कौमारं **पुनश्च किम्** ? – कौमारं **यौवनं** च ।

कौमारं यौवनं **पुनश्च का** ? – कौमारं यौवनं **जरा** च ।

**कुत्र** कौमारं यौवनं जरा च ? – **देहे** कौमारं यौवनं जरा च ।

**कुत्र** देहे कौमारं जरा च ? – **अस्मिन्** देहे कौमारं यौवनं जरा च ।

**कस्य** अस्मिन् देहे कौमारं यौवनं जरा च ? – **देहिनः** देहे कौमारं यौवनं जरा च ।

देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा **का** ?

– देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा **देहान्तरप्राप्तिः** ।

देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा देहान्तरप्राप्तिः । **तेन किम्** ?

– देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा देहान्तरप्राप्तिः । **न मुह्यति** ।

देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा देहान्तरप्राप्तिः । **कः** न मुह्यति ?

– देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा देहान्तरप्राप्तिः । **धीरः** न मुह्यति ।

देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा देहान्तरप्राप्तिः । धीरः **कुत्र** न मुह्यति ?

– देहिनः अस्मिन् देहे यथा कौमारं यौवनं जरा च तथा देहान्तरप्राप्तिः । धीरः **तत्र** न मुह्यति ।

**तात्पर्यम् –** आत्मनः कौमारं यौवनं जरा चेत्येवम् अवस्थाः यथा भवन्ति तथा देहान्तरप्राप्तिः अपि भवति । अतः विवेकी तस्मिन् मोहं न गच्छति ।

**व्याकरणम् –**

**(क) सन्धिः** देहिनोऽस्मिन् – देहिनः + अस्मिन् विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः, पूर्वरूपं च

देहान्तरप्राप्तिर्धीरस्तत्र – देहान्तरप्राप्तिः + धीरः विसर्गसन्धिः (रेफः)

देहान्तरप्राप्तिर्धीरः + तत्र विसर्गसन्धिः (सकारः)

**(ग) तद्धितान्तः** देहिनः – देह + इनि (मतुबर्थे) तस्य । देहः अस्य अस्मिन् वा अस्ति इति ।

कौमारम् – कुमार + अण् (भावे) । कुमारस्य भावः इत्यर्थः ।

यौवनम् – युवन् + अण् (भावे) । यूनः भावः इत्यर्थः ।

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥2.14॥**

**पदच्छेदः –** मात्रास्पर्शाः, तु, कौन्तेय, शीतोष्णसुखदुःखदाः ।
आगमापायिनः, अनित्याः, तान्, तितिक्षस्व, भारत ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| मात्रास्पर्शाः | – अ.पुं.प्र.बहु. | तु | – अव्ययम् |
| कौन्तेय | – अ.पुं.सम्बो.एक. | शीतोष्णसुखदुःखदाः | – अ.पुं.प्र.बहु. |
| आगमापायिनः | – आगमापायिन्–न.पुं.प्र.बहु. | अनित्याः | – अ.पुं.प्र.बहु. |
| तान् | – तद्–द. सर्व.पुं.द्वि.बहु. | तितिक्षस्व | – तिज्+सन्(स्वार्थे) आत्म.लोट्.मपु.एक. |
| भारत | – अ.पुं.सम्बो.एक. | | |

**पदार्थः –** कौन्तेय = हे कुन्तीपुत्र ! मात्रास्पर्शाः तु = विषयसंयोगाः तु, शीतोष्णसुखदुःखदाः = शीतम् उष्णं सुखं दुःखं ये ददति ते, आगमापायिनः = संयोगवियोगशीलाः, अनित्याः = न नित्याः, भारत = हे भरतकुलोद्भव ! तान् तितिक्षस्व = तान् सहस्व ।

**अन्वयः –** कौन्तेय ! मात्रास्पर्शाः तु शीतोष्णसुखदुःखदाः आगमापायिनः अनित्याः । भारत ! तान् तितिक्षस्व ।

**आकाङ्क्षा –**

**तितिक्षस्व** ।

**कान्** तितिक्षस्व ? — **तान्** तितिक्षस्व ।

ते **के** ? — ते **मात्रास्पर्शाः** ।

मात्रास्पर्शाः **तु कीदृशाः** ? — मात्रास्पर्शाः **तु शीतोष्णसुखदुःखदाः** ।

मात्रास्पर्शाः तु शीतोष्णसुखदुःखदाः **पुनश्च कीदृशाः** ?

— मात्रास्पर्शाः तु शीतोष्णसुखदुःखदाः **आगमापायिनः** ।

मात्रास्पर्शाः तु शीतोष्णसुखदुःखदाः आगमापायिनः **पुनश्च कीदृशाः** ?

— मात्रास्पर्शाः तु शीतोष्णसुखदुःखदाः आगमापायिनः **अनित्याः** ।

अस्मिन् श्लोके सम्बोधनपदे के ? — **कौन्तेय । भारत ।**

**तात्पर्यम् –** स्रक्चन्दनवनितादीनां विषयाणां सम्बन्धाः कदाचित् शीतं जनयन्ति, कदाचिच्च उष्णम् । कदाचित् सुखम्, कदाचिच्च दुःखम् । कदाचित् ते भवन्ति, कदाचित् अपगच्छन्ति । अतः एव अनित्याः । तस्मात् तान् सहस्व । मा मोहं भज ।

**माध्वमतम्–** कुन्तीपुत्र ! अभिमानमूलकत्वात् एव मात्रास्पर्शाः शीतोष्णसुखदुःखदाः सन्ति । तस्मात् अभिमानं परित्यज्य शीतोष्णादीन् तितिक्षस्व ।

**व्याकरणम् –**

**(क) सन्धिः** मात्रास्पर्शास्तु – मात्रास्पर्शाः + तु विसर्गसन्धिः (सकारः)

आगमापायिनोऽनित्याः – आगमापायिनः + अनित्याः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च

अनित्यास्तान् – अनित्याः + तान् विसर्गसन्धिः (सकारः)

तांस्तितिक्षस्व – तान् + तितिक्षस्व रुत्वम्, अनुस्वारागमः, विसर्गः, सत्वम्

**(ख) समासः** मात्रास्पर्शाः – मात्राणां स्पर्शाः – षष्ठीतत्पुरुषः ।

शीतोष्णसुखदुःखदाः – शीतं च उष्णं च शीतोष्णम् – द्वन्द्वः ।

– सुखं च दुःखं च सुखदुःखे – द्वन्द्वः।

– शीतोष्णं च सुखदुःखे च शीतोष्णसुखदुःखानि – द्वन्द्वः ।

– शीतोष्णसुखदुःखानि ददति इति शीतोष्णसुखदुःखदाः – कर्तरि कः उपपदसमासश्च ।

अनित्याः – न नित्याः – नञ्तत्पुरुषः ।

**(ग) कृदन्तः** स्पर्शाः – स्पृश् + घञ् (भावे)

**(घ) सन्नन्तः** तितिक्षस्व – तिज् + सन् (स्वार्थे) + लोट्.मपु.एक.

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥2.15॥**

**पदच्छेदः –** यम्, हि, न, व्यथयन्ति, एते, पुरुषम्, पुरुषर्षभ ।
समदुःखसुखम्, धीरम्, सः, अमृतत्वाय, कल्पते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| यम् | – | यद्–द. सर्व.पुं.द्वि.एक. | हि | – | अव्ययम् |
| न | – | अव्ययम् | व्यथयन्ति | – | व्यथ्–पर. कर्तरि लट्.प्रपु.बहु. |
| एते | – | एतद्–द. सर्व.पुं.प्र.बहु. | पुरुषम् | – | अ.पुं.द्वि.एक. |
| पुरुषर्षभ | – | अ.पुं.सम्बो.एक. | समदुःखसुखम् | – | अ.पुं.द्वि.एक. |
| धीरम् | – | अ.पुं.द्वि.एक. | सः | – | तद्–द. सर्व.पुं.प्र.एक. |
| अमृतत्वाय | – | अ.नपुं.च.एक. | कल्पते | – | क्लृप्–आत्म.कर्तरि लट्.प्रपु.एक. |

**पदार्थः** – पुरुषर्षभ = हे पुरुषश्रेष्ठ ! एते = मात्रास्पर्शाः, यम् = यम्, समदुःखसुखम् = सुखं दुःखं च समं मन्यमानम्, धीरम् = मनस्विनम्, न व्यथयन्ति = न पीडयन्ति, सः = सः जनः, अमृतत्वाय = मुक्तये, कल्पते = योग्यः भवति ।

**अन्वयः –** पुरुषर्षभ ! एते यं समदुःखसुखं धीरं पुरुषं न व्यथयन्ति सः अमृतत्वाय कल्पते ।

**आकाङ्क्षा –**

**कल्पते** ।

**कः** कल्पते ? – **यं न व्यथयन्ति सः** कल्पते ।

यं न व्यथयन्ति सः **कस्मै** कल्पते ? – यं न व्यथयन्ति सः **अमृतत्वाय** कल्पते ।

**के** यं न व्यथयन्ति सः अमृतत्वाय कल्पते ? – **एते** यं न व्यथयन्ति सः अमृतत्वाय कल्पते ।

एते तं **कं** न व्यथयन्ति यः अमृतत्वाय कल्पते ? – एते यं **पुरुषं** न व्यथयन्ति सः अमृतत्वाय कल्पते ।

एते तं **कीदृशं** पुरुषं न व्यथयन्ति यः अमृतत्वाय कल्पते ?

एते यं **समदुःखसुखं** पुरुषं न व्यथयन्ति सः अमृतत्वाय कल्पते ।

एते तं समदुःखसुखं **पुनश्च कीदृशं** पुरुषं न व्यथयन्ति यः अमृतत्वाय कल्पते ?

एते यं समदुःखसुखं **धीरं** पुरुषं न व्यथयन्ति सः अमृतत्वाय कल्पते ।

**तात्पर्यम्** – यः जनः सुखं दुःखं च समं मन्यते तं शीतोष्णसुखदुःखकराः विषयसम्बन्धाः किञ्चिदपि न व्यथयन्ति । सोऽयं द्वन्द्वसहिष्णुः जनः मोक्षं प्राप्तुं योग्यः भवति ।

**व्याकरणम् –**

**(क) सन्धिः** व्यथयन्त्येते – व्यथयन्ति + एते यणसन्धिः

सोऽमृतत्वाय – सः + अमृतत्वाय विसर्गसन्धिः (सकारः) उकारः, गुणः पूर्वरूपं च

**(ख) समासः** पुरुषर्षभः – पुरुषः ऋषभः इव – कर्मधारयः ।

समदुःखसुखम् – सुखं च दुःखं च सुखदुःखे – द्वन्द्वः ।

समे सुखदुःखे यस्य सः, तम् – बहुव्रीहिः ।

**(ग) तद्धितान्तः** अमृतत्वाय – अमृत + त्व (भावे), तस्मै । मोक्षाय इत्यर्थः ।

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥2.16॥**

**पदच्छेदः –** न, असतः, विद्यते, भावः, न, अभावः, विद्यते, सतः ।
उभयोः, अपि, दृष्टः, अन्तः, तु, अनयोः, तत्त्वदर्शिभिः ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| न | – अव्ययम् | असतः | – सत्–त.पुं.ष.एक. |
| विद्यते | – विद्–आत्म.कर्तरि लट्.प्रपु.एक | भावः | – अ.पु.प्र.एक. |
| अभावः | – अ.पु.प्र.एक. | सतः | – सत्–त.पुं.ष.एक. |
| उभयोः | – अ.पु.ष.द्वि. | अपि | – अव्ययम् |
| दृष्टः | – अ.पु.प्र.एक. | अन्तः | – अ.पुं.प्र.एक |
| तु | – अव्ययम् | अनयोः | – इदम्–म.सर्व.पु.ष.द्वि. |
| तत्त्वदर्शिभिः | – तत्त्वदर्शिन्–न.पुं.तृ.बहु. | | |

**पदार्थः –** असतः = असत्पदार्थस्य, भावः = अस्तिता, न विद्यते = न भवति, सतः = सत्पदार्थस्य, अभावः = अस्तिताराहित्यम्, न विद्यते = न भवति, अनयोः उभयोः = सदसतोः अपि पदार्थयोः, अन्तः = शिखरम् (निर्णयः), तत्त्वदर्शिभिः = ब्रह्मविद्भिः, दृष्टः = वीक्षितम् ।

**अन्वयः –** असतः भावः न विद्यते, सतः अभावः न विद्यते । अनयोः उभयोः (सदसतोः) अपि अन्तः तत्त्वदर्शिभिः दृष्टः ।

**आकाङ्क्षा –**

न **विद्यते** ।

| | |
|---|---|
| **कः** न विद्यते ? | – **भावः** न विद्यते । |
| **कस्य** भावः न विद्यते । | – **असतः** भावः न विद्यते । |
| असतः भावो न विद्यते । पुनश्च **कः** न विद्यते ? | – असतः भावो न विद्यते । **अभावः** न विद्यते । |
| असतः भावो न विद्यते । **कस्य** अभावः न विद्यते ? | – असतः भावो न विद्यते । **सतः** अभावः न विद्यते । |

**दृष्टः** ।

| | |
|---|---|
| **कैः** दृष्टः ? | – **तत्त्वदर्शिभिः** दृष्टः । |
| तत्त्वदर्शिभिः **कः** दृष्टः ? | – तत्त्वदर्शिभिः **अन्तः** दृष्टः । |
| तत्त्वदर्शिभिः **कयोः** अन्तः दृष्टः ? | – तत्त्वदर्शिभिः **अनयोः** अन्तः दृष्टः । |
| तत्त्वदर्शिभिः अनयोः **कयोः** अन्तः दृष्टः ? | – तत्त्वदर्शिभिः अनयोः **उभयोः** अपि अन्तः दृष्टः । |

**तात्पर्यम् –** असत्पदार्थः कदापि न भवति, यथा – शशशृङ्गादिः । सत्पदार्थः सर्वदा भवति, यथा आत्मा । अनयोः उभयोः अपि सदसत्पदार्थयोः स्वरूपे निर्णयः केवलं तत्त्वज्ञानिनामेव भवति, न अन्येषाम् ।

**माध्वमतम्**–दुष्कर्मभ्यः यथा सुखं न लभ्यते तथा सत्कर्मभ्यः दुःखमपि न लभ्यते। (अथवा) जगत्कारणस्य ब्रह्मणः प्रकृतेश्च अभावः नास्ति। अर्थात् उभे अपि नित्ये। तदेवं तत्त्वदर्शिभिः एतद्विषये सम्प्रदायः प्रमाणमिति दृष्टं निर्णीतं च।

**रामानुजीयमतम्** – असत् = शरीरम्, सत् = आत्मतत्त्वम्, अन्तः = निर्णयः।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नासतः | – न + असतः | सवर्णदीर्घसन्धिः |
| | असतो विद्यते | – असतः + विद्यते | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |
| | नाभावः | – न + अभावः | सवर्णदीर्घसन्धिः |
| | भावो न | – भावः + न | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |
| | अभावो विद्यते | – अभावः + विद्यते | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |
| | उभयोरपि | – उभयोः + अपि | विसर्गसन्धिः (रेफः) |
| | दृष्टोऽन्तः | – दृष्टः + अन्तः | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः पूर्वरूपं च |
| | अन्तस्तु | – अन्तः + तु | विसर्गसन्धिः (सकारः) |
| | त्वनयोः | – तु + अनयोः | यण्सन्धिः |
| | अनयोस्तत्त्वदर्शिभिः | – अनयोः + तत्त्वदर्शिभिः | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | असतः | – न सत् असत्, तस्य – नञ्तत्पुरुषः। | |
| | अभावः | – न भावः – नञ्तत्पुरुषः। | |
| **(ग) कृदन्तः** | सतः (सन्) | – अस् + शतृ (कर्तरि) | |
| | भावः | – भू + घञ् (भावे) | |
| | दृष्टः | – दृशिर् + क्त (कर्मणि) | |
| | तत्त्वदर्शिभिः | – तत्त्व + दृश् + इनि (ताच्छीलिके कर्तरि) तैः। तत्त्वं पश्यन्ति तच्छीलाः इति तत्त्वदर्शिनः, तैः। | |

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥2.17॥**

**पदच्छेदः** – अविनाशि, तु, तत्, विद्धि, येन, सर्वम्, इदम्, ततम्।
विनाशम्, अव्ययस्य, अस्य, न, कश्चित्, कर्तुम्, अर्हति ॥

**पदपरिचयः** –

| **पदम्** | **विवरणम्** | **पदम्** | **विवरणम्** |
|---|---|---|---|
| अविनाशि | – अविनाशिन्–न.नपुं.प्र.एक. | तु | – अव्ययम् |
| तत् | – तद्–द.सर्व.नपुं.द्वि.एक. | विद्धि | – विद्–पर.लोट्.मपु.एक. |
| येन | – यद्–द.सर्व.पुं.तृ.एक. | सर्वम् | – अ.सर्व.नपुं.प्र.एक. |

| | | | | |
|---|---|---|---|---|
| इदम् | - इदम्-म.सर्व.पुं.प्र.एक. | ततम् | - अ.नपुं.प्र.एक. |
| विनाशम् | - अ.पुं.द्वि.एक. | अव्ययस्य | - अ.पुं.ष.एक. |
| अस्य | - इदम्-म.सर्व.पुं.ष.एक. | न | - अव्ययम् |
| कश्चित् | - अव्ययम् | कर्तुम् | - तुमुन्नन्तम् अव्ययम् |
| अर्हति | - अर्ह् -पर.कर्तरि लट्.प्रपु.एक. | | |

**पदार्थः** – तत् तु = तत्त्वं तु, अविनाशि = विनाशरहितम्, विद्धि = जानीहि, येन = येन, इदं सर्वम् = एतत् सर्वमपि जगत्, ततम् = व्याप्तम्, अस्य अव्ययस्य = एतस्य तत्त्वस्य, विनाशं कर्तुम् = नाशं कर्तुम्, कश्चित् = कोऽपि, न अर्हति = न हि शक्नोति ।

**अन्वयः** – येन इदं सर्वं ततं तत् तु अविनाशि विद्धि । अस्य अव्ययस्य विनाशं कर्तुं कश्चित् अपि न अर्हति ।

**आकाङ्क्षा** –

**विद्धि** ।

**किं** विद्धि ? – **तत्** विद्धि ।

**कीदृशं** तत् विद्धि ? – **येन सर्वम् इदं ततं** तत् विद्धि ।

येन सर्वम् इदं ततं तत् **कीदृशं** विद्धि ? – येन सर्वम् इदं ततं तत् **अविनाशि** विद्धि ।

न **अर्हति** ।

**कः** न अर्हति ? – **कश्चित्** अपि न अर्हति ।

कश्चित् अपि **किं** कर्तुं न अर्हति ? – कश्चित् अपि **विनाशं** कर्तुं न अर्हति ।

कश्चित् अपि **कस्य** विनाशं कर्तुं न अर्हति ? – कश्चित् अपि **अस्य** विनाशं कर्तुं न अर्हति ।

कश्चित् अपि **कीदृशस्य** अस्य विनाशं कर्तुं न अर्हति ?

– कश्चित् अपि **अव्ययस्य** अस्य विनाशं कर्तुं न अर्हति ?

**तात्पर्यम्** – तत् तत्त्वं तु सर्वदा अविनाशि इति जानीहि । तेन तत्त्वेन सर्वमपि इदं जगत् व्याप्तम् अस्ति । तादृशस्य अविनाशिनः तत्त्वस्य विनाशं कर्तुं कोऽपि नैव शक्नोति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अव्ययस्यास्य | - अव्ययस्य + अस्य | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अविनाशि | - न विनाशि - नञ्तत्पुरुषः । | |
| | अव्ययस्य | - न विद्यते व्ययः यस्य तत्, तस्य - नञ्बहुव्रीहिः । | |
| **(ग) कृदन्तः** | विनाशम् | - वि + नश् + घञ् (भावे) तम् । | |
| | कर्तुम् | - कृ + तुमुन् | |
| **(घ) तद्धितान्तः** | विनाशि | - विनाश + इनि (मतुबर्थे) विनाशः अस्य अस्मिन् वा अस्ति इति विनाशि । | |

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ।।2.18।।**

**पदच्छेदः –** अन्तवन्तः, इमे, देहाः, नित्यस्य, उक्ताः, शरीरिणः ।
अनाशिनः, अप्रमेयस्य, तस्मात्, युध्यस्व, भारत ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अन्तवन्तः | – | अन्तवत्–त.पुं.प्र.बहु. | इमे | – | इदम्–म. सर्व.प्र.बहु. |
| देहाः | – | अ.पुं.प्र.बहु. | नित्यस्य | – | अ.पुं.ष.एक. |
| उक्ताः | – | अ.पुं.प्र.बहु. | शरीरिणः | – | शरीरिन्–न.पुं.ष.एक. |
| अनाशिनः | – | अनाशिन्–न.पुं.ष.एक. | अप्रमेयस्य | – | अ.पुं.ष.एक. |
| तस्मात् | – | तद्–द. सर्व.पुं.पं.एक. | युध्यस्व | – | युध्–आत्म. कर्तरि लोट्.मपु.एक. |
| भारत | – | अ.पुं.सम्बो.एक. | | | |

**पदार्थः –** अनाशिनः = नाशरहितस्य, अप्रमेयस्य = ज्ञातुम् अशक्यस्य, नित्यस्य = शाश्वतस्य, शरीरिणः = आत्मनः, इमे देहाः = एतानि शरीराणि, अन्तवन्तः उक्ताः = नाशसहितानि इति उक्तानि, भारत = हे भरतकुलोत्पन्न ! तस्मात् = तस्मात् कारणात्, युध्यस्व = युद्धं कुरु ।

**अन्वयः –** अनाशिनः अप्रमेयस्य नित्यस्य च शरीरिणः इमे देहाः अन्तवन्तः उक्ताः । भारत ! तस्मात् युध्यस्व ।

**आकाङ्क्षा –**

**युध्यस्व** ।

**कस्मात्** युध्यस्व ? – **उक्ताः, तस्मात्** युध्यस्व ।

**के** उक्ताः, तस्मात् युध्यस्व ? – **देहाः** उक्ताः, तस्मात् युध्यस्व ।

**के** देहाः उक्ताः, तस्मात् युध्यस्व ? – **इमे** देहाः उक्ताः, तस्मात् युध्यस्व ।

इमे देहाः **कीदृशाः** उक्ताः, तस्मात् युध्यस्व ? – इमे देहाः **अन्तवन्तः** उक्ताः, तस्मात् युध्यस्व ।

**कस्य** इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ?

– **शरीरिणः** इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ।

**कीदृशस्य** शरीरिणः इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ?

– **नित्यस्य** शरीरिणः इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ।

नित्यस्य **पुनश्च कीदृशस्य** शरीरिणः इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ?

– नित्यस्य **अनाशिनः** शरीरिणः इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ।

नित्यस्य अनाशिनः **पुनश्च कीदृशस्य** शरीरिणः इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ?

– नित्यस्य अनाशिनः **अप्रमेयस्य** शरीरिणः इमे देहाः अन्तवन्तः उक्ताः, तस्मात् युध्यस्व ।

अत्र श्लोके सम्बोधनपदं किम् ? – **भारत ।**

**तात्पर्यम् –** अयं च आत्मा अविनाशी, प्रत्यक्षादिप्रमाणैः ज्ञातुम् अशक्यः, शाश्वतश्च । तस्य एतानि शरीराणि तु नाशसहितानि इति उक्तानि सन्ति । यस्मात् अयम् आत्मा नित्यः, शरीरं च विनाशि तस्मात् त्वं युद्धं कुरु ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अन्तवन्त इमे | – अन्तवन्तः + इमे | विसर्गसन्धिः (लोपः) |
| | देहा नित्यस्य | – देहाः + नित्यस्य | विसर्गसन्धिः (लोपः) |
| | नित्यस्योक्ताः | – नित्यस्य + उक्ताः | गुणसन्धिः |
| | अनाशिनोऽप्रमेयस्य | – अनाशिनः + अप्रमेयस्य | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः पूर्वरूपं च |
| | तस्माद्युध्यस्व | – तस्मात् + युध्यस्व | जश्त्वसन्धिः |
| **(ख) समासः** | अनाशिनः | – न नाशी अनाशी, तस्य – नञ्तत्पुरुषः । | |
| | अप्रमेयस्य | – न प्रमेयः अप्रमेयः, तस्य – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | उक्तः | – वच् + क्त (कर्मणि) | |
| **(घ) तद्धितान्तः** | अन्तवन्तः | – अन्तः + मतुप् । अन्तः एषाम् एषु वा अस्ति । | |
| | शरीरिणः | – शरीर + इनि (मतुबर्थे) । शरीरम् एषाम् एषु वा अस्ति । | |
| | नाशी | – नाश + इनि (मतुबर्थे) । नाशः अस्य अस्मिन् वा अस्ति । | |

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥2.19॥**

**पदच्छेदः –** यः, एनम्, वेत्ति, हन्तारम्, यः, च, एनम्, मन्यते, हतम् ।
उभौ, तौ, न, विजानीतः, न, अयम्, हन्ति, न, हन्यते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|---|
| यः | – | यद्–द. सर्व.पुं.प्र.एक. | एनम् | – एतद्–द. सर्व.पुं.द्वि.एक. |
| वेत्ति | – | विद्–पर.कर्तरि लट्. प्रपु.एक. | हन्तारम् | – हन्तृ–ऋ.पुं.द्वि.एक. |
| च | – | अव्ययम् | मन्यते | – मन्–आत्म.कर्मणि लट्. प्रपु.एक. |
| हतम् | – | अ.पुं.द्वि.एक. | उभौ | – उभ–अ. सर्व.पुं.प्र.द्विव. |
| तौ | – | तद्–द. सर्व.पुं.प्र.द्विव . | विजानीतः | – वि–ज्ञा–पर. कर्तरि लट्.प्रपु.द्विव. |
| अयम् | – | इदम्–म. सर्व.पुं.प्र.एक. | हन्ति | – हन्–पर. कर्तरि लट्.प्रपु.एक. |
| न | – | अव्ययम् | हन्यते | – हन्–कर्मणि लट्. प्रपु.एक. |

**पदार्थः –** यः = यः जनः, एनम् = आत्मानम्, हन्तारं वेत्ति = मारकः इति जानाति, यः च = योऽपि, एनम् = आत्मानम्, हतं मन्यते = मारितः इति जानाति, तौ उभौ = तौ द्वौ अपि, न विजानीतः = नैव अवगच्छतः, अयम् = आत्मा, न हन्ति = न मारयति, न हन्यते = नापि मारितो भवति ।

**अन्वयः –** यः एनं हन्तारं वेत्ति, यः च एनं हतं मन्यते तौ उभौ न विजानीतः । (यतः) अयं न हन्ति, न हन्यते ।

**आकाङ्क्षा –**

**न विजानीतः ।**

**कौ** न विजानीतः ? — **तौ** न विजानीतः ।
**तौ कौ** न विजानीतः ? — **तौ उभौ** न विजानीतः ।
**कौ** तौ उभौ न विजानीतः ? — **यः वेत्ति यः च मन्यते** तौ उभौ न विजानीतः ।
सः **कं** वेत्ति, स च **कं** मन्यते यौ उभौ न विजानीतः ?
– यः **एनं** वेत्ति, यः च **एनं** मन्यते तौ उभौ न विजानीतः ।
सः एनं **कीदृशं** वेत्ति, स च एनं **कीदृशं** मन्यते यौ उभौ न विजानीतः ?
– यः एनं **हन्तारं** वेत्ति, यः च एनं **हतं** मन्यते तौ उभौ न विजानीतः ।
यः एनं हन्तारं वेत्ति, यः च एनं हतं मन्यते तौ उभौ न विजानीतः । **कस्मात्** ?
– यः एनं हन्तारं वेत्ति, यः च एनं हतं मन्यते तौ उभौ न विजानीतः । **(यतः) नायं हन्ति न हन्यते ।**

**तात्पर्यम्** – यः जनः 'आत्मा कञ्चित् पुरुषं मारयति' इति जानाति यश्च जनः 'आत्मा केनापि पुरुषेण मार्यते' इति जानाति तौ द्वौ अपि वस्तुतः अज्ञानिनौ । यतः आत्मा कञ्चित् न हन्ति, न वा केनापि हन्यते ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | य एनम् | – | यः + एनम् | विसर्गसन्धिः (लोपः) |
| | यश्च | – | यः + च | विसर्गसन्धिः (सकारः) श्चुत्वं च |
| | चैनम् | – | च + एनम् | वृद्धिसन्धिः |
| | विजानीतो न | – | विजानीतः + न | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |
| | नायम् | – | न + अयम् | सवर्णदीर्घसन्धिः |
| **(ख) कृदन्तः** | हन्तारम् | – | हन् + तृच् (कर्तरि), तम् । | |
| | हतम् | – | हन् + क्त (कर्मणि), तम् । | |

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥2.20॥**

**पदच्छेदः** – न, जायते, म्रियते, वा, कदाचित्, नायम्, भूत्वा, भविता, वा, न, भूयः ।
अजः, नित्यः, शाश्वतः, अयम्, पुराणः, न, हन्यते, हन्यमाने, शरीरे ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | – | विवरणम् |
|---|---|---|---|---|---|
| न | – | अव्ययम् | जायते | – | जन्–आत्म. कर्तरि लट्.प्रपु.एक. |
| म्रियते | – | मृ–आत्म. कर्तरि लट्.प्रपु.एक. | वा | – | अव्ययम् |
| कदाचित् | – | अव्ययम् | अयम् | – | इदम्–म. सर्व.पुं.प्र.एक. |
| भूत्वा | – | क्त्वान्तम् अव्ययम् | भविता | – | भू–पर. कर्तरि लुट्.प्रपु.एक. |
| भूयः | – | अव्ययम् | अजः | – | अ.पुं.प्र.एक. |
| नित्यः | – | अ.पुं.प्र.एक. | शाश्वतः | – | अ.पुं.प्र.एक. |
| पुराणः | – | अ.पुं.प्र.एक. | हन्यते | – | हन्–कर्मणि लट्.प्रपु.एक. |

हन्यमाने - अ.नपुं.स.एक. शरीरे - अ.नपुं.स.एक.

**पदार्थः** – अयम् = एषः आत्मा, कदाचित् = कदापि, न जायते = न उत्पद्यते, न वा म्रियते = मृतो वा न भवति, अयम् = एषः आत्मा, भूत्वा भूयः न भविता वा = उत्पद्य पुनः न उत्पत्स्यते, अयम् = एषः आत्मा, अजः = जनिरहितः, नित्यः = निर्विकारः, शाश्वतः = क्षयरहितः, पुराणः = पुरातनः, शरीरे हन्यमाने = शरीरे नाशितेऽपि, न हन्यते = न नश्यति ।

**अन्वयः** – अयं कदाचित् न जायते न वा म्रियते । अयं भूत्वा भूयः भविता वा न । अयम् अजः नित्यः शाश्वतः पुराणः शरीरे हन्यमाने अपि न च हन्यते ।

**आकाङ्क्षा** –

**अयम्** ।

अयं **कीदृशः** ? – अयं **न जायते** ।

अयं न जायते, **पुनश्च कीदृशः** ? – अयं न जायते, **न वा म्रियते** ।

अयं न जायते, न वा म्रियते, **पुनश्च कीदृशः** ? – अयं न जायते, न वा म्रियते, **अयं न वा भूयः भविता** ।

अयं न जायते, न वा म्रियते, अयं **किं कृत्वा** न वा भूयः भविता ?

– अयं न जायते, न वा म्रियते, अयं **भूत्वा** न वा भूयः भविता ।

अयं **कदा** न जायते, न वा म्रियते, अयं भूत्वा न वा भूयः भविता ?

– अयं **कदाचित्** न जायते, न वा म्रियते, अयं भूत्वा न वा भूयः भविता ?

**अयम्** ।

अयं **कीदृशः** ? – अयम् **अजः** ।

अयम् अजः, **पुनश्च कीदृशः** ? – अयम् अजः, **नित्यश्च** ।

अयम् अजः, नित्यः, **पुनश्च कीदृशः** ? – अयम् अजः, नित्यः, **शाश्वतश्च** ।

अयम् अजः, नित्यः, शाश्वतः, **पुनश्च कीदृशः** ? – अयम् अजः, नित्यः, शाश्वतः, **पुराणश्च** ।

अयम् अजः, नित्यः, शाश्वतः, पुराणः, **पुनश्च कीदृशः** ?

– अयम् अजः, नित्यः, शाश्वतः, पुराणः, **न च हन्यते** ।

अयम् अजः, नित्यः, शाश्वतः, पुराणः, **कदा** न च हन्यते ?

– अयम् अजः, नित्यः, शाश्वतः, पुराणः, **शरीरे हन्यमानेऽपि** न च हन्यते ।

**तात्पर्यम्** – अयम् आत्मा कदापि न जायते न म्रियते वा, उत्पद्य पुनरपि उत्पत्स्यते इत्यपि वक्तुं न शक्यते, यतः अयम् आत्मा जन्मरहितः, सनातनः, पुरातनश्च । शरीरे नष्टेऽपि सः न नश्यति ।

**व्याकरणम्** –

| **(क) सन्धिः** | | | |
|---|---|---|---|
| | कदाचिन्न | – कदाचित् + न | परसवर्णसन्धिः |
| | अजो नित्यः | – अजः + नित्यः | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |
| | शाश्वतोऽयम् | – शाश्वतः + अयम् | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः पूर्वरूपं च |

| | | | |
|---|---|---|---|
| | पुराणो न | - पुराणः + न | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |
| **(ख) समासः** | अजः | - न जायते इति अजः । कर्तरि डप्रत्ययः उपपदसमासश्च । | |
| **(ग) कृदन्तः** | भूत्वा | - भू + क्त्वा | |
| | हन्यमाने | - हन् + शानच् (कर्मणि) | |
| **(घ) तद्धितान्तः** | शाश्वतः | - शश्वत् + अण् (भवार्थे) । सदा भवः इत्यर्थः । | |

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥2.21॥**

**पदच्छेदः –** वेद, अविनाशिनम्, नित्यम्, यः, एनम्, अजम्, अव्ययम् ।
कथम्, सः, पुरुषः, पार्थ, कम्, घातयति, हन्ति, कम् ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| वेद | - | विद्-पर.कर्तरि लट्. प्रपु. एक. | अविनाशिनम् | - | अविनाशिन्-न.पुं. द्वि.एक. |
| नित्यम् | - | अ.पुं. द्वि.एक. | यः | - | यद्-द. सर्व. पुं. प्र.एक. |
| एनम् | - | एतद्-द. सर्व. पुं. द्वि.एक. | अजम् | - | अ. पुं. द्वि.एक. |
| अव्ययम् | - | अ.पुं.द्वि.एक. | कथम् | - | अव्ययम् |
| सः | - | तद्-द. सर्व. पुं. प्र.एक. | पुरुषः | - | अ. पुं. प्र.एक. |
| पार्थ | - | अ. पुं. सम्बो.एक. | कम् | - | किम्-म. सर्व. पुं. द्वि.एक. |
| घातयति | - | हन् (णिच्)पर. कर्तरि लट्.प्रपु.एक. | हन्ति | - | हन्-पर. कर्तरि लट्. प्रपु. एक. |

**पदार्थः –** पार्थ = हे अर्जुन ! यः = यः पुरुषः, एनम् = अमुम् (आत्मानम्), अविनाशिनम् = नाशरहितम्, नित्यम् = शाश्वतम्, अजम् = जन्मरहितम्, अव्ययम् = क्षयविहीनम्, वेद = जानाति, सः पुरुषः = सः मानवः, कम् = कं पुरुषम्, कथम् = केन प्रकारेण, घातयति = विनाशयति, कं हन्ति = कं मारयति ।

**अन्वयः –** पार्थ, यः एनम् अविनाशिनं नित्यम् अजम् अव्ययं च वेद सः पुरुषः कं कथं घातयति ? कं हन्ति ?

**आकाङ्क्षा –**

**घातयति, हन्ति ।**

**कः** घातयति, हन्ति ? – **पुरुषः** घातयति, हन्ति ।

पुरुषः **इत्थं** घातयति, हन्ति । – पुरुषः **कथं** घातयति, हन्ति !

पुरुषः इत्थं **तं** घातयति, **तं** हन्ति ? – पुरुषः कथं **कं** घातयति, **कं** हन्ति !

**कः** पुरुषः इत्थं तं घातयति, तं हन्ति ? – **यः वेद सः** पुरुषः कथं कं घातयति, कं हन्ति ?

**सः कं** वेद यः पुरुषः इत्थं तं घातयति, तं हन्ति ? – **यः एनं** वेद सः पुरुषः कथं कं घातयति, कं हन्ति ?

सः एनं **कीदृशं** वेद यः पुरुषः इत्थं तं घातयति, तं हन्ति ?

– यः एनम् **अविनाशिनं** वेद सः पुरुषः कथं कं घातयति, कं हन्ति ?

सः एनम् अविनाशिनं **पुनश्च कीदृशं** वेद यः पुरुषः इत्थं तं घातयति, तं हन्ति ?

– यः एनम् अविनाशिनं **नित्यं** वेद सः पुरुषः कथं कं घातयति, कं हन्ति ?

सः एनम् अविनाशिनं नित्यं **पुनश्च कीदृशं** वेद यः पुरुषः इत्थं तं घातयति, तं हन्ति ?

– यः एनम् अविनाशिनं नित्यम् **अजं** वेद सः पुरुषः कथं कं घातयति, कं हन्ति ?

सः एनम् अविनाशिनं नित्यम् अजं **पुनश्च कीदृशं** वेद यः पुरुषः इत्थं तं घातयति, तं हन्ति ?

– यः एनम् अविनाशिनं नित्यम् अजम् **अव्ययं** च वेद सः पुरुषः कथं कं घातयति, कं हन्ति ?

**तात्पर्यम्** – अयम् आत्मा विनाशरहितः, नित्यः, जन्मरहितः, अपक्षयरहितश्च इति यः जानाति सः ज्ञानी एव । तादृशज्ञानवान् पुरुषः अन्यं कथं वा हन्ति ? कथं वा हनने अन्यं प्रेरयति ?

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| वेदाविनाशिनम् | – वेद + अविनाशिनम् | सवर्णदीर्घसन्धिः |
| य एनम् | – यः + एनम् | विसर्गसन्धिः (लोपः) |
| स पुरुषः | – सः + पुरुषः | विसर्गसन्धिः (लोपः) |
| पुराणो न | – पुराणः + न | विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः |

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥2.22॥**

**पदच्छेदः** – वासांसि, जीर्णानि, यथा, विहाय, नवानि, गृह्णाति, नरः, अपराणि । तथा, शरीराणि, विहाय, जीर्णानि, अन्यानि, संयाति, नवानि, देही ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| वासांसि | – वासस्–स. नपुं. द्वि. बहु. | जीर्णानि | – अ. नपुं. द्वि.बहु. |
| यथा | – अव्ययम् | विहाय | – ल्यबन्तम् अव्ययम् |
| नवानि | – अ. नपुं. द्वि. बहु. | गृह्णाति | – ग्रह्–पर. कर्तरि लट्. प्रपु. एक. |
| नरः | – अ. पुं. प्र. एक. | अपराणि | – अ. नपुं. द्वि. बहु. |
| तथा | – अव्ययम् | शरीराणि | – अ. नपुं. द्वि. बहु. |
| जीर्णानि | – अ. नपुं. द्वि.बहु. | अन्यानि | – अ. नपुं. द्वि. बहु. |
| संयाति | – सम्+या–पर.कर्तरि लट्.प्रपु.एक. | देही | – देहिन्–न. पुं. प्र.एक. |

**पदार्थः** – नरः = मानवः, जीर्णानि = शिथिलानि, वासांसि = वस्त्राणि, विहाय = त्यक्त्वा, अपराणि = इतराणि, नवानि = नूतनानि, यथा = येन प्रकारेण, गृह्णाति = धरति, तथा = तेन प्रकारेण, देही = आत्मा, जीर्णानि = शिथिलानि, शरीराणि = वपूंषि, विहाय = विसृज्य, अन्यानि = इतराणि, नवानि = नवीनानि, संयाति = प्राप्नोति ।

**अन्वयः** – नरः जीर्णानि वासांसि विहाय अपराणि नवानि यथा गृह्णाति तथा देही जीर्णानि शरीराणि विहाय अन्यानि नवानि संयाति ।

आकाङ्क्षा –

**गृह्णाति** ।

**कः** गृह्णाति ? – **नरः** गृह्णाति ।

नरः **कानि** गृह्णाति ? – नरः **वासांसि** गृह्णाति ।

नरः **कीदृशानि** वासांसि गृह्णाति ? – नरः **नवानि** वासांसि गृह्णाति ।

नरः **कानि** नवानि वासांसि गृह्णाति ? – नरः **अपराणि** नवानि वासांसि गृह्णाति ।

नरः **किं कृत्वा** अपराणि नवानि वासांसि गृह्णाति ? – नरः **विहाय** अपराणि नवानि वासांसि गृह्णाति ।

नरः **कानि** विहाय अपराणि नवानि वासांसि गृह्णाति ?

– नरः **वासांसि** विहाय अपराणि नवानि वासांसि गृह्णाति ।

नरः **कीदृशानि** वासांसि विहाय अपराणि नवानि वासांसि गृह्णाति ?

– नरः **जीर्णानि** वासांसि विहाय अपराणि नवानि वासांसि गृह्णाति ।

**यथा** नरः जीर्णानि वासांसि विहाय अपराणि नवानि वासांसि गृह्णाति **तथा किं भवति** ?

– **यथा** नरः जीर्णानि वासांसि विहाय अपराणि नवानि वासांसि गृह्णाति **तथा संयाति** ।

तथा **कः** संयाति ? – तथा **देही** संयाति ।

तथा देही **कानि** संयाति ? – तथा देही **नवानि** (शरीराणि) संयाति ।

तथा देही **कीदृशानि** नवानि (शरीराणि) संयाति ?– तथा देही **अन्यानि** नवानि (शरीराणि) संयाति ।

तथा देही **किं कृत्वा** अन्यानि नवानि शरीराणि संयाति ?

– तथा देही **विहाय** अन्यानि नवानि शरीराणि संयाति ।

तथा देही **कानि** विहाय अन्यानि नवानि शरीराणि संयाति ?

– तथा देही **शरीराणि** विहाय अन्यानि नवानि शरीराणि संयाति ।

तथा देही **कीदृशानि** शरीराणि विहाय अन्यानि नवानि शरीराणि संयाति ?

– तथा देही **जीर्णानि** शरीराणि विहाय अन्यानि नवानि शरीराणि संयाति ।

**तात्पर्यम्** – मनुष्यः वस्त्राणि धरति । परन्तु सः सर्वदा समानमेव वस्त्रं न धरति । धृतानि वस्त्राणि यदा जीर्णानि भवन्ति तदा तानि विहाय नूतनानि अन्यानि वस्त्राणि धरति । एवम् आत्मा अपि जीर्णानि शरीराणि परित्यज्य अभिनवानि अन्यानि शरीराणि आश्रयते ।

**व्याकरणम्** –

**(क) सन्धिः** नरोऽपराणि – नरः + अपराणि विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः पूर्वरूपं च

जीर्णान्यन्यानि – जीर्णानि + अन्यानि यणसन्धिः

**(ख) कृदन्तः** जीर्णानि – जॄ + क्त (कर्तरि)

विहाय – वि + हा + ल्यप्

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥2.23॥**

**पदच्छेदः –** न एनम्, छिन्दन्ति, शस्त्राणि, न, एनम्, दहति, पावकः ।
न, च, एनम्, क्लेदयन्ति, आपः, न, शोषयति, मारुतः ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| एनम् – | एतद्–द. सर्व. पुं. प्र. एक. | छिन्दन्ति– | छिद्–पर. कर्तरि लट्. प्रपु. बहु. |
| शस्त्राणि – | अ. नपुं. प्र. बहु. | एनम् – | एतद्–द. सर्व. पुं. द्वि.एक. |
| दहति – | दह्–पर. कर्तरि लट्. प्रपु. एक. | पावकः – | अ. पुं. प्र.एक. |
| क्लेदयन्ति – | क्लिद्(णिच्)–पर. कर्तरि लट्.प्रपु.बहु. | आपः – | अप्–प. स्त्री. प्र.बहु. |
| शोषयति – | शुष्(णिच्)–पर. कर्तरि लट्.प्रपु.बहु. | मारुतः – | अ. पुं. प्र. एक. |

**पदार्थः –** शस्त्राणि = आयुधानि, एनम् = इमम् आत्मानम्, न छिन्दन्ति = न खण्डयन्ति, पावकः = अग्निः, एनम् = अमुम्, न दहति = न भस्मीकरोति, आपः = उदकानि, एनम् = अमुम्, न क्लेदयन्ति च = न आर्द्रीकुर्वन्ति अपि, मारुतः = वायुः, न शोषयति = न शुष्कं करोति ।

**अन्वयः –** शस्त्राणि एनं न छिन्दन्ति । पावकः एनं न दहति । आपः एनं न क्लेदयन्ति । मारुतः च न शोषयति ।

**आकाङ्क्षा –**

एषः **कीदृशः** ?

**न छिन्दन्ति** ।

**कानि** न छिन्दन्ति ? – **शस्त्राणि** न छिन्दन्ति ।

शस्त्राणि **कं** न छिन्दन्ति ? – शस्त्राणि **एनं** न छिन्दन्ति ।

शस्त्राणि एनं न छिन्दन्ति, **पुनश्च कीदृशः** ? – शस्त्राणि एनं न छिन्दन्ति, **न दहति** ।

शस्त्राणि एनं न छिन्दन्ति, **कः** न दहति ? – शस्त्राणि एनं न छिन्दन्ति, **पावकः** न दहति ।

शस्त्राणि एनं न छिन्दन्ति, पावकः **कं** न दहति ? – शस्त्राणि एनं न छिन्दन्ति, पावकः **एनं** न दहति ।

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, **पुनश्च कीदृशः** ?

– शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, **न क्लेदयन्ति** ।

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, **काः** न क्लेदयन्ति ?

– शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, **आपः** न क्लेदयन्ति ।

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः **कं** न क्लेदयन्ति ?

– शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः **एनं** न क्लेदयन्ति ।

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति, **पुनश्च कीदृशः** ?

– शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति, **न च शोषयति** ।

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति, **कः** न च शोषयति ?

– शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति, **मारुतः** न च शोषयति ।

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति, मारुतः **कं** न च शोषयति ?

– शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति, मारुतः **एनं** न च शोषयति।

**तात्पर्यम् –** एनम् आत्मानं शस्त्राणि छेत्तुं न प्रभवन्ति। अग्निः एनं दग्धुं न प्रभवति। जलम् एनं नैव आर्द्रीकर्तुं शक्नोति। वायुः अपि एनं शोषयितुं न प्रभवति।

**व्याकरणम् –**

| **(क) सन्धिः** | नैनम् | – | न + एनम् | वृद्धिसन्धिः |
|---|---|---|---|---|
| | क्लेदयन्त्यापः | – | क्लेदयन्ति + आपः | यण्सन्धिः |
| | आपो न | – | आपः + न | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥2.24॥**

**पदच्छेदः –** अच्छेद्यः, अयम्, अदाह्यः, अयम्, अक्लेद्यः, अशोष्यः, एव, च।
नित्यः, सर्वगतः, स्थाणुः, अचलः, अयम्, सनातनः ॥

**पदपरिचयः –**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| अच्छेद्यः | – | अ. पुं. प्र. एक. | अयम् | – | इदम्–म. सर्व. पुं. प्र. एक. |
| अदाह्यः | – | अ. पुं. प्र. एक. | अक्लेद्यः | – | अ. पुं. प्र. एक. |
| अशोष्यः | – | अ. पुं. प्र. एक. | एव | – | अव्ययम् |
| च | – | अव्ययम् | नित्यः | – | अ. पुं. प्र. एक. |
| सर्वगतः | – | अ. पुं. प्र. एक. | स्थाणुः | – | उ. पुं. प्र. एक. |
| अचलः | – | अ. पुं. प्र. एक. | सनातनः | – | अ. पुं. प्र. एक. |

**अन्वयः –** अयम् अच्छेद्यः। अयम् अदाह्यः। अयम् अक्लेद्यः अशोष्यः एव च। अयं नित्यः सर्वगतः स्थाणुः अचलः सनातनः (च)।

**आकाङ्क्षा –**

अयं **कीदृशः** ? – अयम् **अच्छेद्यः**।

अयम् अच्छेद्यः। **अयं पुनश्च कीदृशः** ? – अयम् अच्छेद्यः। **अयम् अदाह्यः**।

अयम् अच्छेद्यः। अयम् अदाह्यः। **अयं पुनश्च कीदृशः ?**

– अयम् अच्छेद्यः। अयम् अदाह्यः। **अयम् अक्लेद्यः**।

अयम् अच्छेद्यः। अयम् अदाह्यः। अयम् अक्लेद्यः **पुनश्च कीदृशः** ?

– अयम् अच्छेद्यः। अयम् अदाह्यः। अयम् अक्लेद्यः **अशोष्यः एव च**।

अयम् अच्छेद्यः। अयम् अदाह्यः। अयम् अक्लेद्यः अशोष्यः एव च। **अयं पुनःकीदृशः** ?

– अयम् अच्छेद्यः। अयम् अदाह्यः। अयम् अक्लेद्यः अशोष्यः एव च। अयं **नित्यः**।

– अयम् अच्छेद्यः। अयम् अदाह्यः। अयम् अक्लेद्यः अशोष्यः एव च। अयं नित्यः **पुनश्च कीदृशः** ?

– अयम् अच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः, **सर्वगतः** ।

अयम् अच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः सर्वगतः **पुनश्च कीदृशः** ?

– अयम् अच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः सर्वगतः, **स्थाणुः** ।

अयम् अच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः सर्वगतः, स्थाणुः **पुनश्च कीदृशः** ?

– अयमच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः सर्वगतः, स्थाणुः, **अचलश्च** ।

अयम् अच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः सर्वगतः, स्थाणुः, अचलः **पुनश्च कीदृशः** ?

– अयम् अच्छेद्यः । अयम् अदाह्यः । अयम् अक्लेद्यः अशोष्यः एव च । अयं नित्यः सर्वगतः, स्थाणुः, अचलः, **सनातनः च** ।

**पदार्थः** – अयम् = एषः आत्मा, अच्छेद्यः = छेत्तुम् अयोग्यः, अयम् = एषः आत्मा, अदाह्यः = दग्धुम् अयोग्यः, अक्लेद्यः = क्लेदयितुम् अशक्यः, अशोष्यः एव च = शोषयितुम् अशक्यः, अयम् = एषः, नित्यः = शाश्वतः, सर्वगतः = सर्वव्यापी, स्थाणुः = स्थिरः, अचलः = कम्परहितः, सनातनः = सदावर्ती ।

**तात्पर्यम्** – अयम् आत्मा शस्त्रेण केनापि छेत्तुम् अशक्यः । अग्निना भस्मीकर्तुम् अपि न शक्यः । अस्य जलादिना क्लेदनम् आतपादिना शोषणं वा न शक्यम् । अयं सर्वदा भवति । सर्वत्रापि भवति । अयं निश्चलः स्थिरः सनातनश्च वर्तते ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| अच्छेद्योऽयम् | – अच्छेद्यः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| अदाह्योऽयम् | – अदाह्यः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| अक्लेद्योऽशोष्यः | – अक्लेद्यः + अशोष्यः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| अचलोऽयम् | – अचलः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| अशोष्य एव | – अशोष्यः + एव | विसर्गसन्धिः (लोपः) |
| स्थाणुरचलः | – स्थाणुः + अचलः | विसर्गसन्धिः (रेफः) |

**(ख) समासः**

| | | |
|---|---|---|
| अच्छेद्यः | – न च्छेद्यः | – नञ्तत्पुरुषः । |
| अदाह्यः | – न दाह्यः | – नञ्तत्पुरुषः । |
| अक्लेद्यः | – न क्लेद्यः | – नञ्तत्पुरुषः । |
| अशोष्यः | – न शोष्यः | – नञ्तत्पुरुषः । |
| अचलः | – न चलः | – नञ्तत्पुरुषः । |

सर्वगतः - सर्वं गतः - द्वितीयातत्पुरुषः ।

**(ग) कृदन्तः** छेद्यः - छिद् + ण्यत् (कर्मणि) एवम् दह्-दाह्यः, क्लिद्-क्लेद्यः, शुष्-शोष्यः इति बोध्यम् ।

गतः - गम्लृ + क्त (कर्तरि)

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥2.25॥**

**पदच्छेदः -** अव्यक्तः, अयम्, अचिन्त्यः, अयम्, अविकार्यः, अयम्, उच्यते । तस्मात्, एवम्, विदित्वा, एनम्, न, अनुशोचितुम्, अर्हसि ॥2.25॥

**पदपरिचयः -**

| पदम् | | विवरणम् | पदम् | - | विवरणम् |
|---|---|---|---|---|---|
| अव्यक्तः | - | अ. पुं. प्र. एक. | अयम् | - | इदम्-म. सर्व. पुं. प्र. एक. |
| अचिन्त्यः | - | अ. पुं. प्र. एक. | अविकार्यः | - | अ. पुं. प्र. एक. |
| उच्यते | - | वच्-पर.कर्मणि लट्.प्र.पु. एक. | तस्मात् | - | तद्-द. सर्व. पुं. पं. एक. |
| एवम् | - | अव्ययम् | विदित्वा | - | क्त्वान्तम् अव्ययम् |
| एनम् | - | एतद्-द. सर्व. पुं. द्वि. एक. | अनुशोचितुम् | - | तुमुन्नन्तम् अव्ययम् |
| अर्हसि | - | अर्ह्-पर.कर्तरि लट्. प्र.पुं. एक. | | | |

**पदार्थः -** अयम् = एषः देही, अव्यक्तः = अप्रकटः, अचिन्त्यः = निराकारः, अविकार्यः = अपरिणामी, उच्यते = कथ्यते, तस्मात् = अतः, एवम् = इत्थम्, एनम् (देहिनम्) = अमुम्, विदित्वा = विज्ञाय, अनुशोचितुम् = दुःखितुम्, न अर्हसि = न योग्यो भवसि ।

**अन्वयः -** अयम् अव्यक्तः । अयम् अचिन्त्यः । अयम् अविकार्यः उच्यते । तस्मात् एवम् एनं देहिनं विदित्वा अनुशोचितुं न अर्हसि ।

**आकाङ्क्षा -**

**उच्यते** ।

**कः** उच्यते ? - **अयम्** उच्यते ।

अयं **कीदृशः** उच्यते ? - अयम् **अव्यक्तः** उच्यते ।

अयम् अव्यक्तः । **अयं कीदृशः** उच्यते ? - अयम् अव्यक्तः । **अयम् अचिन्त्यः** उच्यते ।

अयम् अव्यक्तः । अयम् अचिन्त्यः । **अयं पुनः कीदृशः** उच्यते ?

- अयम् अव्यक्तः । अयम् अचिन्त्यः । **अयम् अविकार्यः** उच्यते ।

- अयम् अव्यक्तः । अयम् अचिन्त्यः । अयम् अविकार्यः उच्यते । **तस्मात् त्वं न अर्हसि** ।

त्वं **किं कर्तुं** न अर्हसि ? - त्वम् **अनुशोचितुं** न अर्हसि ।

**कथं** त्वम् अनुशोचितुं न अर्हसि ? - **एवं** त्वम् अनुशोचितुं न अर्हसि ।

एवं **किं कृत्वा** त्वम् अनुशोचितुं न अर्हसि ? – एवं **विदित्वा** त्वम् अनुशोचितुं न अर्हसि ।

एवं **कं** विदित्वा त्वम् अनुशोचितुं न अर्हसि ? – एवम् **एनं** विदित्वा त्वम् अनुशोचितुं न अर्हसि ।

**तात्पर्यम्** –एषः आत्मा इन्द्रियाणाम् अगोचरः इति हेतोः अचिन्त्यः अस्ति । अस्य कोऽपि विकारः न भवति । अस्य आत्मनः एतादृशं स्वरूपं ज्ञात्वा त्वं दुःखम् अनुभवितुं नार्हसि ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| अव्यक्तोऽयम् | – | अव्यक्तः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| अचिन्त्योऽयम् | – | अचिन्त्यः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| अविकार्योऽयम् | – | अविकार्यः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| तस्मादेवम् | – | तस्मात् + एवम् | जश्त्वसन्धिः |
| विदित्वैनम् | – | विदित्वा + एनम् | वृद्धिसन्धिः |
| नानुशोचितुम् | – | न + अनुशोचितुम् | सवर्णदीर्घसन्धिः |

**(ख) समासः**

| | | |
|---|---|---|
| अव्यक्तः | – | न व्यक्तः – नञ्तत्पुरुषः । |
| अचिन्त्यः | – | न चिन्त्यः – नञ्तत्पुरुषः । |
| अविकार्यः | – | न विकार्यः – नञ्तत्पुरुषः । |

**(ग) कृदन्तः**

| | | |
|---|---|---|
| व्यक्तः | – | वि + अञ्ज् + क्त (कर्मणि) |
| चिन्त्यः | – | चिन् + ण्यत् (कर्मणि) |
| विकार्यः | – | वि + कृञ् + ण्यत् (कर्मणि) |
| विदित्वा | – | विद् + क्त्वा । |
| अनुशोचितुम् | – | अनु + शुच् + तुमुन् । |

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ।।2.26।।**

**पदच्छेदः** – अथ, च, एनम्, नित्यजातम्, नित्यम्, वा, मन्यसे, मृतम् ।
तथा, अपि, त्वम्, महाबाहो, न, एवम्, शोचितुम्, अर्हसि ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अथ | – | अव्ययम् | एनम् | – | एतद्–द.सर्व.पुं.द्वि.एक. |
| नित्यजातम् | – | अ.पुं.द्वि.एक. | नित्यम् | – | अ.पुं.द्वि.एक. |
| वा | – | अव्ययम् | मन्यसे | – | मन–आत्म.कर्तरि लट्.मपुं.एक. |
| मृतम् | – | अ.पुं.द्वि.एक. | तथा | – | अव्ययम् |
| त्वम् | – | युष्मद्–द.सर्व.प्र.एक. | महाबाहो | – | उ.पुं.सम्बो.एक. |
| एवम् | – | अव्ययम् | शोचितुम् | – | तुमुन्नन्तम् अव्ययम् |
| अर्हसि | – | अर्ह्–पर.कर्तरि लट्.मपु.एक. | | | |

**पदार्थः** – अथ च = यदि पुनः, एनम् = अमुम् देहिनम्, नित्यजातम् = सर्वदा जायमानम्, नित्यं वा = सदा वा, मृतम् = नष्टम्, मन्यसे = चिन्तयसि, तथापि = एवमपि, महाबाहो = दीर्घबाहो, (अर्जुन) त्वम् = त्वम्, एवम् = इत्थम्, शोचितुम् = खेदितुम्, न अर्हसि = न योग्यः असि ।

**अन्वयः** – महाबाहो ! अथ च एनं नित्यजातं नित्यं वा मृतं मन्यसे तथापि त्वम् एवं शोचितुं न अर्हसि ।

**आकाङ्क्षा** –

**मन्यसे** ।

| | |
|---|---|
| **कं** मन्यसे ? | – **एनं** मन्यसे । |
| एनं **कीदृशं** मन्यसे ? | – एनं **नित्यजातं** मन्यसे । |
| एनं नित्यजातं **पुनश्च कीदृशं** मन्यसे ? | – एनं नित्यजातं **नित्यं वा मृतं** मन्यसे । |

**अथ च** एनं नित्यजातं नित्यं वा मृतं मन्यसे **तथापि एवं** न अर्हसि ।

| | |
|---|---|
| तथापि एवं **किं कर्तुं** न अर्हसि ? | – तथापि एवं **शोचितुं** न अर्हसि । |
| अस्मिन् श्लोके सम्बोधनपदं किम् ? | – **महाबाहो ।** |

**तात्पर्यम्** – हे अर्जुन ! यदि पुनः त्वम् अयम् आत्मा सर्वदा जायते इति सर्वदा म्रियते इति वा मन्यसे तथापि एवं शोकम् अनुभवितुं नार्हसि ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | चैनम् | – | च + एनम् | वृद्धिसन्धिः |
| | तथापि | – | तथा + अपि | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | नित्यजातं | – | नित्यं जातः, तम् – सुप्समासः । | |
| **(ग) कृदन्तः** | जातम् | – | जन् + क्त (कर्तरि) | |
| | मृतम् | – | मृ + क्त (कर्तरि) | |

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥2.27॥**

**पदच्छेदः** – जातस्य, हि, ध्रुवः, मृत्युः, ध्रुवम्, जन्म, मृतस्य च ।
तस्मात्, अपरिहार्ये, अर्थे, न, त्वम्, शोचितुम्, अर्हसि ॥

**पदपरिचयः** –

| पदम् | – | विवरणम् | पदम् | – | विवरणम् |
|---|---|---|---|---|---|
| जातस्य | – | अ. पुं. ष. एक. | हि | – | अव्ययम् |
| ध्रुवः | – | अ. पुं. प्र. एक. | मृत्युः | – | उ. पुं. प्र. एक. |
| ध्रुवम् | – | अ. नपुं. प्र. एक. | जन्म | – | जन्मन्–न. नपुं. प्र.एक. |
| मृतस्य | – | अ. पुं. ष. एक. | तस्मात् | – | तद्–द. सर्व. पं.एक. |
| अपरिहार्ये | – | अ. पुं. स. एक. | अर्थे | – | अ. पुं. स. एक. |

| | | | | | |
|---|---|---|---|---|---|
| त्वम् | - | युष्मद्-द. सर्व.प्र. एक. | शोचितुम् | - | तुमुन्नन्तम् अव्ययम् |
| अर्हसि | - | अर्ह्-पर. लट् मपु. एक. | | | |

**पदार्थः** – जातस्य हि = उत्पन्नस्य, मृत्युः = मरणम्, ध्रुवः = निश्चितम्, मृतस्य च = नष्टस्य च, जन्म = उत्पत्तिः, ध्रुवम् = निश्चिता, तस्मात् = ततः, अपरिहार्ये = परिहर्तुम् अयोग्ये, अर्थे = विषये, त्वम् = त्वम्, शोचितुम् = दुःखितुम्, न अर्हसि = न योग्यः भवसि ।

**अन्वयः** – जातस्य हि मृत्युः ध्रुवः । मृतस्य च जन्म ध्रुवम् । तस्मात् अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि ।

**आकाङ्क्षा** –

**त्वं न अर्हसि** ।

त्वं **किं कर्तुं** न अर्हसि ? – त्वं **शोचितुं** न अर्हसि ।

**कस्मिन्** त्वं शोचितुं न अर्हसि ? – **अर्थे** त्वं शोचितुं न अर्हसि ?

**कीदृशे** अर्थे त्वं शोचितुं न अर्हसि ? – **अपरिहार्ये** अर्थे त्वं शोचितुं न अर्हसि ।

**कस्मात्** अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि ? – **तस्मात्** अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि ।

– **मृत्युः ध्रुवः, जन्म ध्रुवम्,** तस्मात् अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि ।

**कस्य** मृत्युः ध्रुवः ? **कस्य च** जन्म ध्रुवम् ? यस्मात् अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि ?

– **जातस्य** मृत्युः ध्रुवः । **मृतस्य च** जन्म ध्रुवम् । तस्मात् अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि ?

**तात्पर्यम्** – यः जायते तस्य मरणं निश्चितम् । एवं यः म्रियते तस्यापि पुनः जन्म निश्चितम् । एवं सति अस्मिन् विषये त्वं शोचितुं नार्हसि ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | ध्रुवो मृत्युः | – ध्रुवः + मृत्युः | विसर्गसन्धिः (सकारः) रेफः उकारः गुणः |
| | मृत्युर्ध्रुवम् | – मृत्युः + ध्रुवम् | विसर्गसन्धिः (रेफः) |
| | तस्मादपरिहार्ये | – तस्मात् + अपरिहार्ये | जश्त्वसन्धिः |
| | अपरिहार्येऽर्थे | – अपरिहार्ये + अर्थे | पूर्वरूपसन्धिः |
| **(ख) समासः** | अपरिहार्ये | – न परिहार्यः, तस्मिन् – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | परिहार्ये | – परि + हृ + ण्यत् (कर्मणि) तस्मिन् । | |

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥2.28॥**

**पदच्छेदः** – अव्यक्तादीनि, भूतानि, व्यक्तमध्यानि, भारत ।
अव्यक्तनिधनानि, एव, तत्र, का, परिदेवना ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अव्यक्तादीनि | – | इ. नपुं. प्र. बहु. | भूतानि | – | अ. नपुं. प्र. बहु. |

| | | | | |
|---|---|---|---|---|
| व्यक्तमध्यानि | - अ. नपुं. प्र. बहु. | भारत | - | अ. पुं. सम्बो. बहु. |
| अव्यक्तनिधनानि | - अ. नपुं. प्र. बहु. | एव | - | अव्ययम् |
| तत्र | - अव्ययम् | का | - | किम्–म.सर्व. स्त्री. प्र. एक. |
| परिदेवना | - आ. स्त्री. प्र. एक. | | | |

**पदार्थः** – भारत = अर्जुन ! भूतानि = प्राणिनः, अव्यक्तादीनि = अस्फुटमूलाः, व्यक्तमध्यानि = स्फुटमध्याः, अव्यक्तनिधनानि एव = अस्फुटान्ताः एव, तत्र = तस्मिन्, का परिदेवना = किं वा आक्रन्दनम् ?

**अन्वयः** – भारत ! भूतानि अव्यक्तादीनि व्यक्तमध्यानि अव्यक्तनिधनानि एव । तत्र का परिदेवना ?

**आकाङ्क्षा** –

**भूतानि** ।

भूतानि **कीदृशानि** ? – भूतानि **अव्यक्तादीनि** ।

भूतानि अव्यक्तादीनि **पुनश्च कीदृशानि** ? – भूतानि अव्यक्तादीनि **व्यक्तमध्यानि** ।

भूतानि अव्यक्तादीनि व्यक्तमध्यानि **पुनश्च कीदृशानि एव** ?

– भूतानि अव्यक्तादीनि व्यक्तमध्यानि **अव्यक्तनिधनानि एव** । (अतः) **का परिदेवना** ?

**कुत्र** का परिदेवना ? – **तत्र** का परिदेवना ।

**तात्पर्यम्** – भूतानाम् आदिः अव्यक्तः वर्तते । अन्तः अपि अव्यक्तः वर्तते । इहलोके अनुभवगोचराणि भवन्ति इति हेतोः मध्यमात्रं तु व्यक्तं दृश्यते । एवं सति तादृशेषु भूतेषु आक्रन्देनेन किं प्रयोजनम् ?

**व्याकरणम्** –

**(क) सन्धिः** अव्यक्तनिधनान्येव – अव्यक्तनिधनानि + एव यणसन्धिः

**(ख) समासः** अव्यक्तादीनि – अव्यक्तः आदिः येषां तानि – बहुव्रीहिः ।

अव्यक्तनिधनानि – अव्यक्तं निधनं येषां तानि – बहुव्रीहिः ।

**(ग) कृदन्तः** परिदेवना – परि + दिव् + णिच् + युच् (भावे) ।

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥2.29॥**

**पदच्छेदः** – आश्चर्यवत्, पश्यति, कश्चित्, एनम्, आश्चर्यवत्, वदति, तथा, एव, च, अन्यः । आश्चर्यवत्, च, एनम्, अन्यः, शृणोति, श्रुत्वा, अपि, एनम्, वेद, न, च, एव, कश्चित् ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| आश्चर्यवत् | - | अव्ययम् | पश्यति | - | दृशिर्–पर. कर्तरि लट्.प्रपु.एक. |
| कश्चित् | - | अव्ययम् | एनम् | - | एतद्–द. सर्व.पुं.द्वि.एक. |
| वदति | - | वद्–पर. कर्तरि लट्.प्रपु.एक. | तथा | - | अव्ययम् |
| एव | - | अव्ययम् | च | - | अव्ययम् |

| | | | | | |
|---|---|---|---|---|---|
| अन्यः | - | अ.सर्व.पुं.प्र.एक. | शृणोति | - | श्रु-पर.कर्तरि लट्.प्रपु.एक. |
| श्रुत्वा | - | क्त्वान्तम् अव्ययम् | अपि | - | अव्ययम् |
| वेद | - | विद्-पर.कर्तरि लट्.प्रपु.एक. | न | - | अव्ययम् |
| एव | - | अव्ययम् | | | |

**पदार्थः** - कश्चित् = कोऽपि पुरुषः, एनम् = आत्मानम्, आश्चर्यवत् = अद्भुतवत्, पश्यति = वीक्षते, तथा एव = एवम्, अन्यः च = अपरः पुरुषोऽपि, वदति = कथयति, शृणोति = आकर्णयति, कश्चित् = कोऽपि, एनम् = अमुम्, श्रुत्वा अपि = आकर्ण्य अपि, न च एव वेद = न जानाति एव।

**अन्वयः** - कश्चित् एनम् आश्चर्यवत् पश्यति, तथा एव अन्यः च आश्चर्यवत् वदति, अन्यः च एनम् आश्चर्यवत् शृणोति। कश्चित् एनं श्रुत्वा अपि न च एव वेद।

**आकाङ्क्षा** -

**पश्यति**।

कः पश्यति ? - **कश्चित्** पश्यति।

कश्चित् **कं** पश्यति ? - कश्चित् **एनं** पश्यति।

कश्चित् एनं **कथं** पश्यति ? - कश्चित् एनम् **आश्चर्यवत्** पश्यति।

**तथा एव वदति**।

तथा एव **कः** वदति ? - तथा एव **अन्यः** च वदति।

तथा एव अन्यः च **कथं** वदति ? - तथा एव अन्यः च **आश्चर्यवत्** वदति।

**शृणोति**।

**कः** शृणोति ? - **अन्यः** शृणोति।

अन्यः **कं** शृणोति ? - अन्यः **एनं** शृणोति।

अन्यः एनं **कथं** शृणोति ? - अन्यः च एनम् **आश्चर्यवत्** शृणोति।

**न वेद**।

**कः** न वेद ? - **कश्चित्** न वेद।

कश्चित् **कं** न वेद ? - कश्चित् **एनं** न वेद।

कश्चित् **किं कृत्वा** एनं न वेद ? - कश्चित् **श्रुत्वा अपि** एनं न च एव वेद।

**तात्पर्यम्** - कश्चन एतम् आत्मानम् अद्भुतमिव पश्यति। अन्यः कश्चन एनम् अद्भुतमिव वदति। अपरः एनम् अद्भुतमिव शृणोति। अन्यस्तु श्रुत्वापि एनं नैव जानाति।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कश्चिदेनम् | - कश्चित् + एनम् | जश्त्वसन्धिः |
| | आश्चर्यवद्वदति | - आश्चर्यवत् + वदति | जश्त्वसन्धिः |
| | तथैव | - तथा + एव | वृद्धिसन्धिः |
| | चैव | - च + एव | वृद्धिसन्धिः |

| | | |
|---|---|---|
| चान्यः | - च + अन्यः | सवर्णदीर्घसन्धिः |
| श्रुत्वापि | - श्रुत्वा + अपि | सवर्णदीर्घसन्धिः |
| आश्चर्यवच्च | - आश्चर्यवत् + च | श्चुत्वसन्धिः |
| अप्येनम् | - अपि + एनम् | यण्सन्धिः |

**(ग) कृदन्तः** श्रुत्वा - श्रु + क्त्वा।

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥2.30॥**

**पदच्छेदः -** देही, नित्यम्, अवध्यः, अयम्, देहे, सर्वस्य, भारत।
तस्मात्, सर्वाणि, भूतानि, न, त्वम्, शोचितुम्, अर्हसि॥

**पदपरिचयः -**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| देही | - | देहिन्-न. पुं. प्र. एक. | नित्यम् | - | अव्ययम् |
| अवध्यः | - | अ. पुं. प्र. एक. | अयम् | - | इदम्-म. सर्व. पुं. प्र. एक. |
| देहे | - | अ. पुं. स. एक . | सर्वस्य | - | अ. सर्व. पुं. ष. एक. |
| भारत | - | अ. पुं. सम्बो. एक. | तस्मात् | - | तद्-द. सर्व. पं. एक. |
| सर्वाणि | - | अ. सर्व. नपुं. द्वि. बहु. | भूतानि | - | अ. नपुं. द्वि. बहु. |
| त्वम् | - | युष्मद्-द. सर्व. प्र. एक. | शोचितुम् | - | तुमुन्नन्तम् अव्ययम् |
| अर्हसि | - | अर्ह्-पर. कर्तरि लट्. मपु. एक. | | | |

**पदार्थः -** भारत = अर्जुन ! अयम् = एषः, देही = आत्मा, सर्वस्य = निखिलस्य, देहे = शरीरे, नित्यम् = सदा, अवध्यः = हन्तुम् अशक्यः, तस्मात् = ततः हेतोः, सर्वाणि = सकलानि, भूतानि = प्राणिनः, त्वं शोचितुम् = त्वं दुःखितुम्, न अर्हसि = न योग्यः असि।

**अन्वयः -** भारत ! अयं देही सर्वस्य देहे नित्यम् अवध्यः। तस्मात् सर्वाणि भूतानि त्वं शोचितुं न अर्हसि।

**आकाङ्क्षा -**

**अवध्यः।**

| | |
|---|---|
| **कः** अवध्यः ? | - **देही** अवध्यः। |
| **कः** देही अवध्यः ? | - **अयं** देही अवध्यः। |
| अयं देही **कदा** अवध्यः ? | - अयं देही **नित्यम्** अवध्यः। |
| अयं देही **कुत्र** नित्यम् अवध्यः ? | - अयं देही **देहे** नित्यम् अवध्यः। |
| अयं देही **कस्य** देहे नित्यम् अवध्यः ? | - अयं देही **सर्वस्य** देहे नित्यम् अवध्यः। |

अयं देही सर्वस्य देहे नित्यम् अवध्यः। **तस्मात् त्वं न अर्हसि**।

| | |
|---|---|
| तस्मात् त्वं **किं कर्तुं** न अर्हसि ? | - तस्मात् त्वं **शोचितुं** न अर्हसि। |
| तस्मात् त्वं **कानि** शोचितुं न अर्हसि ? | - तस्मात् त्वं **भूतानि** शोचितुं न अर्हसि। |

तस्मात् त्वं **कानि** भूतानि शोचितुं न अर्हसि ? – तस्मात् त्वं **सर्वाणि** भूतानि शोचितुं न अर्हसि ।

**अस्मिन् श्लोके सम्बोधनपदं किम् ?** – **भारत ।**

**तात्पर्यम् –** अयम् आत्मा सर्वासु अपि अवस्थासु अवध्यः । परन्तु सः नित्यं स्थावरादिषु सर्वेषु अपि स्थितः । देहे वध्यमानेऽपि सः देही अवध्यः इत्यतः त्वम् एतानि भूतानि प्रति शोचितुं नार्हसि ।

**व्याकरणम् –**

**(क) सन्धिः** अवध्योऽयम् – अवध्यः + अयम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च

**(ख) समासः** अवध्यः – न वध्यः – नञ्तत्पुरुषः ।

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥2.31॥**

**पदच्छेदः –** स्वधर्मम्, अपि, च, अवेक्ष्य, न, विकम्पितुम्, अर्हसि ।
धर्म्यात्, हि, युद्धात्, श्रेयः, अन्यत्, क्षत्रियस्य, न, विद्यते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| स्वधर्मम् | – | अ. पुं. द्वि. एक. | अवेक्ष्य | – | ल्यबन्तम् अव्ययम् |
| विकम्पितुम् | – | तुमुन्नन्तम् अव्ययम् | अर्हसि | – | अर्ह्–पर. कर्तरि लट्. मपु. एक. |
| धर्म्यात् | – | अ. नपुं. पं. एक. | युद्धात् | – | अ. नपुं.पं.एक. |
| श्रेयः | – | श्रेयस्–स. नपुं. प्र.एक. | अन्यत् | – | अ.सर्व.नपुं. प्र. एक. |
| क्षत्रियस्य | – | अ.पुं. ष.एक. | विद्यते | – | विद्–आत्म.कर्तरि लट्. प्रपु. एक. |

**पदार्थः –** स्वधर्मं च = आत्मधर्मं च, अवेक्ष्य अपि = विलोक्य अपि, विकम्पितुम् = चलितुम्, न अर्हसि = न अर्हसि, हि = यस्मात्, क्षत्रियस्य = क्षत्रियकुलोद्भवस्य, धर्म्यात् = धर्मयुक्तात्, युद्धात् = रणात्, अन्यत् श्रेयः = अन्यत् हितम्, न विद्यते = नास्ति ।

**अन्वयः –** स्वधर्मं च अवेक्ष्य अपि विकम्पितुं न अर्हसि । क्षत्रियस्य हि धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते ।

**आकाङ्क्षा –**

**न अर्हसि ।**

**किं कर्तुं** न अर्हसि ? – **विकम्पितुं** न अर्हसि ।

**किं कृत्वा** अपि विकम्पितुं न अर्हसि ? – **अवेक्ष्य** अपि विकम्पितुं न अर्हसि ।

**कम्** अवेक्ष्य अपि विकम्पितुं न अर्हसि ? – **स्वधर्मम्** अवेक्ष्य अपि विकम्पितुं न अर्हसि ।

स्वधर्मम् अवेक्ष्य अपि विकम्पितुं न अर्हसि । **कस्मात्** ?

– स्वधर्मम् अवेक्ष्य अपि विकम्पितुं न अर्हसि । **न विद्यते** ।

**किं** न विद्यते ? – **श्रेयः** हि न विद्यते ।

**किं** श्रेयः न विद्यते ? – **अन्यत्** हि श्रेयः न विद्यते ।

**कस्मात्** अन्यत् श्रेयः न विद्यते ? – **युद्धात्** हि अन्यत् श्रेयः न विद्यते ।

**कीदृशात्** युद्धात् अन्यत् श्रेयः न विद्यते ? – **धर्म्यात्** हि युद्धात् अन्यत् श्रेयः न विद्यते ।

**कस्य** धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते ? – **क्षत्रियस्य** हि धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते ।

**तात्पर्यम्** – स्वधर्मः चिन्त्यते चेदपि त्वया न भेतव्यम् । यतः क्षत्रियस्य धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते । अतः श्रेयोभिलाषिणा त्वया युद्धम् अवश्यं कर्तव्यम् ।

**रामानुजीयमतम्** – स्वधर्मः = क्षत्रियस्य युद्धं स्वधर्मः ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | चावेक्ष्य | – च + अवेक्ष्य | सवर्णदीर्घसन्धिः |
| | धर्म्याद्धि | – धर्म्यात् + हि | पूर्वसवर्णसन्धिः |
| | युद्धाच्छ्रेयोऽन्यत् | – युद्धात् + श्रेयः | श्चुत्वम्, छत्वसन्धिः |
| | | – युद्धाच्छ्रेयः + अन्यत् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| **(ख) समासः** | स्वधर्मम् | – स्वस्य धर्मः, तम् – षष्ठीतत्पुरुषः । | |
| **(ग) कृदन्तः** | अवेक्ष्य | – अव + ईक्ष + ल्यप् । | |
| | विकम्पितुम् | – वि + कम्प् + तुमुन् । | |
| **(ग) तद्धितान्तः** | धर्म्यात् | – धर्म + यत् (अनपेतार्थे) धर्मात् अनपेतम्, तस्मात् । धर्मयुक्तम् इत्यर्थः । | |

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥2.32॥**

**पदच्छेदः** – यदृच्छया, च, उपपन्नम्, स्वर्गद्वारम्, अपावृतम् ।
सुखिनः, क्षत्रियाः, पार्थ, लभन्ते, युद्धम्, ईदृशम् ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| यदृच्छया | – | आ.स्त्री. तृ.एक. | च | – | अव्ययम् |
| उपपन्नम् | – | अ. नपुं. द्वि.एक. | स्वर्गद्वारम् | – | अ. नपुं. द्वि. एक. |
| अपावृतम् | – | अ. नपुं. द्वि. एक. | सुखिनः | – | सुखिन्–न. पुं. प्र. बहु. |
| क्षत्रियाः | – | अ. पुं. प्र. बहु. | पार्थ | – | अ. पुं. सम्बो. एक. |
| लभन्ते | – | लभ्–आत्म. कर्तरि लट्. प्रपु. बहु. | युद्धम् | – | अ. नपुं. द्वि. एक. |
| ईदृशम् | – | अ. नपुं. द्वि. एक. | | | |

**पदार्थः** – पार्थ = अर्जुन ! यदृच्छया = स्वेच्छया, उपपन्नम् = प्राप्तम्, अपावृतं च = उद्घाटितञ्च, स्वर्गद्वारम् = स्वर्गप्रतिहारम्, ईदृशम् = एतादृशम्, युद्धम् = संग्रामम्, सुखिनः = सुखवन्तः, क्षत्रियाः = राजानः, लभन्ते = प्राप्नुवन्ति ।

**अन्वयः** – पार्थ ! यदृच्छया उपपन्नम् अपावृतं च स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ।

**आकाङ्क्षा –**

**लभन्ते ।**

| | |
|---|---|
| **के** लभन्ते ? | – **क्षत्रियाः** लभन्ते । |
| **कीदृशाः** क्षत्रियाः लभन्ते ? | – **सुखिनः** क्षत्रियाः लभन्ते । |
| **किं** सुखिनः क्षत्रियाः लभन्ते ? | – **युद्धं** सुखिनः क्षत्रियाः लभन्ते । |
| **कीदृशं** युद्धं सुखिनः क्षत्रियाः लभन्ते ? | – **ईदृशं** युद्धं सुखिनः क्षत्रियाः लभन्ते । |
| **किंरूपम्** ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ? | – **स्वर्गद्वारम्** ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते । |

**कीदृशं** स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ?

– **अपावृतं** च स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ।

**किंभूतम्** अपावृतं च स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ?

– **उपपन्नम्** अपावृतं च स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ।

**कथम्** उपपन्नम् अपावृतं च स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ?

– **यदृच्छया** उपपन्नम् अपावृतं च स्वर्गद्वारम् ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **पार्थ** ।

**तात्पर्यम्** – हे अर्जुन ! इदं युद्धं त्वया यदृच्छया प्राप्तमस्ति । वस्तुतः इदं युद्धं नहि, अपि तु उद्घाटितं स्वर्गद्वारमिति भावय । ईदृशं युद्धं पुण्यशालिनः एव प्राप्नुवन्ति ।

**व्याकरणम् –**

| | | |
|---|---|---|
| **(क) सन्धिः** | चोपपन्नम् | – च + उपपन्नम् गुणसन्धिः |
| **(ख) समासः** | स्वर्गद्वारम् | – स्वर्गस्य द्वारम् – षष्ठीतत्पुरुषः । |
| **(ग) कृदन्तः** | उपपन्नम् | – उप + पद् + क्त (कर्तरि) |
| | अपावृतम् | – अप + आ + वृ + क्त (कर्मणि) |

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥2.33॥**

**पदच्छेदः –** अथ, चेत्, त्वम्, इमम्, धर्म्यम्, संग्रामम्, न, करिष्यसि ।
ततः, स्वधर्मम्, कीर्तिम्, च, हित्वा, पापम्, अवाप्स्यसि ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अथ | – | अव्ययम् | चेत् | – | अव्ययम् |
| त्वम् | – | युष्मद्–द.सर्व.प्र.एक. | इमम् | – | इदम्–म. सर्व.पुं.द्वि.एक. |
| धर्म्यम् | – | अ.पुं.द्वि.एक. | संग्रामम् | – | अ.पुं.द्वि.एक. |
| करिष्यसि | – | डुकृञ्–पर. कर्तरि लृट्.मपु.एक. | ततः | – | अव्ययम् |
| स्वधर्मम् | – | अ.पुं.द्वि.एक. | कीर्तिम् | – | इ.स्त्री.द्वि.एक. |

| | | | | |
|---|---|---|---|---|
| हित्वा | - क्त्वान्तम् अव्ययम् | पापम् | - | अ.नपुं.द्वि.एक. |
| अवाप्स्यसि | - अव + आप्-पर.कर्तरि लृट्.मपु.एक. | | | |

**पदार्थः** – अथ = युद्धारम्भानन्तरम्, चेत् = यदि, त्वम् इमम् = त्वम् एनम्, धर्म्यम् = धर्मयुक्तम्, संग्रामम् = रणम्, न करिष्यसि = न आचरिष्यसि, ततः = तर्हि, स्वधर्मम् = आत्मधर्मम्, कीर्तिं च = यशश्च, हित्वा = विहाय, पापम् = किल्बिषम्, अवाप्स्यसि = प्राप्स्यसि।

**अन्वयः** – अथ चेत् त्वम् इमं धर्म्यं संग्रामं न करिष्यसि ततः स्वधर्मं कीर्तिं च हित्वा पापम् अवाप्स्यसि।

**आकाङ्क्षा** –

**न करिष्यसि।**

**कं** न करिष्यसि ? – **संग्रामं** न करिष्यसि।

**कं** संग्रामं न करिष्यसि ? – **इमं** संग्रामं न करिष्यसि।

इमं **कीदृशं** संग्रामं न करिष्यसि ? – इमं **धर्म्यं** संग्रामं न करिष्यसि।

**कः** इमं धर्म्यं संग्रामं न करिष्यसि ? – **त्वम्** इमं धर्म्यं संग्रामं न करिष्यसि।

**अथ चेत्** त्वम् इमं धर्म्यं संग्रामं न करिष्यसि **ततः किं भवति** ?

– **अथ चेत्** त्वम् इमं धर्म्यं संग्रामं न करिष्यसि **ततः अवाप्स्यसि**।

ततः **किम्** अवाप्स्यसि ? – ततः **पापम्** अवाप्स्यसि।

ततः **किं कृत्वा** पापम् अवाप्स्यसि ? – ततः **हित्वा** पापम् अवाप्स्यसि।

ततः **कं** हित्वा पापम् अवाप्स्यसि ? – ततः **स्वधर्मं** हित्वा पापम् अवाप्स्यसि।

ततः स्वधर्मं **पुनश्च कां** हित्वा पापम् अवाप्स्यसि ? – ततः स्वधर्मं **कीर्तिं** च हित्वा पापम् अवाप्स्यसि।

**तात्पर्यम्** – हे अर्जुन ! इदानीं तव धर्म्यं युद्धं प्राप्तमस्ति। यदि त्वम् एतद् युद्धं न करिष्यसि तर्हि आत्मधर्मात् च्युतः भविष्यसि। तव अपकीर्तिः भविष्यति। एतेन त्वं पापमपि अवाप्स्यसि।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) समासः** | स्वधर्मम् | - | दृश्यताम् - 2.31 |
| **(ख) कृदन्तः** | हित्वा | - | हि + क्त्वा। |
| **(ग) तद्धितान्तः** | धर्म्यम् | - | दृश्यताम् - 2.31 |

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।**
**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥2.34॥**

**पदच्छेदः** – अकीर्तिम्, च, अपि, भूतानि, कथयिष्यन्ति, ते, अव्ययाम्।
सम्भावितस्य, च, अकीर्तिः, मरणात्, अतिरिच्यते ॥

**पदपरिचयः** –

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| अकीर्तिम् | - | इ. स्त्री. द्वि. एक. | च | - | अव्ययम् |

| | | | | | |
|---|---|---|---|---|---|
| अपि | - | अव्ययम् | भूतानि | - | अ. नपुं. प्र. बहु. |
| कथयिष्यन्ति | - | कथ–पर. कर्तरि लृट् प्रपु.बहु. | ते | - | तद्–द. सर्व. ष.एक. |
| अव्ययाम् | - | आ.स्त्री.द्वि.एक. | सम्भावितस्य | - | अ. पुं. ष. एक. |
| अकीर्तिः | - | इ. स्त्री. प्र. एक. | मरणात् | - | अ. नपुं. पं. एक. |
| अतिरिच्यते | - | अति + रिच्–आत्म.कर्तरि लट्. प्रपु.एक. | | | |

**पदार्थः** – भूतानि = जनाः, ते = तव, अव्ययाम् = अनश्वरीम्, अकीर्तिं च अपि = दुष्कीर्तिं च, कथयिष्यन्ति = वर्णयिष्यन्ति, सम्भावितस्य च = मान्यस्य जनस्य च, अकीर्तिः = दुष्कीर्तिः, मरणात् अपि = मृत्योः अपि, अतिरिच्यते = अतिशेते ।

**अन्वयः** – भूतानि च ते अव्ययाम् अकीर्तिं चापि कथयिष्यन्ति । सम्भावितस्य च अकीर्तिः मरणात् अतिरिच्यते।

**आकाङ्क्षा** –

**कथयिष्यन्ति** ।

**कां** कथयिष्यन्ति ? – **अकीर्तिं** कथयिष्यन्ति ।

**कीदृशीम्** अकीर्तिं कथयिष्यन्ति ? – **अव्ययाम्** अकीर्तिं कथयिष्यन्ति ।

**कानि** अव्ययाम् अकीर्तिं कथयिष्यन्ति ? – **भूतानि** अव्ययाम् अकीर्तिं कथयिष्यन्ति ।

भूतानि **कस्य** अव्ययाम् अकीर्तिं कथयिष्यन्ति ? – भूतानि **ते** अव्ययाम् अकीर्तिं कथयिष्यन्ति ।

**अतिरिच्यते** ।

**का** अतिरिच्यते ? – **अकीर्तिः** अतिरिच्यते ।

अकीर्तिः **कस्मात्** अपि अतिरिच्यते ? – अकीर्तिः **मरणात्** अपि अतिरिच्यते ।

**कस्य** अकीर्तिः मरणात् अतिरिच्यते ? – **सम्भावितस्य** च अकीर्तिः मरणात् अपि अतिरिच्यते ।

**तात्पर्यम्** – यदि त्वं युद्धं न करिष्यसि तर्हि जनाः दीर्घकालं यावत् तव अकीर्तिं कथयिष्यन्ति । सर्वैरपि प्रशंसनीयस्य मानिनः च जनस्य अकीर्तिः मरणादपि अधिकां पीडां जनयति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | चापि | - च + अपि | सवर्णदीर्घसन्धिः |
| | तेऽव्ययाम् | - ते + अव्ययाम् | पूर्वरूपसन्धिः |
| | चाकीर्तिः | - च + अकीर्तिः | सवर्णदीर्घसन्धिः |
| | अकीर्तिर्मरणात् | - अकीर्तिः + मरणात् | विसर्गसन्धिः (रेफः) |
| | मरणादतिरिच्यते | - मरणात् + अतिरिच्यते | जश्त्वसन्धिः |
| **(ख) कृदन्तः** | सम्भावितस्य | - सम् +भू + णिच् + क्त (कर्मणि) तस्य । | |

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥2.35॥**

**पदच्छेदः –** भयात्, रणात्, उपरतम्, मंस्यन्ते, त्वाम्, महारथाः।
येषाम्, च, त्वम्, बहुमतः, भूत्वा, यास्यसि, लाघवम्॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| भयात् | – | अ. नपुं. पं. एक. | रणात् | – | अ. नपुं. पं. एक. |
| उपरतम् | – | अ. पुं. द्वि. एक. | मंस्यन्ते | – | मन्–आत्म. कर्तरि लृट्. मपु.एक. |
| त्वाम् | – | युष्मद्–द.सर्व. द्वि.एक. | महारथाः | – | अ. पुं. प्र. बहु. |
| येषाम् | – | यद्–द. सर्व. ष. बहु. | बहुमतः | – | अ. पुं. प्र. एक. |
| भूत्वा | – | क्त्वान्तम् अव्ययम् | यास्यसि | – | या–पर.कर्तरि लृट् मपु. एक. |
| लाघवम् | – | अ. नपुं. द्वि. एक. | | | |

**पदार्थः –** येषाम् = येषां राज्ञाम्, त्वं बहुमतः = त्वं सम्मानितः, भूत्वा = भूत्वा, लाघवम् = अगौरवास्पदत्वम्, यास्यसि = प्राप्स्यसि, महारथाः च = ते महारथाः च, त्वाम् = त्वाम्, भयात् = भीतेः कारणात्, रणात् = युद्धात्, उपरतम् = विरतम्, मंस्यन्ते = चिन्तयिष्यन्ति।

**अन्वयः –** येषां त्वं बहुमतः भूत्वा लाघवं यास्यसि (तादृशाः) महारथाः च त्वां भयात् रणात् उपरतं मंस्यन्ते।

**आकाङ्क्षा –**

**त्वं यास्यसि**।
त्वं **किं** यास्यसि ? – त्वं **लाघवं** यास्यसि।
त्वं **किं कृत्वा** लाघवं यास्यसि ? – त्वं **भूत्वा** लाघवं यास्यसि ?
त्वं **कीदृशः** भूत्वा लाघवं यास्यसि ? – त्वं **बहुमतः भूत्वा** लाघवं यास्यसि।
**केषां** बहुमतः भूत्वा त्वं लाघवं यास्यसि ? – **येषां** त्वं बहुमतः भूत्वा लाघवं यास्यसि।
येषां त्वं बहुमतः भूत्वा लाघवं यास्यसि (तादृशाः) **किं कुर्वन्ति ?**
(तादृशाः) **मंस्यन्ते**।
तादृशाः **के** मंस्यन्ते ? – तादृशाः **महारथाः** मंस्यन्ते।
तादृशाः महारथाः **कं** मंस्यन्ते ? – तादृशाः महारथाः **त्वां** मंस्यन्ते।
तादृशाः महारथाः त्वां **कीदृशं** मंस्यन्ते ? – तादृशाः महारथाः त्वाम् **उपरतं** मंस्यन्ते।
तादृशाः महारथाः त्वां **कस्मात्** उपरतं मंस्यन्ते ?– तादृशाः महारथाः त्वां **रणात्** उपरतं मंस्यन्ते।
तादृशाः महारथाः त्वां **कस्मात् कारणात्** रणात् उपरतं मंस्यन्ते ?
– तादृशाः महारथाः त्वां **भयात्** रणात् उपरतं मंस्यन्ते।

**तात्पर्यम् –** अद्य यावत् भवान् सर्वेषां गौरवास्पदम् आसीत्। युद्धाकरणेन भवान् तेषां मध्ये लाघवं यास्यति। ते महारथाः भवान् भयात् रणात् उपरतः इति चिन्तयन्ति।

**व्याकरणम् –**

**(क) सन्धिः** भयाद्रणादुपरतम् – भयात् + रणात् भयाद्रणात् जश्त्वसन्धिः

भयाद्रणात् + उपरतम्  जश्त्वसन्धिः

बहुमतो भूत्वा - बहुमतः + भूत्वा  विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** बहुमतः - बहूनां मतः - षष्ठीतत्पुरुषः ।

**(ग) कृदन्तः** उपरतम् - उप + रम् + क्त (कर्तरि)

**(घ) तद्धितान्तः** लाघवम् - लघु + अण् (भावे) । लघोः भावः इत्यर्थः ।

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥2.36॥**

**पदच्छेदः –** अवाच्यवादान्, च, बहून्, वदिष्यन्ति, तव, अहिताः ।
निन्दन्तः, तव, सामर्थ्यम्, ततः, दुःखतरम्, नु, किम् ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| अवाच्यवादान् | - | अ. पुं. द्वि. बहु. | बहून् | - | उ. पुं. प्र. बहु. |
| वदिष्यन्ति | - | वद्-पर. कर्तरि लृट्.प्रपु.बहु. | तव | - | युष्मद्-द. सर्व. ष. एक. |
| अहिताः | - | अ. पुं. प्र. बहु. | निन्दन्तः | - | निन्दत्-त. पुं. प्र. बहु. |
| सामर्थ्यम् | - | अ. नपुं. द्वि. एक. | ततः | - | अव्ययम् |
| दुःखतरम् | - | अ. नपुं. प्र. एक. | नु | - | अव्ययम् |
| किम् | - | किम्-म.सर्व. नपुं. प्र. एक. | | | |

**पदार्थः –** तव = भवतः, अहिताः च = शत्रवः अपि, तव = ते, सामर्थ्यम् = शक्तिम्, निन्दन्तः = दूषयन्तः, बहून् = नाना, अवाच्यवादान् = अवक्तव्यवचनानि, वदिष्यन्ति = कथयिष्यन्ति, ततः = तस्मात्, दुःखतरम् = अतिशयितदुःखम्, किं नु = किमस्ति ?

**अन्वयः –** तव अहिताः तव सामर्थ्यं निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति । ततः दुःखतरं नु किम् ?

**आकाङ्क्षा –**

**वदिष्यन्ति** ।

**के** वदिष्यन्ति ? - **अहिताः** वदिष्यन्ति ।

**कस्य** अहिताः वदिष्यन्ति ? - **तव** अहिताः वदिष्यन्ति ।

तव अहिताः **कान्** वदिष्यन्ति ? - तव अहिताः **अवाच्यवादान्** वदिष्यन्ति ।

तव अहिताः **कियतः** अवाच्यवादान् वदिष्यन्ति ? - तव अहिताः **बहून्** अवाच्यवादान् वदिष्यन्ति ।

तव अहिताः **किं कुर्वन्तः** बहून् अवाच्यवादान् वदिष्यन्ति ?
- तव अहिताः **निन्दन्तः** बहून् अवाच्यवादान् वदिष्यन्ति ।

तव अहिताः **किं** निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति ?
- तव अहिताः **सामर्थ्यं** निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति ।

तव अहिताः **कस्य** सामर्थ्यं निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति ?

– तव अहिताः **तव** सामर्थ्यं निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति ।

तव अहिताः तव सामर्थ्यं निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति । **ततो दुःखतरं नु किम् ?**

**तात्पर्यम्** – तव अहिताः तव सामर्थ्यम् निन्दन्तः बहूनि अवाच्यानि वचनानि त्वयि विषये वदिष्यन्ति । ततः दुःखतरम् अन्यत् किं भवेत् ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अवाच्यवादांश्च | – अवाच्यवादान् + च | रुत्वम्, विसर्गः, अनुस्वारागमः, सत्वसन्धिः, श्चुत्वं च |
| | तवाहिताः | – तव + अहिताः | सवर्णदीर्घसन्धिः |
| | ततो दुःखतरम् | – ततः + दुःखतरम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | अवाच्यवादान् | – अवाच्याः वादाः, तान् – कर्मधारयः । | |
| | अहिताः | – न हिताः – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | निन्दन्तः | – णिदि + शतृ (कर्तरि) । | |
| **(घ) तद्धितान्तः** | दुःखतरम् | – दुःख + तरप् (अतिशये) | |

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥2.37॥**

**पदच्छेदः** – हतः, वा, प्राप्स्यसि, स्वर्गम्, जित्वा, वा, भोक्ष्यसे, महीम् ।
तस्मात्, उत्तिष्ठ, कौन्तेय, युद्धाय कृतनिश्चयः ॥

**पदपरिचयः** –

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| हतः | – | अ. पुं. प्र. एक. | वा | – | अव्ययम् |
| प्राप्स्यसि | – | प्र+आप्–पर.कर्तरि लृट्.मपु.एक. | स्वर्गम् | – | अ.नपुं.द्वि.एक. |
| जित्वा | – | क्त्वान्तम् अव्ययम् | भोक्ष्यसे | – | भुज्–आत्म.कर्तरि लृट्.मपु.एक. |
| महीम् | – | ई. स्त्री. द्वि. एक. | तस्मात् | – | तद्–द.सर्व. पुं. पं. एक. |
| उत्तिष्ठ | – | उत्+स्था–पर.कर्तरि लोट्.मपु.एक. | कौन्तेय | – | अ. पुं. सम्बो. एक. |
| युद्धाय | – | अ. नपुं. च. एक. | कृतनिश्चयः | | अ. पुं. प्र. एक. |

**पदार्थः** – कौन्तेय = अर्जुन ! हतः वा = मारितः वा, स्वर्गम् = स्वर्गलोकम्, प्राप्स्यसि = लप्स्यसे, जित्वा वा = पराजित्य वा (स्थितः), महीम् = भूमिम्, भोक्ष्यसे = अनुभविष्यसि, तस्मात् = अतः, युद्धाय = योद्धुम्, कृतनिश्चयः = निश्चयं कृत्वा, उत्तिष्ठ = सन्नद्धो भव ।

**अन्वयः** – कौन्तेय ! हतः वा स्वर्गं प्राप्स्यसि । जित्वा वा (स्थितः) महीं भोक्ष्यसे । तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ।

**आकाङ्क्षा** –

**उत्तिष्ठ ।**

**कीदृशः** उत्तिष्ठ ? — **कृतनिश्चयः** उत्तिष्ठ ।

**कस्मै** कृतनिश्चयः उत्तिष्ठ ? — **युद्धाय** कृतनिश्चयः उत्तिष्ठ ।

**कस्मात्** युद्धाय कृतनिश्चयः उत्तिष्ठ ? — **प्राप्स्यसि भोक्ष्यसे वा, तस्मात्** युद्धाय कृतनिश्चयः उत्तिष्ठ ।

**कीदृशः वा** प्राप्स्यसि, **किं कृत्वा** वा भोक्ष्यसे, तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ?

— **हतो वा** प्राप्स्यसि, **जित्वा** वा (स्थितः) भोक्ष्यसे, तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ।

हतो वा **कं** प्राप्स्यसि, जित्वा वा स्थितः **कां** भोक्ष्यसे, तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ?

— हतो वा **स्वर्गं** प्राप्स्यसि, जित्वा वा स्थितः **महीं** भोक्ष्यसे, तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? — **कौन्तेय** ।

**तात्पर्यम्** — हे कुन्तीपुत्र ! युद्धे त्वं यदि म्रियसे तर्हि चिन्ता न कर्तव्या । यतः तेन त्वं स्वर्गं प्राप्स्यसि । अथ जयं प्राप्स्यसि तदा तु भूम्याः आधिपत्यं तव भविष्यति । उभयथापि तव श्रेयः एव भविष्यति । तस्मात् युद्धं करिष्यामि एव इति निश्चयं कृत्वा तदर्थं सन्नद्धो भव ।

**व्याकरणम्** —

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | हतो वा | — हतः + वा | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | तस्मादुत्तिष्ठ | — तस्मात् + उत्तिष्ठ | जश्त्वसन्धिः |
| **(ख) समासः** | कृतनिश्चयः | — कृतः निश्चयः येन सः — बहुव्रीहिः । | |
| **(ग) कृदन्तः** | जित्वा | — जि + क्त्वा । | |

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥2.38॥**

**पदच्छेदः** — सुखदुःखे, समे, कृत्वा, लाभालाभौ जयाजयौ ।
ततः, युद्धाय, युज्यस्व, न, एवम्, पापम्, अवाप्स्यसि ॥

**पदपरिचयः** —

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| सुखदुःखे | — अ. नपुं. द्वि. द्विव. | समे | — अ. नपुं. द्वि. द्विव. |
| कृत्वा | — क्त्वान्तम् अव्ययम् | लाभालाभौ | — अ. पुं. द्वि. द्विव. |
| जयाजयौ | — अ. पुं. द्वि. द्विव. | युद्धाय | — अ. नपुं. च. एक. |
| युज्यस्व | — युजिर्-आत्म. कर्तरि लोट्. मपु.एक. | एवम् | — अव्ययम् |
| पापम् | — अ. नपुं. द्वि. एक. | अवाप्स्यसि | — अव + आप् पर. कर्तरि लृट् मपु.एक. |

**पदार्थः** — सुखदुःखे = सन्तोषविषादौ, लाभालाभौ = लाभालाभौ, जयाजयौ = विजयपराजयौ, समे = समाने, कृत्वा = सम्भाव्य, ततः = पश्चात्, युद्धाय = समराय, युज्यस्व = सन्नद्धो भव, एवम् = इत्थं कृतं चेत्, पापम् = दोषम्, न अवाप्स्यसि = न प्राप्स्यसि ।

**अन्वयः** — सुखदुःखे लाभालाभौ जयाजयौ समे कृत्वा ततः युद्धाय युज्यस्व । एवं (कृतं चेत्) पापं न अवाप्स्यसि ।

आकाङ्क्षा –

**न अवाप्स्यसि।**

**किं** न अवाप्स्यसि ? – **पापं** न अवाप्स्यसि।

**कथं** पापं न अवाप्स्यसि ? – **एवं** (कृतं चेत्) पापं न अवाप्स्यसि।

**कुतः**, एवं (कृतं चेत्) पापं न अवाप्स्यसि ? – **ततः युज्यस्व**, एवं कृतं चेत् पापं न अवाप्स्यसि।

ततः **कस्मै** युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि ?

– ततः **युद्धाय** युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि।

**किं कृत्वा** ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि ?

– **समे कृत्वा** ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि।

**के** समे कृत्वा ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि ?

– **सुखदुःखे** समे ततः कृत्वा युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि।

सुखदुःखे **पुनश्च कौ** समे कृत्वा ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि ?

– सुखदुःखे **लाभालाभौ** समे कृत्वा ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि।

सुखदुःखे लाभालाभौ **पुनश्च कौ** समे कृत्वा ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि ?

– सुखदुःखे लाभालाभौ **जयाजयौ** समे कृत्वा ततः युद्धाय युज्यस्व, एवं कृतं चेत् पापं न अवाप्स्यसि।

**तात्पर्यम् –** सुखदुःखे लाभालाभौ जयाजयौ समे मन्यस्व। ततः युद्धाय सन्नद्धो भव। एवम् आचरणेन त्वं पापं न अवाप्स्यसि।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | ततो युद्धाय | – ततः + युद्धाय | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | नैवम् | – न + एवम् | वृद्धिसन्धिः |
| **(ख) समासः** | सुखदुःखे | – सुखं च दुःखं च, ते – द्वन्द्वः। | |
| | लाभालाभौ | – लाभश्च अलाभश्च, तौ –द्वन्द्वः। | |
| | जयाजयौ | – जयश्च अजयश्च तौ – द्वन्द्वः। | |
| **(ग) कृदन्तः** | कृत्वा | – कृञ् + क्त्वा। | |

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥2.39॥**

**पदच्छेदः –** एषा, ते, अभिहिता, साङ्ख्ये, बुद्धिः, योगे, तु, इमाम्, शृणु।
बुद्ध्या, युक्तः, यया, पार्थ, कर्मबन्धम्, प्रहास्यसि ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| एषा | – एतद्–द. सर्व. स्त्री. प्र.एक. | ते | – युष्मद्–द. सर्व. ष. एक. |

| | | | | | |
|---|---|---|---|---|---|
| अभिहिता | – आ. स्त्री. प्र. एक. | | साङ्ख्ये | – | अ. नपुं. स. एक. |
| बुद्धिः | – इ. स्त्री. प्र. एक. | | योगे | – | अ. पुं. स. एक. |
| इमाम् | – इदम्–म. सर्व. स्त्री. द्वि.एक. | | शृणु | – | श्रु–पर.कर्तरि लोट्. मपु. एक. |
| बुद्ध्या | – इ. स्त्री. तृ. एक. | | युक्तः | – | अ. पुं. प्र. एक. |
| यया | – यद्–द. सर्व.स्त्री. तृ.एक | | पार्थ | – | अ. पुं. सम्बो. एक. |
| कर्मबन्धम् | – अ. पुं. द्वि. एक. | | प्रहास्यसि | – | प्र + हा–पर.कर्तरि लृट्. मपु. एक. |

**पदार्थः** – पार्थ = अर्जुन ! एषा = इयम्, बुद्धिः = मतिः, ते = भवतः, साङ्ख्ये = ब्रह्मरूपे तत्त्वे,अभिहिता = निरूपिता, (अस्याः) योगे = अस्याः कर्मयोगे तु, इमाम् = एतां बुद्धिम्, शृणु = आकर्णय, यया = यया, बुद्ध्या = धिया, युक्तः = सहितः, कर्मबन्धम् = कर्मरूपबन्धनम्, प्रहास्यसि = त्यक्ष्यसि ।

**अन्वयः** – पार्थ ! एषा बुद्धिः ते साङ्ख्ये अभिहिता । योगे इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

**आकाङ्क्षा** –

**प्रहास्यसि** ।

**कीदृशः** प्रहास्यसि ? – **युक्तः** प्रहास्यसि ।

**कया युक्तः** प्रहास्यसि ? – **बुद्ध्या युक्तः** प्रहास्यसि ।

बुद्ध्या युक्तः **कं** प्रहास्यसि ? – बुद्ध्या युक्तः **कर्मबन्धं** प्रहास्यसि ।

**शृणु,** यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

**कां** शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ?– **इमां** शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

**कस्मिन्** इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ?

– **योगे तु** इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

**कस्याः** योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ?

– **बुद्धिः अभिहिता, (अस्याः)** योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

**का** बुद्धिः अभिहिता, अस्याः योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ?

– **एषा** बुद्धिः अभिहिता, अस्याः योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

एषा बुद्धिः **कस्मिन्** अभिहिता, अस्याः योगे तु इमा शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ?

– एषा बुद्धिः **साङ्ख्ये** अभिहिता, अस्याः योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

एषा बुद्धिः साङ्ख्ये **कस्मै** अभिहिता, अस्याः योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि?

– एषा बुद्धिः साङ्ख्ये **ते** अभिहिता, अस्याः योगे तु इमां शृणु, यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **पार्थ** ।

**तात्पर्यम्** – हे अर्जुन ! परमार्थवस्तुनि विषये एषः मार्गः तुभ्यम् उक्तः अस्ति । तत्प्राप्त्युपाये योगे तु ऊर्ध्वम् उपायं सूचयिष्यामि । यदि तां बुद्धिम् आश्रयसे तर्हि कर्मबन्धात् मुक्तो भवितुम् अर्हसि ।

**रामानुजीयमतम्** – साङ्ख्यम् = सङ्ख्या बुद्धिः, बुद्ध्या अवधारणीयम् आत्मतत्त्वम् । योगः = कर्मानुष्ठाने यो बुद्धियोगः सः ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | तेऽभिहिता | – ते + अभिहिता | पूर्वरूपसन्धिः |
| | बुद्धिर्योगे | – बुद्धिः + योगे | विसर्गसन्धिः (रेफः) |
| | त्विमाम् | – तु + इमाम् | यणसन्धिः |
| | युक्तो यया | – युक्तः + यया | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | कर्मबन्धम् | – कर्म एव बन्धः, तम् – कर्मधारयः । | |
| **(ग) कृदन्तः** | अभिहिता | – अभि + धा + क्त (कर्मणि) | |
| | युक्तः | – युजिर् + क्त (कर्तरि) | |

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥2.40॥**

**पदच्छेदः –** न, इह, अभिक्रमनाशः, अस्ति, प्रत्यवायः, न, विद्यते ।
स्वल्पम्, अपि, अस्य, धर्मस्य, त्रायते, महतः, भयात् ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| इह | – | अव्ययम् | अभिक्रमनाशः | – | अ. पुं. प्र. एक. |
| प्रत्यवायः | – | अ. पुं. प्र. एक. | विद्यते | – | विद्–आत्म. कर्तरि लट्. प्रपु.एक. |
| स्वल्पम् | – | अ. पुं. प्र. एक. | अस्य | – | इदम्–म. सर्व. पुं. ष. एक. |
| धर्मस्य | – | अ. पुं. ष. एक. | त्रायते | – | त्रा–आत्म.कर्तरि लट्. उपु. एक. |
| महतः | – | महत्–त. पुं. ष. एक | भयात् | – | अ. पुं. पं. एक. |

**पदार्थः –** इह = अत्र, अभिक्रमनाशः = प्रारम्भहानिः, नास्ति = न विद्यते, प्रत्यवायः = विघ्नः, न विद्यते = न भवति, अस्य = एतस्य, धर्मस्य = कर्ममार्गस्य, स्वल्पमपि = किञ्चिदपि, महतः = अधिकात्, भयात् = भीतेः, त्रायते = रक्षति ।

**अन्वयः –** इह अभिक्रमनाशः नास्ति, प्रत्यवायः न विद्यते, अस्य धर्मस्य स्वल्पमपि महतः भयात् त्रायते ।

**आकाङ्क्षा –**

**त्रायते ।**

**कस्मात्** त्रायते ? – **भयात्** त्रायते ।
**कीदृशात्** भयात् त्रायते ? – **महतः** भयात् त्रायते ।
**किं** महतः भयात् त्रायते ? – **स्वल्पमपि** महतः भयात् त्रायते ।
**कस्य** स्वल्पमपि महतः भयात् त्रायते ? – **धर्मस्य** स्वल्पमपि महतः भयात् त्रायते ।
**कस्य** धर्मस्य स्वल्पमपि महतः भयात् त्रायते ? – **अस्य** धर्मस्य स्वल्पमपि महतः भयात् त्रायते ?

**न विद्यते ।**

**कः** न विद्यते ? – **प्रत्यवायः** न विद्यते ।

**न** अस्ति ।

**कः** नास्ति ? – **अभिक्रमनाशः** नास्ति ।

**कुत्र** अभिक्रमनाशः नास्ति ? – **इह** अभिक्रमनाशः नास्ति ।

**तात्पर्यम्** – अस्य कर्मयोगस्य आचरणे अभिक्रमस्य (प्रारम्भस्य) नाशः न भवति । अवश्यं फलं लभ्यते इत्यर्थः। विघ्नोऽपि न सम्भवति । अस्य धर्मस्य किञ्चिन्मात्रेण अनुसरणमपि महतः भयात् अस्मान् रक्षति ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| नेहाभिक्रमनाशोऽस्ति | – न + इहाभिक्रमनाशः | गुणसन्धिः |
| | – नेह + अभिक्रमनाशः | सवर्णदीर्घसन्धिः |
| | – नेहाभिक्रमनाशः + अस्ति | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| प्रत्यवायो न | – प्रत्यवायः + न | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| स्वल्पमप्यस्य | – स्वल्पमपि + अस्य | यणसन्धिः |
| महतो भयात् | – महतः + भयात् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |

**(ख) समासः** अभिक्रमनाशः – अभिक्रमस्य नाशः – षष्ठीतत्पुरुषः ।

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥2.41॥**

**पदच्छेदः** – व्यवसायात्मिका, बुद्धिः, एका, इह, कुरुनन्दन ।
बहुशाखाः, हि, अनन्ताः, च, बुद्धयः, अव्यवसायिनाम् ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| व्यवसायात्मिका | – आ. स्त्री. प्र. एक. | बुद्धिः | – इ. स्त्री. प्र. एक. |
| एका | – आ. स्त्री. प्र. एक. | इह | – अव्ययम् |
| कुरुनन्दन | – अ. पुं. सम्बो. प्र. | बहुशाखाः | – आ. स्त्री. प्र. बहु. |
| अनन्ताः | – आ. स्त्री. प्र. बहु. | बुद्धयः | – इ. स्त्री. प्र. बहु. |
| अव्यवसायिनाम् | – अव्यवसायिन्–न. पुं. ष.बहु. | | |

**पदार्थः** – कुरुनन्दन = हे अर्जुन ! इह = अत्र, व्यवसायात्मिका = निश्चयात्मिका, बुद्धिः = मतिः, एका = एका, अव्यवसायिनाम् = निश्चयरहितानाम्, बुद्धयः = मतयः, बहुशाखाः = अनेकविधाः, अनन्ताः च = अन्तरहिताः ।

**अन्वयः** – कुरुनन्दन ! इह व्यवसायात्मिका बुद्धिः एका, (किन्तु) अव्यवसायिनां च बुद्धयः बहुशाखाः अनन्ताः हि ।

**आकाङ्क्षा** –

**एका** ।

**का** एका ? – **बुद्धिः** एका ।

**कीदृशी** बुद्धिः एका ? – **व्यवसायात्मिका** बुद्धिः एका ।
**कुत्र** व्यवसायात्मिका बुद्धिः एका ? – **इह** व्यवसायात्मिका बुद्धिः एका ।
**(किन्तु) बुद्धयः** ।
बुद्धयः **कीदृश्यः** ? – बुद्धयः **बहुशाखाः** ।
बुद्धयः बहुशाखाः, **पुनश्च कीदृश्यः** ? – बुद्धयः बहुशाखाः **अनन्ताः च** ।
**केषां** बुद्धयः बहुशाखाः अनन्ताः च ? – **अव्यवसायिनां** बुद्धयः बहुशाखाः अनन्ताः च ।
श्लोके सम्बोधनपदं किम् ? – **कुरुनन्दन** ।

**तात्पर्यम्** – हे अर्जुन ! अस्मिन् लोके कर्मयोगे प्रवृत्तिशीला बुद्धिः एका एव । परन्तु अप्रवृत्तिशीलानां पुरुषाणां बुद्धयस्तु बहुभेदाः अनन्ताश्च भवन्ति ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| बद्धिरेकेह | – बुद्धिः + एकेह | विसर्गसन्धिः (रेफः) |
| एकेह | – एका + इह | गुणसन्धिः |
| बहुशाखा हि | – बहुशाखाः + हि | विसर्गसन्धिः (लोपः) |
| ह्यनन्ताः | – हि + अनन्ताः | यणसन्धिः |
| अनन्ताश्च | – अनन्ताः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| बुद्धयोऽव्यवसायिनाम् | – बुद्धयः + अव्यवसायिनाम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |

**(ख) समासः**

| | |
|---|---|
| व्यवसायात्मिका | – व्यवसायः एव आत्मा यस्याः सा – बहुव्रीहिः । |
| कुरुनन्दन | – कुरूणां नन्दनः, तत्सम्बुद्धौ – षष्ठीतत्पुरुषः । |
| बहुशाखाः | – बह्व्यः शाखाः यासां ताः – बहुव्रीहिः । |
| अनन्ताः | – न विद्यते अन्तः यासां ताः – बहुव्रीहिः । |

**(ग) कृदन्तः** नन्दनः – नन्द + ल्यु (कर्तरि) । नन्दयति इति नन्दनः ।

**(घ) तद्धितान्तः** व्यवसायिनाम् – व्यवसाय + इनि (मतुबर्थे) ।

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥2.42॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥2.43॥**

**पदच्छेदः** –
याम्, इमाम्, पुष्पिताम्, वाचम्, प्रवदन्ति, अविपश्चितः ।
वेदवादरताः, पार्थ, न, अन्यत्, अस्ति, इति, वादिनः ॥
कामात्मानः, स्वर्गपराः, जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलाम्, भोगैश्वर्यगतिम्, प्रति ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|---|
| याम् | – | यद्-द. सर्व. स्त्री. द्वि.एक. | इमाम् | – इदम्-म. सर्व. स्त्री. द्वि.एक. |
| पुष्पिताम् | – | आ. स्त्री. द्वि.एक. | वाचम् | – वाच्-च. स्त्री. द्वि.एक. |
| प्रवदन्ति | – | प्र+वद्-पर. कर्तरि लट्.प्रपु.बहु. | अविपश्चितः | – अविपश्चित्-त. पुं. प्र.बहु. |
| वेदवादरताः | – | अ. पुं. प्र. बहु. | पार्थ | – अ. पुं. सम्बो.एक. |
| अन्यत् | – | अन्य-अ. सर्व.नपुं. प्र.एक. | अस्ति | – अस्-पर. कर्तरि लट्. प्रपु.एक. |
| वादिनः | – | वादिन्-न. पुं. प्र.बहु. | कामात्मानः | – कामात्मन्-न. पुं. प्र.बहु. |
| स्वर्गपराः | – | अ. पुं. प्र. बहु. | जन्मकर्मफलप्रदाम्- | आ. स्त्री. द्वि. एक. |
| क्रियाविशेषबहुलाम्- | | आ. स्त्री. द्वि.एक. | भोगैश्वर्यगतिम् | – इ. स्त्री. द्वि. एक. |
| प्रति | – | अव्ययम् | | |

**पदार्थः** – पार्थ = हे अर्जुन ! कामात्मनः = विषयासक्ताः, वेदवादरताः = वेदवाक्यानि विचारयन्तः, स्वर्गपराः = स्वर्गासक्ताः, अन्यत् = इतरत्, न अस्ति इति = न विद्यते इति, वादिनः = वदन्तः, अविपश्चितः = अविद्वांसः, जन्मकर्मफलप्रदाम् = जननं सुखरूपं कर्मफलं च प्रयच्छन्तीम्, भोगैश्वर्यगतिं प्रति = गृहवाहनादिविषयेषु स्वामित्वस्य प्राप्तिं प्रति, क्रियाविशेषबहुलाम् = विविधकर्मप्रचुराम्, इमाम् = एताम्, पुष्पिताम् = कुसुमिताम्, यां वाचम् = यद् वाक्यम्, प्रवदन्ति = कथयन्ति..।

**अन्वयः** – पार्थ ! कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः जन्मकर्मफलप्रदां भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुलाम् इमां पुष्पितां यां वाचं प्रवदन्ति...

**आकाङ्क्षा –**

**प्रवदन्ति** ।

**के** प्रवदन्ति ? – **कामात्मानः** प्रवदन्ति ?

कामात्मनः **पुनश्च कीदृशाः** प्रवदन्ति ? – कामात्मनः **स्वर्गपराः** प्रवदन्ति ?

कामात्मनः स्वर्गपराः **पुनश्च कीदृशाः** प्रवदन्ति ? – कामात्मनः स्वर्गपराः **वेदवादरताः** प्रवदन्ति ।

कामात्मनः स्वर्गपराः वेदवादरताः **पुनश्च कीदृशाः** प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः **नान्यदस्ति इति वादिनः** प्रवदन्ति ।

कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः **पुनश्च कीदृशाः** प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः **अविपश्चितः** प्रवदन्ति ।

कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **कां** प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **वाचं** प्रवदन्ति ।

कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **कीदृशीं** वाचं प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **पुष्पितां** वाचं प्रवदन्ति ।

कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **पुनश्च कीदृशीं** पुष्पितां वाचं प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **क्रियाविशेषबहुलां** पुष्पितां वाचं प्रवदन्ति।

कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **कां** प्रति क्रियाविशेषबहुलां पुष्पितां वाचं प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **भोगैश्वर्यगतिं** प्रति क्रिया-विशेषबहुलां पुष्पितां वाचं प्रवदन्ति।

कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **कीदृशीं** भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुलां पुष्पितां वाचं प्रवदन्ति ?

– कामात्मनः स्वर्गपराः वेदवादरताः नान्यदस्ति इति वादिनः अविपश्चितः **जन्मकर्मफलप्रदां** भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुलां पुष्पितां वाचं प्रवदन्ति।

श्लोके सम्बोधनपदं किम् ? – **पार्थ**।

**तात्पर्यम् –** वेदवाक्यानां विमर्शकाः केचन पुरुषाः सन्ति। ते तु विषयेषु आसक्ताः, स्वर्गम् अपेक्षमाणाः, तदतिरिक्तं फलमेव नास्ति इति वदन्तश्च श्रुतेः तात्पर्यं न जानन्ति। अत एव ते नानाविधैः यागादिभिः या साध्यते, या च जननं कर्मफलानुभवश्चेति संसारचक्रे पातयति तादृश्यां गृहवाहनादिविषयाणां प्राप्तौ निष्फलामपि सफलामिव भासमानां वाचं व्याहरन्ति।

**माध्वमतम्**–वेदार्थम् अविमृश्य 'स्वर्गादिफलप्रापककर्माण्येव वेदाः प्रतिपादयन्ति, तद्भिन्नं किञ्चिदपि नास्ति' इति केचित् प्रवदन्ति। तेषां परमात्मनि निश्चयात्मकं ज्ञानं न भविष्यति।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | प्रवदन्त्यविपश्चितः | – प्रवदन्ति + अविपश्चितः | यणसन्धिः |
| | नान्यत् | – न + अन्यत् | सवर्णदीर्घसन्धिः |
| | अन्यदस्ति | – अन्यत् + अस्ति | जश्त्वसन्धिः |
| | अस्तीति | – अस्ति + इति | सवर्णदीर्घसन्धिः |
| | स्वर्गपरा जन्म.... | – स्वर्गपराः + जन्म... | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | अविपश्चितः | – न विपश्चितः – नञ्तत्पुरुषः। | |
| | वेदवादरताः | – वेदस्य वादाः वेदवादाः – षष्ठीतत्पुरुषः। | |
| | | वेदवादेषु रताः – सप्तमीतत्पुरुषः। | |
| | कामात्मनः | – कामः एव आत्मा येषां ते – बहुव्रीहिः। | |
| | स्वर्गपराः | – स्वर्गः एव परः येषां ते – बहुव्रीहिः। | |
| | जन्मकर्मफलप्रदाम् | – कर्मणः फलम् कर्मफलम् – षष्ठीतत्पुरुषः। | |
| | | जन्म च कर्मफले च जन्मकर्मफले – द्वन्द्वः। | |
| | | जन्मकर्मफलयोः प्रदा, ताम् – षष्ठीतत्पुरुषः। | |
| **(ग) कृदन्तः** | वादिनः | – वद् + णिनि (ताच्छीलिके कर्तरि) | |

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥2.44॥**

**पदच्छेदः** – भोगैश्वर्यप्रसक्तानाम्, तया, अपहृतचेतसाम् ।
व्यवसायात्मिका, बुद्धिः, समाधौ, न, विधीयते ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| भोगैश्वर्यप्रसक्तानाम् | – अ. पुं. ष. बहु. | तया | – तद्–द. सर्व. स्त्री. तृ.एक. |
| अपहृतचेतसाम् | – अपहृतचेतस्–स.पुं.ष.बहु. | व्यवसायात्मिका | – आ. स्त्री. प्र.एक. |
| बुद्धिः | – इ. स्त्री. प्र.एक. | समाधौ | – इ. स्त्री.स.एक. |
| न | – अव्ययम् | विधीयते | – वि+धा–आत्म.कर्मणि लट्.प्र.एक. |

**पदार्थः** – तया = तया, वाचा अपहृतचेतसाम् = अपहृतमनसाम्, भोगैश्वर्यप्रसक्तानाम् = विषयप्राप्तौ आसक्तानां पुरुषाणाम्, बुद्धिः = मतिः, व्यवसायात्मिका = प्रवृत्तिशीला, समाधौ = एकाग्रतायाम्, न विधीयते = न प्रवर्तते ।

**अन्वयः** – तया अपहृतचेतसां भोगैश्वर्यप्रसक्तानां बुद्धिः व्यवसायात्मिका (सती) समाधौ न विधीयते ।

**आकाङ्क्षा** –

**न विधीयते** ।

**कुत्र** न विधीयते ? – **समाधौ** न विधीयते ।

**का** समाधौ न विधीयते ? – **बुद्धिः** समाधौ न विधीयते ।

बुद्धिः **कीदृशी** (सती) समाधौ न विधीयते ? – बुद्धिः **व्यवसायात्मिका** (सती) समाधौ न विधीयते ।

**केषां** बुद्धिः व्यवसायात्मिका सती समाधौ न विधीयते ?

– **अपहृतचेतसां** बुद्धिः व्यवसायात्मिका सती समाधौ न विधीयते ।

अपहृतचेतसां **पुनश्च केषां** बुद्धिः व्यवसायात्मिका सती समाधौ न विधीयते ?

– अपहृतचेतसां **भोगैश्वर्यप्रसक्तानां** बुद्धिः व्यवसायात्मिका सती समाधौ न विधीयते ।

**कया** अपहृतचेतसां भोगैश्वर्यप्रसक्तानां बुद्धिः व्यवसायात्मिका सती समाधौ न विधीयते ?

– **तया** अपहृतचेतसां भोगैश्वर्यप्रसक्तानां बुद्धिः व्यवसायात्मिका सती समाधौ न विधीयते ।

**तात्पर्यम्** – येषां मनः तादृश्या पुष्पितया वाचा अपहृतं भवति, ये च गृहवाहनादीनां विषयाणां सम्पादने प्रवृत्ताः भवन्ति तेषां बुद्धिः एकाग्रतायां न कदापि प्रवर्तते ।

**व्याकरणम्** –

**(क) सन्धिः** तयापहृतचेतसाम् – तया + अपहृतचेतसाम् सवर्णदीर्घसन्धिः

**(ख) समासः** भोगैश्वर्यप्रसक्तानाम् – भोगानाम् ऐश्वर्यम्, भोगैश्वर्यम् – षष्ठीतत्पुरुषः ।
भोगैश्वर्ये प्रसक्ताः, तेषाम् – सप्तमीतत्पुरुषः ।

| | | |
|---|---|---|
| | अपहृतचेतसाम् | – अपहृतं चेतः येषां ते, तेषाम् – बहुव्रीहिः । |
| **(ग) कृदन्तः** | प्रसक्तानाम् | – प्र + सज् + क्त (कर्तरि) तेषाम् । |

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥2.45॥**

**पदच्छेदः –** त्रैगुण्यविषयाः, वेदाः, निस्त्रैगुण्यः, भव, अर्जुन ।
निर्द्वन्द्वः, नित्यसत्त्वस्थः, निर्योगक्षेमः, आत्मवान् ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| त्रैगुण्यविषयाः | – अ. पुं. प्र. बहु. | वेदाः | – अ. पुं. प्र. बहु. |
| निस्त्रैगुण्यः | – अ. पुं. प्र. एक. | भव | – भू–पर. कर्तरि लोट्. मपु. एक. |
| अर्जुन | – अ. पुं. सम्बो.एक. | निर्द्वन्द्वः | – अ. पुं. प्र. एक. |
| नित्यसत्त्वस्थः | – अ. पुं. प्र. एक. | निर्योगक्षेमः | – अ. पुं. प्र. एक. |
| आत्मवान् | – आत्मवत्–त.पुं.प्र.एक. | | |

**पदार्थः –** अर्जुन = पार्थ ! वेदाः = श्रुतयः, त्रैगुण्यविषयाः = त्रिगुणात्मकप्रकृतिविषयाः, निस्त्रैगुण्यः = त्रिगुणरहितः, निर्द्वन्द्वः = सुखदुःखादियुग्मरहितः, नित्यसत्त्वस्थः = सदा सत्त्वगुणसम्पन्नः, निर्योगक्षेमः = योगक्षेमरहितः, आत्मवान् = आत्मनिष्ठः, भव = तिष्ठ ।

**अन्वयः –** अर्जुन ! वेदाः त्रैगुण्यविषयाः । निस्त्रैगुण्यः निर्द्वन्द्वः नित्यसत्त्वस्थः निर्योगक्षेमः आत्मवान् भव ।

**आकाङ्क्षा –**

**वेदाः** ।

वेदाः **कीदृशाः** ? – वेदाः **त्रैगुण्यविषयाः** ।

**भव** ।

**कीदृशो** भव ? – **निस्त्रैगुण्यः** भव ।

निस्त्रैगुण्यः **पुनश्च कीदृशः** भव ? – निस्त्रैगुण्यः **निर्द्वन्द्वः** भव ।

निस्त्रैगुण्यः निर्द्वन्द्वः **पुनश्च कीदृशः** भव ? – निस्त्रैगुण्यः निर्द्वन्द्वः **नित्यसत्त्वस्थः** भव ।

निस्त्रैगुण्यः निर्द्वन्द्वः नित्यसत्त्वस्थः **पुनश्च कीदृशः** भव ?
– निस्त्रैगुण्यः निर्द्वन्द्वः नित्यसत्त्वस्थः **निर्योगक्षेमः** भव ।

निस्त्रैगुण्यः निर्द्वन्द्वः नित्यसत्त्वस्थः निर्योगक्षेमः **पुनश्च कीदृशः** भव ?
– निस्त्रैगुण्यः निर्द्वन्द्वः नित्यसत्त्वस्थः निर्योगक्षेमः **आत्मवान्** भव ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **अर्जुन ।**

**तात्पर्यम् –** हे पार्थ ! वेदेषु त्रिगुणात्मिकायाः प्रकृतेः विषयाः उक्ताः सन्ति । त्वं तादृश्याः गुणत्रयात्मिकायाः वशः मा भूः । सुखदुःखादिरहितो भव । सर्वदा सत्त्वगुणम् अवलम्बस्व । योगक्षेमापेक्षां मा कुरु ।

आत्मध्यानपरायणो भव ।

**माध्वमतम्**–हे अर्जुन ! वेदानां त्रिगुणसम्बन्धिस्वर्गादिप्रतीतितः अर्थः इव भाति । तस्मात् प्रातीतिके अर्थे भ्रान्तिं मा कुरु । सुखात् उत्कर्षं दुःखात् अपकर्षं च मा भज । सदा भगवत्स्मरणशीलः भव । सर्वज्ञः परमात्मा मम स्वामी इति तत्स्मरणं कुरु ।

**रामानुजीयमतम्** – त्रैगुण्यम् = सत्त्वरजस्तमप्रचुरम् । पुरुषाः त्रैगुण्याः ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| त्रैगुण्यविषया वेदा | – त्रैगुण्यविषयाः + वेदाः | विसर्गसन्धिः (लोपः) |
| वेदा निस्त्रैगुण्यः | – वेदाः + निस्त्रैगुण्यः | विसर्गसन्धिः (लोपः) |
| निस्त्रैगुण्यो भव | – निस्त्रैगुण्यः + भव | विसर्गसन्धिः(सकारः) रेफः उकारः,गुणः |
| भवार्जुन | – भव + अर्जुन | सवर्णदीर्घसन्धिः |
| निर्द्वन्द्वो नित्यसत्त्वस्थो | – निर्द्वन्द्वः + नित्यसत्त्वस्थः | विसर्गसन्धिः(सकारः) रेफः उकारः,गुणः |
| नित्यसत्त्वस्थो निर्योगक्षेम | – नित्यसत्त्वस्थः + निर्योगक्षेम | विसर्गसन्धिः(सकारः) रेफः उकारः, गुणः |
| निर्योगक्षेम आत्मवान् | – निर्योगक्षेमः + आत्मवान् | विसर्गसन्धिः (लोपः) |

**(ख) समासः**

| | |
|---|---|
| त्रैगुण्यविषयाः | – त्रैगुण्यं विषयः येषां ते – बहुव्रीहिः । |
| निस्त्रैगुण्यः | – निर्गतं त्रैगुण्यं यस्मात् सः – बहुव्रीहिः । |
| निर्द्वन्द्वः | – निर्गतं द्वन्द्वं यस्मात् सः – बहुव्रीहिः । |
| नित्यसत्त्वस्थः | – नित्यं सत्त्वस्थः – सुप्समासः । |
| निर्योगक्षेमः | – योगश्च क्षेमं च अनयोः समाहारः योगक्षेमम् – द्वन्द्वः । निर्गतं योगक्षेमं यस्मात् सः – बहुव्रीहिः । |

**(ग) कृदन्तः** आत्मवान् – आत्मन् + मतुप्

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥2.46॥**

**पदच्छेदः** – यावान्, अर्थः, उदपाने, सर्वतः, सम्प्लुतोदके ।
तावान्, सर्वेषु, वेदेषु, ब्राह्मणस्य, विजानतः ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| यावान् | – | यावत्–त. पुं. प्र.एक. | अर्थः | – | अ. पुं. प्र. एक. |
| उदपाने | – | अ. पुं. स. एक. | सर्वतः | – | अव्ययम् |
| सम्प्लुतोदके | – | अ. नपुं. स. एक. | तावान् | – | तावत्–त. पुं. प्र.एक. |
| सर्वेषु | – | अ. पुं. सर्व. स.बहु. | वेदेषु | – | अ. पुं. स.बहु. |
| ब्राह्मणस्य | – | अ. पुं. ष. एक. | विजानतः | – | विजानत्–त. पुं. ष.एक. |

**पदार्थः** – यावान् = यत्परिमाणम्, अर्थः = प्रयोजनम्, उदपाने = अल्पजलाशये, सर्वतः = सर्वत्र, सम्प्लुतोदके = जलपूर्णे सरसि, यावान् = यत्परिमाणम्, विजानतः = ज्ञानिनः, ब्राह्मणस्य = पण्डितस्य, सर्वेषु = सकलेषु, वेदेषु = वेदेषु, तावान् = तत्परिमाणम्।

**अन्वयः** – (यथा) यावान् अर्थः उदपाने (तावान्) सर्वतः सम्प्लुतोदके (तथा) यावान् विजानतः ब्राह्मणस्य सर्वेषु वेदेषु (तावान् ब्रह्मणि)।

**आकाङ्क्षा** –

**तावान्**। (अर्थः)

तावान् अर्थः **कुत्र** ? – तावान् अर्थः **सम्प्लुतोदके**।

तावान् अर्थः **कीदृशे** सम्प्लुतोदके ? – तावान् अर्थः **सर्वतः** सम्प्लुतोदके।

**कियान्** अर्थः सर्वतः सम्प्लुतोदके ? – **यावान्** अर्थः उदपाने।

**तावान्**।

तावान् **कस्य** ? – तावान् **ब्राह्मणस्य**।

तावान् **किं कुर्वतः** ब्राह्मणस्य ? – तावान् **विजानतः** ब्राह्मणस्य।

तावान् विजानतः ब्राह्मणस्य **(कुत्र)** ? – तावान् विजानतः ब्राह्मणस्य **(ब्रह्मणि)**।

**कियान्** विजानतः ब्राह्मणस्य तावान् ब्रह्मणि ? – **यावान्** वेदेषु तावान् विजानतः ब्राह्मणस्य ब्रह्मणि।

तावान् **कतिषु वेदेषु** यावान् विजानतः ब्राह्मणस्य ब्रह्मणि ?

– यावान् **सर्वेषु वेदेषु** तावान् विजानतः ब्राह्मणस्य ब्रह्मणि।

यथा यावान् अर्थः उदपाने तावान् सर्वतः सम्प्लुतोदके तथा **कः** ?

– (यथा) यावान् अर्थः उदपाने (तावान्) **सर्वतः** सम्प्लुतोदके (तथा) यावान् सर्वेषु वेदेषु विजानतः ब्राह्मणस्य (तावान् ब्रह्मणि)।

**तात्पर्यम्** – अल्पे जलाशये स्नानपानादिकं प्रयोजनं यत् यत् भवति तत्सर्वं सर्वत्र जलेन परिपूर्णे सरोवरे अवश्यं भवति। तथा वेदेषु प्रतिपादितानां कर्मणाम् आचरणेन यावान् आनन्दः तावान् पण्डितस्य ब्रह्मज्ञानात् अवश्यं भवति। अल्पे यत् सिद्ध्यति तदवश्यं महति सिद्ध्यत्येव इति भावः।

**माध्वमतम्**–यावान् अर्थः (प्रयोजनम्) कूपे भवति तावान् प्रलयोदके भवत्येव। तथा सर्वेषु वेदेषु यत् फलं भवति तत् विजानतोऽपि ज्ञानिनः फले अन्तर्भवति।

**व्याकरणम्** –

**(क) सन्धिः** यावानर्थ उदपाने – यावानर्थः + उदपाने विसर्गसन्धिः (लोपः)

**(ख) समासः** सम्प्लुतोदके – सम्प्लुतम् उदकं यस्मिन् तत्, तस्मिन् – बहुव्रीहिः।

**(ग) कृदन्तः** विजानतः – वि + ज्ञा + शतृ (कर्तरि) तस्य।

**(घ) तद्धितान्तः** सर्वतः – सर्व + तसिल् (सप्तम्यन्तात् स्वार्थे)

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥2.47॥**

**पदच्छेदः –** कर्मणि, एव, अधिकारः, ते, मा, फलेषु, कदाचन ।
मा, कर्मफलहेतुः, भूः, मा, ते, सङ्गः, अस्तु, अकर्मणि ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| कर्मणि | – | कर्मन्– न. नपुं. स. एक. | एव | – | अव्ययम् |
| अधिकारः | – | अ. पुं. प्र. एक. | ते | – | युष्मद्–द. सर्व. ष. एक. |
| मा | – | अव्ययम् | फलेषु | – | अ. पुं. स. बहु. |
| कदाचन | – | अव्ययम् | कर्मफलहेतुः | – | उ. पुं. प्र. एक. |
| भूः (अभूः) | – | भू–पर. कर्तरि लुङ् मपु. एक. | सङ्गः | – | अ. पुं. प्र. एक. |
| अस्तु | – | अस्–पर. कर्तरि लोट्. प्रपु. एक. | अकर्मणि | – | अकर्मन्–न. नपुं. स. एक. |

**पदार्थः –** ते = तव, कर्मणि एव = क्रियायाम् एव, अधिकारः = अधिकारः, फलेषु = प्रयोजनेषु, कदाचन = कदापि, मा = मास्तु, कर्मफलहेतुः = कर्मप्रयोजनस्य कारणम्, मा भूः = मा भव, ते = तव, अकर्मणि = कर्मानाचरणे, सङ्गः = अभिलाषः, मा अस्तु = मा भवतु ।

**अन्वयः –** कर्मणि एव ते अधिकारः । फलेषु कदाचन मा (भूत्) । कर्मफलहेतुः मा भूः । अकर्मणि ते सङ्गः मा अस्तु ।

**आकाङ्क्षा –**

**अधिकारः ।**

**कुत्र** अधिकारः ? – **कर्मणि** एव अधिकारः ।

कर्मणि एव **कस्य** अधिकारः ? – कर्मणि एव **ते** अधिकारः ।

कर्मणि एव ते अधिकारः । **केषु** मा (भूत्) ? – कर्मणि एव ते अधिकारः । **फलेषु** मा (भूत्) ।

कर्मणि एव ते अधिकारः । फलेषु **कदा** मा भूत् ? – कर्मणि एव ते अधिकारः । फलेषु **कदाचन** मा भूत् ।

**मा अस्तु ।**

**कः** मा अस्तु ? – **सङ्गः** मा अस्तु ।

**कस्मिन्** सङ्गः मा अस्तु ? – **अकर्मणि** सङ्गः मा अस्तु ।

अकर्मणि **कस्य** सङ्गः मा अस्तु ? – अकर्मणि **ते** सङ्गः मा अस्तु ।

अकर्मणि ते सङ्गः मा अस्तु, पुनश्च **कीदृशः** मा भूः ? – अकर्मणि ते सङ्गः मा अस्तु **कर्मफलहेतुः** मा भूः ।

**तात्पर्यम् –** तव कर्माचरणे एव अधिकारः । फलविषये तव अधिकारः नास्ति । त्वं कर्मणः फलस्य अपेक्षां मा कुरु । फलापेक्षया कर्म कुर्वन् तत्फले आत्मानं हेतुं मा कुरु । कर्मणः अनाचरणेऽपि तव अभिलाषः मा भवतु ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | कर्मण्येवाधिकारः | – | कर्मणि + एव | यण्सन्धिः |
| | | | एव + अधिकारः | सवर्णदीर्घसन्धिः |
| | अधिकारस्ते | – | अधिकारः + ते | विसर्गसन्धिः (सकारः) |
| | कर्मफलहेतुर्भूर्मा | – | कर्मफलहेतुः + भूः | विसर्गसन्धिः (रेफः) |
| | | | कर्मफलहेतुर्भूः + मा | विसर्गसन्धिः (रेफः) |
| | सङ्गोऽस्तु | – | सङ्गः + अस्तु | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| | अस्त्वकर्मणि | – | अस्तु + अकर्मणि | यण्सन्धिः |
| **(ख) समासः** | कर्मफलहेतुः | – | कर्मणः फलम् कर्मफलम् – षष्ठीतत्पुरुषः । | |
| | | | कर्मफलस्य हेतुः – षष्ठीतत्पुरुषः । | |
| | अकर्मणि | – | न कर्मणि – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | अधिकारः | – | अधि + कृञ् + अण् (भावे) | |

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥2.48॥**

**पदच्छेदः –** योगस्थः, कुरु, कर्माणि, सङ्गम्, त्यक्त्वा, धनञ्जय ।
सिद्ध्यसिद्ध्योः, समः, भूत्वा, समत्वम्, योगः, उच्यते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| योगस्थः | – | अ.पुं.प्र.एक. | कुरु | – | कृञ्–पर.कर्तरि लोट्. मपु.एक. |
| कर्माणि | – | कर्मन्–न.नपुं.द्वि.बहु. | सङ्गम् | – | अ.पुं.द्वि.एक. |
| त्यक्त्वा | – | क्त्वान्तम् अव्ययम् | धनञ्जय | – | अ.पुं.सम्बो.एक. |
| सिद्ध्यसिद्ध्योः | – | इ.स्त्री.स.द्विव. | समः | – | अ.पुं.प्र.एक. |
| भूत्वा | – | क्त्वान्तम् अव्ययम् | समत्वम् | – | अ.नपुं.प्र.एक. |
| योगः | – | अ.पुं.प्र.एक. | उच्यते | – | वच्–पर. कर्मणि लट्.प्रपु.एक. |

**पदार्थः –** धनञ्जय = अर्जुन ! सङ्गम् = अत्यासक्तिम्, त्यक्त्वा = परित्यज्य, सिद्ध्यसिद्ध्योः = लाभालाभयोः, समः = समानः, भूत्वा = स्थित्वा, योगस्थः = एकाग्रमनस्कः, कर्माणि = क्रियाः, कुरु = आचर, समत्वम् = समानता, योगः = योगः, उच्यते = कथ्यते ।

**अन्वयः –** धनञ्जय ! अत्यासक्तिं त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु । समत्वं योगः उच्यते ।

**आकाङ्क्षा –**

कुरु ।

**कानि** कुरु ? – **कर्माणि** कुरु ।

**कीदृशः** भूत्वा कर्माणि कुरु ? – **योगस्थः** भूत्वा कर्माणि कुरु ।
**पुनश्च कीदृशः** भूत्वा योगस्थः कर्माणि कुरु ? – **समः** भूत्वा योगस्थः कर्माणि कुरु ।
**कयोः** समः भूत्वा योगस्थः कर्माणि कुरु ? – **सिद्ध्यसिद्ध्योः** समः भूत्वा योगस्थः कर्माणि कुरु ।
**किं कृत्वा** सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु ?
– **त्यक्त्वा** सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु ।
**कं** त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु ?
– **सङ्गं** त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु ।
सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु । **कुतः ?**
– सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु । **समत्वम् उच्यते ।**
सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु । समत्वं **कः** उच्यते ?
– सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा योगस्थः कर्माणि कुरु । समत्वं **योगः** उच्यते ।
अस्मिन् श्लोके सम्बोधनपदं किम् ? – **धनञ्जय** ।

**तात्पर्यम् –** हे अर्जुन ! अत्यासक्तिं परित्यज्य लाभालाभयोः विषये समभावनया चिन्तयन् एकाग्रमनस्कः भूत्वा कर्माणि आचर । लाभालाभयोः विषये समानतया व्यवहारः योगः इति उच्यते ।

**रामानुजीयमतम् –** योगः = सिद्ध्यसिद्ध्योः समत्वम् ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | समो भूत्वा | – समः + भूत्वा | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | योग उच्यते | – योगः + उच्यते | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | सिद्ध्यसिद्ध्योः | – सिद्धिश्च असिद्धिश्च, तयोः – द्वन्द्वः । | |
| **(ग) कृदन्तः** | त्यक्त्वा | – त्यज् + क्त्वा । | |
| | भूत्वा | – दृश्यताम् – 2.20 | |
| **(घ) तद्धितान्तः** | समत्वम् | – सम + त्व (भावे) । समस्य भावः इत्यर्थः । | |

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥2.49॥**

**पदच्छेदः –** दूरेण, हि, अवरम्, कर्म, बुद्धियोगात्, धनञ्जय ।
बुद्धौ, शरणम्, अन्विच्छ, कृपणाः, फलहेतवः ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| दूरेण | – | अ.नपुं.तृ.एक. | अवरम् | – | अ.नपुं.प्र.एक. |
| कर्म | – | कर्मन्–न.नपुं.प्र.एक. | बुद्धियोगात् | – | अ.पुं.पं.एक. |
| धनञ्जय | – | अ.पुं.सम्बो.एक. | बुद्धौ | – | इ.स्त्री.स.एक. |

| | | | | | |
|---|---|---|---|---|---|
| शरणम् | - | अ.नपुं.द्वि.एक. | अन्विच्छ | - | अनु+इषु-पर.कर्तरि लोट्.मपु.एक. |
| कृपणाः | - | अ.पुं.प्र.बहु. | फलहेतवः | - | उ.पुं.प्र.बहु. |

**पदार्थः** - धनञ्जय = पार्थ ! बुद्धियोगात् हि = ज्ञानयोगात्, कर्म = क्रिया, दूरेण = अत्यन्तम्, अवरं = नीचम्, बुद्धौ = ज्ञाने, शरणम् = आश्रयम्, अन्विच्छ = भजस्व, फलहेतवः = फलकारणभूताः, कृपणाः = दीनाः ।

**अन्वयः** - धनञ्जय ! बुद्धियोगात् हि कर्म दूरेण अवरम् । बुद्धौ शरणम् अन्विच्छ । फलहेतवः कृपणाः ।

**आकाङ्क्षा** -

**फलहेतवः** ।

फलहेतवः **कीदृशाः** ? - फलहेतवः **कृपणाः** ।

फलहेतवः कृपणाः । अतः **किं कुरु** ? - फलहेतवः कृपणाः । अतः **अन्विच्छ** ।

फलहेतवः कृपणाः । **किम्** अन्विच्छ ? - **शरणम्** अन्विच्छ ।

**कस्यां** शरणम् अन्विच्छ ? - **बुद्धौ** शरणम् अन्विच्छ ।

बुद्धौ शरणम् अन्विच्छ । **कुतः** ? - बुद्धौ शरणम् अन्विच्छ । (यतः) **कर्म अवरम्** ।

बुद्धौ शरणम् अन्विच्छ । **कस्मात्** कर्म अवरम् ? - बुद्धौ शरणम् अन्विच्छ । **बुद्धियोगात्** कर्म अवरम् ।

बुद्धौ शरणम् अन्विच्छ । बुद्धियोगात् कर्म **कथम्** अवरम् ?

- बुद्धौ शरणम् अन्विच्छ । यतः बुद्धियोगात् कर्म **दूरेण** अवरम् ।

श्लोके सम्बोधनपदं किम् ? - **कुरुनन्दन** ।

**तात्पर्यम्** - हे पार्थ ! ज्ञानयोगापेक्षया सकामं कर्म अत्यन्तं तुच्छम् । अतः त्वं ज्ञानयोगमेव आश्रयस्व । तेन परमार्थज्ञानं शरणं गतः भवसि । अवरं कर्म आचरन्तः तु फलतृष्णायुक्ताः भवन्ति इति ते दीनाः ।

**व्याकरणम्** -

**(क) सन्धिः** ह्यवरम् - हि + अवरम् यणसन्धिः

**(ख) समासः** बुद्धियोगात् - बुद्धेः योगः, तस्मात् - षष्ठीतत्पुरुषः ।

फलहेतवः - फलस्य हेतवः - षष्ठीतत्पुरुषः ।

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥2.50॥**

**पदच्छेदः** - बुद्धियुक्तः, जहाति, इह, उभे, सुकृतदुष्कृते ।
तस्मात्, योगाय, युज्यस्व, योगः, कर्मसु, कौशलम् ॥

**पदपरिचयः** -

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| बुद्धियुक्तः | - | अ.पुं.प्र.एक. | जहाति | - | ओ हाक्-पर.कर्तरि लट्.प्रपु.एक. |
| इह | - | अव्ययम् | उभे | - | उभ-अ.सर्व.नपुं.द्वि.द्विव. |

| | | | | | |
|---|---|---|---|---|---|
| सुकृतदुष्कृते | - अ.नपुं.द्वि.द्विव. | तस्मात् | - | तद्–द. सर्व.नपुं.पं.एक. |
| योगाय | - अ.पुं.च.एक. | युज्यस्व | - | युजिर्–आत्म. कर्तरि लोट्.मपु.एक. |
| योगः | - अ.पुं.प्र.एक. | कर्मसु | - | न.नपुं.स.बहु. |
| कौशलम् | - अ.नपुं.प्र.एक. | | | |

**पदार्थः** – बुद्धियुक्तः = ज्ञानसम्पन्नः, सुकृतदुष्कृते = सदसत्कर्मणी, उभे = द्वे, इह = अत्र, जहाति = परित्यजति, तस्मात् = तदर्थम्, योगाय = कर्मयोगाय, युज्यस्व = सन्नद्धो भव, कर्मसु = क्रियासु, कौशलम् = प्रावीण्यम्, योगः = योगः इत्युच्यते ।

**अन्वयः** – बुद्धियुक्तः सुकृतदुष्कृते उभे इह जहाति । तस्मात् योगाय युज्यस्व । कर्मसु कौशलं योगः उच्यते ।

**आकाङ्क्षा** –

**कः** जहाति । – **बुद्धियुक्तः** जहाति ।

बुद्धियुक्तः **के** जहाति ? – बुद्धियुक्तः **सुकृतदुष्कृते** जहाति ।

बुद्धियुक्तः **के** सुकृतदुष्कृते जहाति ? – बुद्धियुक्तः **उभे** सुकृतदुष्कृते जहाति ।

बुद्धियुक्तः उभे सुकृतदुष्कृते **कुत्र** जहाति ? – बुद्धियुक्तः उभे सुकृतदुष्कृते **इह** जहाति ।

बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् **किम्** ?

– बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् **युज्यस्व** ।

बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् **कस्मै** युज्यस्व ?

– बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् **योगाय** युज्यस्व ।

बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् योगाय युज्यस्व । **योगः कः** ?

– बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् योगाय युज्यस्व । **योगः कौशलम्** ।

बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् योगाय युज्यस्व । योगः **केषु** कौशलम् ?

– बुद्धियुक्तः उभे सुकृतदुष्कृते इह जहाति, तस्मात् योगाय युज्यस्व । योगः **कर्मसु** कौशलम् ।

**तात्पर्यम्** – हे पार्थ ! ज्ञानमार्गं समाश्रितः जनः सुकृतं दुष्कृतं चेति द्वयमपि परित्यजति । त्वमपि तद् परित्यज । फलम् अनपेक्षमाणः कर्मसु सज्जो भव । कर्मसु कौशलमेव योगः इति उच्यते ।

**माध्वमतम्**–ज्ञानोपायवान् वैषयिकसुखभोगकारणे सुकृतदुष्कृते एव जहाति । स्वरूपसुखोपयोगि उपासनादिजनितं पुण्यं न जहाति । तस्मात् एतादृशसुखसाधने ज्ञाने प्रयत्नं कुरु । तदेव कौशलमित्युच्यते ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | बुद्धियुक्तो जहाति | – बुद्धियुक्तः + जहाति | विसर्गसन्धिः (सकारः) रेफः उकारः, गुणः |
| | जहातीह | – जहाति + इह | सवर्णदीर्घसन्धिः |
| | तस्माद्योगाय | – तस्मात् + योगाय | जश्त्वसन्धिः |
| **(ख) समासः** | बुद्धियुक्तः | – बुद्ध्या युक्तः – तृतीयातत्पुरुषः । | |
| | सुकृतदुष्कृते | – सुकृतं च दुष्कृतं च – द्वन्द्वः । | |
| **(ग) कृदन्तः** | युक्तः | – युजिर् + क्त (कर्तरि) | |

(घ) **तद्धितान्तः** कौशलम् - कुशल + अण् (भावे)

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥2.51॥**

**पदच्छेदः –** कर्मजम्, बुद्धियुक्ताः, हि, फलम्, त्यक्त्वा, मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः, पदम्, गच्छन्ति, अनामयम् ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| कर्मजम् | – | अ.नपुं.द्वि.एक. | बुद्धियुक्ताः | – | अ.पुं.प्र.बहु. |
| फलम् | – | अ.नपुं.द्वि.एक. | मनीषिणः | – | मनीषिन्–न.पुं.प्र.बहु. |
| जन्मबन्धविनिर्मुक्ताः | – | अ.पुं.प्र.बहु. | पदम् | – | अ.नपुं.द्वि.एक. |
| गच्छन्ति | – | गम्लृ–पर.कर्तरि लट्.प्रपु.बहु. | अनामयम् | – | अ.नपुं.द्वि.एक. |

**पदार्थः –** हि = यस्मात्, बुद्धियुक्ताः = ज्ञानिनः, मनीषिणः = पण्डिताः, कर्मजम् = कर्मसम्भवम्, फलम् = प्रयोजनम्, त्यक्त्वा = विसृज्य, जन्मबन्धविनिर्मुक्ताः = जननरूपबन्धनरहिताः, अनामयम् = व्याधिशून्यम्, पदम् = स्थानम्, गच्छन्ति = प्राप्नुवन्ति ।

**अन्वयः –** बुद्धियुक्ताः हि मनीषिणः कर्मजं फलं त्यक्त्वा जन्मबन्धविनिर्मुक्ताः अनामयं पदं गच्छन्ति ।

**आकाङ्क्षा –**

**गच्छन्ति** ।

**किं** गच्छन्ति ? – **पदं** गच्छन्ति ।

**कीदृशं** पदं गच्छन्ति ? – **अनामयं** पदं गच्छन्ति ।

**के** अनामयं पदं गच्छन्ति ? – **मनीषिणः** अनामयं पदं गच्छन्ति ।

**कीदृशाः** मनीषिणः अनामयं पदं गच्छन्ति ? – **बुद्धियुक्ताः हि** मनीषिणः अनामयं पदं गच्छन्ति ।

बुद्धियुक्ताः हि मनीषिणः **किं कृत्वा** अनामयं पदं गच्छन्ति ?
– बुद्धियुक्ताः हि मनीषिणः **त्यक्त्वा** अनामयं पदं गच्छन्ति ।

बुद्धियुक्ताः हि मनीषिणः **किं** त्यक्त्वा अनामयं पदं गच्छन्ति ?
– बुद्धियुक्ताः हि मनीषिणः **फलं** त्यक्त्वा अनामयं पदं गच्छन्ति ।

बुद्धियुक्ताः हि मनीषिणः **कीदृशं** फलं त्यक्त्वा अनामयं पदं गच्छन्ति ?
– बुद्धियुक्ताः हि मनीषिणः **कर्मजं** फलं त्यक्त्वा अनामयं पदं गच्छन्ति ।

बुद्धियुक्ताः हि मनीषिणः कर्मजं फलं त्यक्त्वा **कथंभूताः** अनामयं पदं गच्छन्ति ?
– बुद्धियुक्ताः हि मनीषिणः कर्मजं फलं त्यक्त्वा **जन्मबन्धविनिर्मुक्ताः** अनामयं पदं गच्छन्ति ।

**तात्पर्यम् –** समबुद्धियुक्ताः ज्ञानिनः कर्मणः जायमानं फलं परित्यजन्ति । तेन जननरूपबन्धनात् विमुक्ताः सन्तः अन्ते अमृतमयं परमपदं प्राप्नुवन्ति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | बुद्धियुक्ता हि | – बुद्धियुक्ताः + हि | विसर्गसन्धिः (लोपः) |
| | गच्छन्त्यनामयम् | – गच्छन्ति + अनामयम् | यण्सन्धिः |
| **(ख) समासः** | जन्मबन्धविनिर्मुक्ताः | – जन्म एव बन्धः जन्मबन्धः – कर्मधारयः । | |
| | | जन्मबन्धेन विनिर्मुक्ताः – तृतीयातत्पुरुषः । | |
| | अनामयम् | – न विद्यते आमयः यस्मिन् तत् – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | त्यक्त्वा | – त्यज् + क्त्वा । | |
| **(घ) तद्धितान्तः** | मनीषिणः | – मनीषा + इनि (मतुबर्थे) । मनीषा एषाम् एषु वा अस्ति । | |

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥2.52॥**

**पदच्छेदः –** यदा, ते, मोहकलिलम्, बुद्धिः, व्यतितरिष्यति ।
तदा, गन्तासि, निर्वेदम्, श्रोतव्यस्य, श्रुतस्य, च ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| यदा | – अव्ययम् | ते | – युष्मद्–द. सर्व.ष.एक. |
| मोहकलिलम् | – अ.नपुं.द्वि.एक. | बुद्धिः | – इ.स्त्री.प्र.एक. |
| व्यतितरिष्यति | – वि.अति.तॄ–पर.कर्तरि लृट्.प्रपु.एक. | तदा | – अव्ययम् |
| गन्तासि | – गम्लृ–पर. कर्तरि लुट्.मपु.एक. | निर्वेदम् | – अ.पुं.द्वि.एक. |
| श्रोतव्यस्य | – अ.नपुं.ष.एक. | श्रुतस्य | – अ.नपुं.ष.एक. |

**पदार्थः –** यदा = यस्मिन् समये, ते = तव, बुद्धिः = मतिः, मोहकलिलम् = अविवेककालुष्यम्, व्यतितरिष्यति = अतिक्राम्यति, तदा = तस्मिन् समये, श्रोतव्यस्य = श्रवणीयस्य, श्रुतस्य च = श्रुतस्य च, निर्वेदम् = वैराग्यम्, गन्तासि = गमिष्यसि ।

**अन्वयः –** यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा श्रोतव्यस्य श्रुतस्य च निर्वेदं गन्तासि ।

**आकाङ्क्षा –**

**व्यतितरिष्यति** ।

**का** व्यतितरिष्यति ? – **बुद्धिः** व्यतितरिष्यति ।

बुद्धिः **किं** व्यतितरिष्यति ? – बुद्धिः **मोहकलिलं** व्यतितरिष्यति ।

**कस्य** बुद्धिः मोहकलिलं व्यतितरिष्यति ? – **ते** बुद्धिः मोहकलिलं व्यतितरिष्यति ।

**यदा** ते बुद्धिः मोहकलिलं व्यतितरिष्यति **तदा किं भवति** ?

– यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा **गन्तासि ।**

यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा **कं** गन्तासि ?

– यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा **निर्वेदं** गन्तासि ।

यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा **कस्य कस्य च** निर्वेदं गन्तासि ?

– यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा **श्रोतव्यस्य श्रुतस्य च** निर्वेदं गन्तासि ।

**तात्पर्यम्** – तव बुद्धिः इदानीम् अविवेकरूपेण कालुष्येण युक्ता अस्ति । तेन तव आत्मानात्मविवेकः नष्टः अस्ति । यदा तव बुद्धिः तस्मात् कालुष्यात् मुक्ता भविष्यति तदा अद्यावधि श्रुतेषु इतःपरं श्रवणीयेषु च कर्मफलेषु अवश्यं वैराग्यं प्राप्स्यसि ।

**माध्वमतम्**–यदा ते बुद्धिः मोहं जहाति तदा श्रुतस्य श्रोतव्यस्य च नितरां लाभः (निर्वेदः) तव भविष्यति ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | बुद्धिर्व्यतितरिष्यति | – बुद्धिः + व्यतितरिष्यति विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | मोहकलिलम् | – मोहः एव कलिलम् – कर्मधारयः । |
| **(ग) कृदन्तः** | श्रोतव्यस्य | – श्रु + तव्यत् तस्य (कर्मणि) |
| | श्रुतस्य | – श्रु + क्त तस्य (कर्मणि) |

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥2.53॥**

**पदच्छेदः** – श्रुतिविप्रतिपन्ना, ते, यदा, स्थास्यति, निश्चला ॥
समाधौ, अचला, बुद्धिः, तदा, योगम्, अवाप्स्यसि ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| श्रुतिविप्रतिपन्ना | – आ.स्त्री.प्र.एक. | यदा | – अव्ययम् |
| स्थास्यति | – ष्ठा–पर. कर्तरि लृट्.प्रपु.एक. | निश्चला | – आ.स्त्री.प्र.एक. |
| समाधौ | – इ.पुं.स.एक. | अचला | – आ.स्त्री.प्र.एक. |
| बुद्धिः | – इ.स्त्री.प्र.एक. | तदा | – अव्ययम् |
| योगम् | – अ.पुं.द्वि.एक. | अवाप्स्यसि | – अव+आप्लृ–पर.कर्तरि लृट्.प्रपु.एक. |

**पदार्थः** – यदा = यदा, ते = तव, श्रुतिविप्रतिपन्ना = वेदे संशयम् आपन्ना, बुद्धिः = धीः, समाधौ = चित्तवृत्ति–निरोधे, निश्चला = स्थिरा, अचला = कम्परहिता, स्थास्यति = भविष्यति, तदा = तस्मिन् काले, योगम् = योगनिष्ठाम्, अवाप्स्यसि = लप्स्यसे ।

**अन्वयः** – यदा ते श्रुतिविप्रतिपन्ना बुद्धिः निश्चला समाधौ च अचला स्थास्यति तदा योगम् अवाप्स्यसि ।

**आकाङ्क्षा** –

**स्थास्यति** ।

**का** स्थास्यति ? – **बुद्धिः** स्थास्यति ।

**कीदृशी** बुद्धिः स्थास्यति ? – **श्रुतिविप्रतिपन्ना** बुद्धिः स्थास्यति ।

श्रुतिविप्रतिपन्ना बुद्धिः **कीदृशी** स्थास्यति ? – श्रुतिविप्रतिपन्ना बुद्धिः **निश्चला** स्थास्यति ।

श्रुतिविप्रतिपन्ना बुद्धिः निश्चला **पुनश्च कीदृशी** स्थास्यति ?

– श्रुतिविप्रतिपन्ना बुद्धिः निश्चला **अचला** स्थास्यति ।

श्रुतिविप्रतिपन्ना बुद्धिः निश्चला **कुत्र** अचला स्थास्यति ?

– श्रुतिविप्रतिपन्ना बुद्धिः निश्चला **समाधौ** च अचला स्थास्यति ।

श्रुतिविप्रतिपन्ना **कस्य** बुद्धिः निश्चला समाधौ च अचला स्थास्यति ?

– श्रुतिविप्रतिपन्ना **ते** बुद्धिः निश्चला समाधौ च अचला स्थास्यति ।

**यदा** श्रुतिविप्रतिपन्ना ते बुद्धिः निश्चला समाधौ च अचला स्थास्यति **तदा किं भवति** ?

– **यदा** श्रुतिविप्रतिपन्ना ते बुद्धिः निश्चला समाधौ च अचला स्थास्यति **तदा अवाप्स्यसि** ।

यदा श्रुतिविप्रतिपन्ना ते बुद्धिः निश्चला समाधौ च अचला स्थास्यति तदा **कम्** अवाप्स्यसि ?

– यदा श्रुतिविप्रतिपन्ना ते बुद्धिः निश्चला समाधौ च अचला स्थास्यति तदा **योगम्** अवाप्स्यसि ।

**तात्पर्यम् –** अनेकविधानां मतानां श्रवणेन तव बुद्धिः विचलिता स्यात् । सा यदा स्थिरीभूता भविष्यति, कम्पवर्जिता च भविष्यति तदा समत्वरूपं योगम् अवाप्स्यसि ।

**माध्वमतम् –** पूर्वं श्रुतिभिः विरुद्धा सती बुद्धिः यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन निश्चला भवति तदा उपायसिद्धः भविष्यसि ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | समाधावचला | – समाधौ + अचला | यान्तवान्तादेशसन्धिः |
| | बुद्धिस्तदा | – बुद्धिः + तदा | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | श्रुतिविप्रतिपन्ना | – श्रुतौ विप्रतिपन्ना – सप्तमीतत्पुरुषः । | |
| | अचला | – न चला – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | विप्रतिपन्ना | – वि + प्रति + पद् + क्त (कर्तरि) | |

**अर्जुन उवाच –** **स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥2.54॥**

**पदच्छेदः –** अर्जुनः उवाच – स्थितप्रज्ञस्य, का, भाषा, समाधिस्थस्य, केशव ।
स्थितधीः, किम्, प्रभाषेत, किम्, आसीत, व्रजेत, किम् ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| स्थितप्रज्ञस्य | – अ.पुं.ष.एक. | का | – किम्–म.सर्व.स्त्री.प्र.एक. |
| भाषा | – आ.स्त्री.प्र.एक. | समाधिस्थस्य | – अ.पुं.ष.एक. |
| केशव | – अ.पुं.सम्बो.एक. | स्थितधीः | – ई.पुं.प्र.एक. |
| किम् | – किम्–म.सर्व.नपुं.प्र.एक. | प्रभाषेत | – प्र+भाष्–आत्म.वि.लिङ्.प्रपु.एक. |

| | | | | | |
|---|---|---|---|---|---|
| किम् | - | किम्-म.सर्व.नपुं.प्र.एक. | आसीत | - | आस्-आत्म.वि.लिङ्.प्रपु.एक. |
| व्रजेत | - | व्रज्-आत्म.वि.लिङ्.प्रपु.एक. | | | |

**पदार्थः –** केशव = कृष्ण ! समाधिस्थस्य = योगनिष्ठस्य, स्थितप्रज्ञस्य = दृढबुद्धेः, का भाषा = किं लक्षणम्, स्थितधीः = दृढबुद्धिः, किम् = किम्, प्रभाषेत = वदेत्, किम् = कथम्, आसीत = उपविशेत्, किम् = कुत्र, व्रजेत = गच्छेत् ।

**अन्वयः –** केशव ! समाधिस्थस्य स्थितप्रज्ञस्य का भाषा ? स्थितधीः किं प्रभाषेत ? किम् आसीत ? किं व्रजेत ?

**आकाङ्क्षा –**

**भाषा** ।

**कस्य** भाषा ? – **स्थितप्रज्ञस्य** भाषा ।

स्थितप्रज्ञस्य **कीदृशस्य** भाषा । – स्थितप्रज्ञस्य **समाधिस्थस्य** भाषा ।

स्थितप्रज्ञस्य समाधिस्थस्य भाषा **सा** ? – स्थितप्रज्ञस्य समाधिस्थस्य भाषा **का** ?

(किञ्च सः) **स्थितधीः** (बहिर्मुखः चेत्) **तत् भाषेत, तत् आसीत, तत् व्रजेत** ।

किञ्च सः **स्थितधीः** बहिर्मुखः चेत् **किं भाषेत, किम् आसीत, किं व्रजेत** ?

श्लोके सम्बोधनपदं किम् ? – **केशव** ।

**तात्पर्यम् –** केशव ! यः एकाग्रतावान् भवति तस्य व्यवहारः कीदृशः भवति ? सोऽयं स्थितप्रज्ञः यदा बहिर्मुखः भवति तदा कथं भाषणं करोति ? कथं सः उपविशति ? कथं गच्छति ? स्थितप्रज्ञस्य लक्षणानि कानि ?

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) समासः** | स्थितप्रज्ञस्य | - | स्थिता प्रज्ञा यस्य सः, तस्य – बहुव्रीहिः । |
| | समाधिस्थस्य | - | समाधौ स्थितः, तस्य –सप्तमीतत्पुरुषः । |
| | स्थितधीः | - | स्थिता धीः यस्य सः – बहुव्रीहिः । |

**श्रीभगवान् उवाच –** **प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥2.55॥**

**पदच्छेदः –** प्रजहाति, यदा, कामान्, सर्वान्, पार्थ, मनोगतान् ।
आत्मनि, एव, आत्मना, तुष्टः, स्थितप्रज्ञः, तदा, उच्यते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| प्रजहाति | - | प्र+ओ हाक्-पर. कर्तरि लट्.प्रपु.एक. | यदा | - | अव्ययम् |
| कामान् | - | अ.पुं.द्वि.बहु. | सर्वान् | - | अ.सर्व.पुं.द्वि.बहु. |
| पार्थ | - | अ.पुं.सम्बो.एक. | मनोगतान् | - | अ.पुं.द्वि.बहु. |
| आत्मनि | - | आत्मन्-न.पुं.स.एक. | आत्मना | - | आत्मन्-न.पुं.तृ.एक. |
| तुष्टः | - | अ.पुं.प्र.एक. | स्थितप्रज्ञः | - | अ.पुं.प्र.एक. |
| तदा | - | अव्ययम् | उच्यते | - | वच्-पर.कर्मणि लट्.प्रपु.एक. |

**पदार्थः** – पार्थ = धनञ्जय ! यदा = यस्मिन् समये, मनोगतान् = चित्तसन्निहितान्, सर्वान् = सकलान्, कामान् = अभिलाषान्, प्रजहाति = परित्यजति, तदा = तस्मिन् समये, आत्मना एव = स्वेन एव, आत्मनि = स्वस्मिन्, तुष्टः = हृष्टः, स्थितप्रज्ञः = स्थितप्रज्ञः, उच्यते = कथ्यते ।

**अन्वयः** – पार्थ ! यदा सर्वान् कामान् मनोगतान् प्रजहाति आत्मना एव आत्मनि तुष्टः तदा स्थितप्रज्ञः उच्यते ।

**आकाङ्क्षा** –

**प्रजहाति** ।

**कान्** प्रजहाति ? – **कामान्** प्रजहाति ।

**कति** कामान् प्रजहाति ? – **सर्वान्** कामान् प्रजहाति ।

सर्वान् कामान् **कीदृशान्** प्रजहाति ? – सर्वान् कामान् **मनोगतान्** प्रजहाति ।

सर्वान् कामान् मनोगतान् **कीदृशः** प्रजहाति ? – सर्वान् कामान् मनोगतान् **तुष्टः** प्रजहाति ?

सर्वान् कामान् मनोगतान् **केन** तुष्टः प्रजहाति ? – सर्वान् कामान् मनोगतान् **आत्मना** तुष्टः प्रजहाति ।

सर्वान् कामान् मनोगतान् आत्मना **कुत्र** तुष्टः प्रजहाति ?

– सर्वान् कामान् मनोगतान् आत्मना **आत्मनि** तुष्टः प्रजहाति ।

**यदा** सर्वान् कामान् मनोगतान् आत्मना आत्मनि तुष्टः प्रजहाति **तदा कीदृशः उच्यते** ?

– **यदा** सर्वान् कामान् मनोगतान् आत्मना आत्मनि तुष्टः प्रजहाति **तदा स्थितप्रज्ञः उच्यते** ।

श्लोके सम्बोधनपदं किम् ? – **केशव** ।

**तात्पर्यम्** – पार्थ ! यदा मनसि प्रविष्टान् सर्वान् अपि इच्छाभेदान् परित्यजति, यदा च निरपेक्षः सन् परमार्थ-दर्शनात् अन्यस्मिन् सर्वस्मिन् अपि विषये अनासक्तः भवति तदा आत्मना आत्मनि एव तुष्टःभवति। सः एषः स्थितप्रज्ञः इति उच्यते ।

**माध्वमतम्**–मनोगतान् अरिषड्वर्गान् यदा प्रजहाति, यदा च परमात्मनः प्रसादेन आत्मानं सन्तुष्टं मन्यते तदा सः स्थितप्रज्ञः इत्युच्यते ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | आत्मन्येव | – आत्मनि + एव | यणसन्धिः |
| | आत्मन्येवात्मना | – आत्मन्येव + आत्मना | सवर्णदीर्घसन्धिः |
| | स्थितप्रज्ञस्तदा | – स्थितप्रज्ञः + तदा | विसर्गसन्धिः (सकारः) |
| | तदोच्यते | – तदा + उच्यते | गुणसन्धिः |
| **(ख) समासः** | मनोगतान् | – मनः गताः, तान् – द्वितीयातत्पुरुषः । | |
| | स्थितप्रज्ञः | – दृश्यताम् – 2.54 | |
| **(ग) कृदन्तः** | गतान् | – दृश्यताम् – 2.24 | |
| | तुष्टः | – तुष् + क्त (कर्तरि) | |

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥2.56॥**

**पदच्छेदः –** दुःखेषु, अनुद्विग्नमनाः, सुखेषु, विगतस्पृहः ।
वीतरागभयक्रोधः, स्थितधीः, मुनिः, उच्यते ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| दुःखेषु | – | अ.नपुं.स.बहु. | अनुद्विग्नमनाः | – | अनुद्विग्नमनस्–स.पुं.प्र.एक. |
| सुखेषु | – | अ.नपुं.स.बहु. | विगतस्पृहः | – | अ.पुं.प्र.एक. |
| वीतरागभयक्रोधः | – | अ.पुं.प्र.एक. | स्थितधीः | – | ई.पुं.प्र.एक. |
| मुनिः | – | इ.पुं.प्र.एक. | उच्यते | – | वच्–पर.कर्मणि लट्.प्रपु.एक. |

**पदार्थः –** दुःखेषु = आपत्सु, अनुद्विग्नमनाः = उद्वेगशून्यचित्तः, सुखेषु = सम्पत्सु, विगतस्पृहः = नष्टाभिलाषः, वीतरागभयक्रोधः = रागद्वेषभयरहितः, मुनिः = मौनी, स्थितधीः = दृढबुद्धिः, उच्यते = कथ्यते ।

**अन्वयः –** दुःखेषु अनुद्विग्नमनाः सुखेषु विगतस्पृहः वीतरागभयक्रोधः मुनिः स्थितधीः उच्यते ।

**आकाङ्क्षा –**

**उच्यते** ।

**कः** उच्यते ? – **स्थितधीः** उच्यते ।

**कीदृशः** स्थितधीः उच्यते ? – **मुनिः** स्थितधीः उच्यते ।

**कीदृशः** मुनिः स्थितधीः उच्यते ? – **अनुद्विग्नमनाः** मुनिः स्थितधीः उच्यते ।

**केषु** अनुद्विग्नमनाः मुनिः स्थितधीः उच्यते ? – **दुःखेषु** अनुद्विग्नमनाः मुनिः स्थितधीः उच्यते ।

दुःखेषु अनुद्विग्नमनाः **पुनश्च कीदृशः** मुनिः स्थितधीः उच्यते ?

– दुःखेषु अनुद्विग्नमनाः **विगतस्पृहः** मुनिः स्थितधीः उच्यते ।

दुःखेषु अनुद्विग्नमनाः **केषु** विगतस्पृहः मुनिः स्थितधीः उच्यते ?

– दुःखेषु अनुद्विग्नमनाः **सुखेषु** विगतस्पृहः मुनिः स्थितधीः उच्यते ।

दुःखेषु अनुद्विग्नमनाः सुखेषु विगतस्पृहः **पुनश्च कीदृशः** मुनिः स्थितधीः उच्यते ?

– दुःखेषु अनुद्विग्नमनाः सुखेषु विगतस्पृहः **वीतरागभयक्रोधः** मुनिः स्थितधीः उच्यते ।

**तात्पर्यम् –** स्थितप्रज्ञस्य मनः दुःखेषु अनुद्विग्नं भवति । सः सुखेषु स्पृहावान् न भवति । रागात् भयात् क्रोधात् च सः अतीतः भवति ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | |
|---|---|---|
| दुःखेष्वनुद्विग्नमनाः | – दुःखेषु + अनुद्विग्नमनाः | यणसन्धिः |
| स्थितधीर्मुनिरुच्यते | – स्थितधीः + मुनिः स्थितधीर्मुनिः | विसर्गसन्धिः (रेफः) |
| | स्थितधीर्मुनिः + उच्यते | विसर्गसन्धिः (रेफः) |

**(ख) समासः**

अनुद्विग्नमनाः – अनुद्विग्नं मनः यस्य सः – बहुव्रीहिः ।

विगतस्पृहः – विगता स्पृहा यस्मात् सः – बहुव्रीहिः ।

| | | |
|---|---|---|
| | वीतरागभयक्रोधः | - रागः भयं क्रोधः च रागभयक्रोधाः - द्वन्द्वः । |
| | | - वीताः रागभयक्रोधाः यस्मात् सः - बहुव्रीहिः । |
| | स्थितधीः | - दृश्यताम् - 2.54 |
| **(ग) कृदन्तः** | विगतः | - वि + गम्लृ + क्त (कर्तरि) |

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥2.57॥**

**पदच्छेदः –** यः, सर्वत्र, अनभिस्नेहः, तत्, तत्, प्राप्य, शुभाशुभम् ।
न, अभिनन्दति, न, द्वेष्टि, तस्य, प्रज्ञा, प्रतिष्ठिता ॥

**पदपरिचयः –**

| **पदम्** | **विवरणम्** | **पदम्** | **विवरणम्** |
|---|---|---|---|
| यः | - यद्-द.सर्व.पुं.प्र.एक. | सर्वत्र | - अव्ययम् |
| अनभिस्नेहः | - अ.पुं.प्र.एक. | तत् | - तद्-द.सर्व.नपुं.प्र.एक. |
| प्राप्य | - ल्यबन्तम् अव्ययम् | शुभाशुभम् | - अ.नपुं.द्वि.एक. |
| अभिनन्दति | - अभि+नदि-पर.कर्तरि लट्.प्रपु.एक. | द्वेष्टि | - द्विष्-पर.कर्तरि लट्.प्रपु.एक. |
| तस्य | - तद्-द.सर्व.पुं.ष.एक. | प्रज्ञा | - आ.स्त्री.प्र.एक. |
| प्रतिष्ठिता | - आ.स्त्री.प्र.एक. | | |

**पदार्थः** – यः = यः पुरुषः, सर्वत्र = सर्वदा, अनभिस्नेहः = अननुरागः, तत् तत् = तत् तत्, शुभाशुभम् = साधु असाधु वा, प्राप्य = लब्ध्वा, न अभिनन्दति = न प्रहृष्यति, न द्वेष्टि = न कलहायते, तस्य = तादृशस्य, प्रज्ञा = बुद्धिः, प्रतिष्ठिता = अतिस्थिरा ।

**अन्वयः –** यः सर्वत्र अनभिस्नेहः तत् तत् शुभाशुभम् प्राप्य न अभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता (भवति) ।

**आकाङ्क्षा –**

**न अभिनन्दति, न द्वेष्टि** ।

**किं कृत्वा** न अभिनन्दति, न द्वेष्टि ? – **प्राप्य** न अभिनन्दति, न द्वेष्टि ।

**किं** प्राप्य न अभिनन्दति, न द्वेष्टि ? – **शुभाशुभं** प्राप्य न अभिनन्दति, न द्वेष्टि ।

**किं किं** शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि ? – **तत्तत्** शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि ।

**कः** तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि ?

– **अनभिस्नेहः** तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि ।

**कुत्र** अनभिस्नेहः तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि ?

– **सर्वत्र** अनभिस्नेहः तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि ।

**यः** सर्वत्र अनभिस्नेहः तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि **तस्य किं भवति** ?

– **यः** सर्वत्र अनभिस्नेहः तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि **तस्य प्रज्ञा** भवति ।

यः सर्वत्र अनभिस्नेहः तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि तस्य प्रज्ञा **कथंभूता** भवति ?

– यः सर्वत्र अनभिस्नेहः तत्तत् शुभाशुभं प्राप्य न अभिनन्दति, न द्वेष्टि तस्य प्रज्ञा **प्रतिष्ठिता** भवति ।

**तात्पर्यम् –** स्थितप्रज्ञः देहजीवितादिषु सर्वत्र स्नेहरहितः भवति । सः शुभं प्राप्य न अभिनन्दति । अशुभं प्राप्य न द्वेष्टि । शुभाशुभयोः विषये सः निर्लिप्तः भवति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | सर्वत्रानभिस्नेहः | – सर्वत्र + अनभिस्नेहः | सवर्णदीर्घसन्धिः |
| | अनभिस्नेहस्तत् | – अनभिस्नेहः + तत् | विसर्गसन्धिः (सकारः) |
| | नाभिनन्दति | – न + अभिनन्दति | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अनभिस्नेहः | – न विद्यते अभिस्नेहः यस्य सः – नञ्बहुव्रीहिः । | |
| | शुभाशुभम् | – शुभं च अशुभं च अनयोः समाहारः – द्वन्द्वः । | |
| **(ग) कृदन्तः** | प्राप्य | – प्र + आप् + ल्यप् । | |
| | प्रतिष्ठिता | – प्रति + स्था + क्त (कर्तरि) | |

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥2.58॥**

**पदच्छेदः –** यदा, संहरते, च, अयम्, कूर्मः, अङ्गानि, इव, सर्वशः ।
इन्द्रियाणि, इन्द्रियार्थेभ्यः, तस्य, प्रज्ञा, प्रतिष्ठिता ॥

**पदपरिचयः –**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| संहरते | – | सम्+हृञ्–आत्म.कर्तरि लट्.प्रपु.एक. | अयम् | – | इदम्–म.सर्व.पुं.प्र.एक. |
| कूर्मः | – | अ.पुं.प्र.एक. | अङ्गानि | – | अ.नपुं.द्वि.बहु. |
| इव | – | अव्ययम् | सर्वशः | – | अव्ययम् |
| इन्द्रियाणि | – | अ.नपुं.द्वि.बहु. | इन्द्रियार्थेभ्यः | – | अ.पुं.पं.बहु. |

**पदार्थः –** यदा च = यस्मिन् समये, अयम् = एषः, कूर्मः = कच्छपः, अङ्गानि इव = अवयवान् इव, सर्वशः = सर्वथा, इन्द्रियाणि = नेत्रादीनि, इन्द्रियार्थेभ्यः = विषयेभ्यः, संहरते = प्रत्यावर्तयति, तस्य = तस्य पुरुषस्य, प्रज्ञा = बुद्धिः, प्रतिष्ठिता = अतिस्थिरा ।

**अन्वयः –** यदा अयं कूर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तस्य प्रज्ञा प्रतिष्ठिता (भवति) ।

**आकाङ्क्षा –**

**संहरते ।**

**कः** संहरते ? – **अयं** संहरते ।

अयं **केभ्यः** संहरते ? – अयम् **इन्द्रियार्थेभ्यः** संहरते ।

अयं **कानि** इन्द्रियार्थेभ्यः संहरते ? – अयम् **इन्द्रियाणि** इन्द्रियार्थेभ्यः संहरते ।

अयं **कथम्** इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते ? – अयं **सर्वशः** इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते।

अयं **कानि** इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते ?

– अयम् **अङ्गानि** इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते।

अयं **कः** अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते ?

– अयं **कूर्मः** अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते।

यदा अयं कूर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा **किं भवति** ?

– यदा अयं कूर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा **प्रज्ञा** भवति।

यदा अयं कूर्मः अङ्गानि इव **सर्वशः** इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा प्रज्ञा **कथंभूता** भवति ?

– यदा अयं कूर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा प्रज्ञा **प्रतिष्ठिता** भवति।

यदा अयं कूर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा **कस्य** प्रज्ञा प्रतिष्ठिता ?

यदा अयं कूर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा **तस्य** प्रज्ञा प्रतिष्ठिता।

**तात्पर्यम्** – इन्द्रियाणि सर्वदापि शब्दादिषु विषयेषु प्रवृत्तानि भवन्ति। कूर्मः यथा भयात् स्वानि अ□ानि संकोचयति तथा यदा अयं ज्ञाननिष्ठायां प्रवृत्तः जनः सर्वाणि इन्द्रियाणि शब्दादिभ्यः संकोचयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवति। स च स्थितप्रज्ञो भवति।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| चायम् | – च + अयम् | सवर्णदीर्घसन्धिः |
| कूर्मोऽङ्गानि | – कूर्मः + अङ्गानि | विसर्गसन्धिः(सकारः) रेफः उकारः गुणः पूर्वरूपं च |
| अङ्गानीव | – अङ्गानि + इव | सवर्णदीर्घसन्धिः |
| इन्द्रियाणीन्द्रियार्थेभ्यः | – इन्द्रियाणि + इन्द्रियार्थेभ्यः | सवर्णदीर्घसन्धिः |
| इन्द्रियार्थेभ्यस्तस्य | – इन्द्रियार्थेभ्यः + तस्य | विसर्गसन्धिः (सकारः) |

**(ख) समासः** इन्द्रियार्थेभ्यः – इन्द्रियाणाम् अर्थाः, तेभ्यः – षष्ठीतत्पुरुषः।

**विषया विनिवर्तन्ते निराहारस्य देहिनः।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥2.59॥**

**पदच्छेदः** – विषयाः, विनिवर्तन्ते, निराहारस्य, देहिनः।
रसवर्जम्, रसः, अपि, अस्य, परम्, दृष्ट्वा, निवर्तते॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| विषयाः | – | अ.पुं.प्र.बहु. | विनिवर्तन्ते | – | वि+नि+वृत्-आत्म.लट्.प्रपु.बहु. |
| निराहारस्य | – | अ.पुं.ष.एक. | देहिनः | – | न.पुं.ष.एक. |
| रसवर्जम् | – | णमुलन्तम् अव्ययम् | रसः | – | अ.पुं.प्र.एक. |
| अस्य | – | इदम्-म.सर्व.पुं.ष.एक. | परम् | – | अ.नपुं.प्र.एक. |

दृष्ट्वा - क्त्वान्तम् अव्ययम् निवर्तते - नि+वृत्-आत्म.लट्.प्रपु.एक.

**पदार्थः** – निराहारस्य = निरशनस्य, देहिनः = शरीरधारिणः, विषयाः = इन्द्रियविषयाः, रसवर्जम् = तद्विषयकप्रीतिं विना, विनिवर्तन्ते = अपगच्छन्ति, परम् = परमात्मानम्, दृष्ट्वा = अवलोक्य, (स्थितस्य) अस्य = एतस्य, रसः अपि = रुचिः अपि, निवर्तते = अपयाति।

**अन्वयः** – निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते (किन्तु) अस्य रसः अपि परं दृष्ट्वा (स्थितस्य) निवर्तते।

**आकाङ्क्षा** –

**विनिवर्तन्ते**।

**के** विनिवर्तन्ते ? – **विषयाः** विनिवर्तन्ते।

**कस्य** विषयाः विनिवर्तन्ते ? – **देहिनः** विषयाः विनिवर्तन्ते।

**कीदृशस्य** देहिनः विषयाः विनिवर्तन्ते ? – **निराहारस्य** देहिनः विषयाः विनिवर्तन्ते।

निराहारस्य देहिनः विषयाः **कथं** विनिवर्तन्ते ? – निराहारस्य देहिनः विषयाः **रसवर्जं** विनिवर्तन्ते।

निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते, (किन्तु) **कथं रसोऽपि निवर्तते** ?

– निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते, किन्तु **दृष्ट्वा (स्थितस्य) रसोऽपि निवर्तते**।

निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते, किन्तु **किं** दृष्ट्वा स्थितस्य रसोऽपि निवर्तते ?

– निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते, किन्तु **परं** दृष्ट्वा स्थितस्य रसोऽपि निवर्तते।

निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते, किन्तु परं दृष्ट्वा स्थितस्य **कस्य** रसोऽपि निवर्तते ?

– निराहारस्य देहिनः विषयाः रसवर्जं विनिवर्तन्ते, किन्तु परं दृष्ट्वा स्थितस्य **अस्य** रसोऽपि निवर्तते।

**तात्पर्यम्** – यः रोगपीडितः भवति तस्य निराहारत्वात् विषयाः सर्वेऽपि अपगच्छन्ति। किन्तु तद्विषयकस्नेहः न अपगच्छति। किन्तु सः यदा अवहितः सन् परतत्त्वम् अनुसन्दधाति तदा विषयस्नेहोऽपि अपगच्छति।

**व्याकरणम्** –

**(क) सन्धिः** विषया विनिवर्तन्ते – विषयाः + विनिवर्तन्ते विसर्गसन्धिः (लोपः)
रसोऽपि – रसः + अपि विसर्गसन्धिः (सकारः)उकारः, गुणः पूर्वरूपं च
अप्यस्य – अपि + अस्य यणसन्धिः

**(ख) समासः** रसवर्जम् – रसं वर्जयित्वा – भावे णमुल्प्रत्ययः उपपदसमासश्च।

**(ग) कृदन्तः** दृष्ट्वा – दृश्यताम् – 1.2

**(घ) तद्धितान्तः** देहिनः – देह + इनि (मतुबर्थे)। देहः अस्य अस्मिन् वा अस्ति।

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥2.60॥**

**पदच्छेदः** – यततः, हि, अपि, कौन्तेय, पुरुषस्य, विपश्चितः।
इन्द्रियाणि, प्रमाथीनि, हरन्ति, प्रसभम्, मनः ॥

**पदपरिचयः** –

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|

| | | | | | |
|---|---|---|---|---|---|
| यततः | - | यतत्-त.पुं.ष.एक. | कौन्तेय | - | अ.पुं.सम्बो.एक. |
| पुरुषस्य | - | अ.पुं.ष.एक. | विपश्चितः | - | विपश्चित्-त.पुं.ष.एक. |
| इन्द्रियाणि | - | अ.नपुं.प्र.बहु. | प्रमाथीनि | - | प्रमाथिन्-न.नपुं.प्र.बहु. |
| हरन्ति | - | हृञ्-पर. कर्तरि लट्.प्रपु.एक. | प्रसभम् | - | अव्ययम् |
| मनः | - | स.नपुं.द्वि.एक. | | | |

**पदार्थः** – कौन्तेय = अर्जुन ! यततः अपि = (समाधौ) प्रयतमानस्य अपि, विपश्चितः = विदुषः, पुरुषस्य = मनुष्यस्य, मनः = चित्तम्, प्रमाथीनि = प्रपीडकानि, इन्द्रियाणि = नेत्रादीनि इन्द्रियाणि, प्रसभम् = हठात्, हरन्ति = आकर्षन्ति किल ।

**अन्वयः** – कौन्तेय ! यततः हि अपि विपश्चितः पुरुषस्य मनः प्रमाथीनि इन्द्रियाणि प्रसभं हरन्ति ।

**आकाङ्क्षा** –

**हरन्ति** ।

**कानि** हरन्ति ? – **इन्द्रियाणि** हरन्ति ।

**कीदृशानि** इन्द्रियाणि हरन्ति ? – **प्रमाथीनि** इन्द्रियाणि हरन्ति ।

प्रमाथीनि इन्द्रियाणि **किं** हरन्ति ? – प्रमाथीनि इन्द्रियाणि **मनः** हरन्ति ।

प्रमाथीनि इन्द्रियाणि **कस्य** मनः हरन्ति ? – प्रमाथीनि इन्द्रियाणि **पुरुषस्य** मनः हरन्ति ।

प्रमाथीनि इन्द्रियाणि **कीदृशस्य** पुरुषस्य मनः हरन्ति ?– प्रमाथीनि इन्द्रियाणि **विपश्चितः** पुरुषस्य मनः हरन्ति ।

प्रमाथीनि इन्द्रियाणि **किं कुर्वतः अपि** विपश्चितः पुरुषस्य मनः हरन्ति ?

– प्रमाथीनि इन्द्रियाणि **यततः हि अपि** विपश्चितः पुरुषस्य मनः हरन्ति ।

प्रमाथीनि इन्द्रियाणि यततः हि अपि विपश्चितः पुरुषस्य मनः **कथं** हरन्ति ?

– प्रमाथीनि इन्द्रियाणि यततः अपि विपश्चितः पुरुषस्य मनः **प्रसभं** हरन्ति ।

श्लोके सम्बोधनपदं किम् ? – **कौन्तेय** ।

**तात्पर्यम्** – कौन्तेय ! इन्द्रियाणि प्रमथनशीलानि भवन्ति । तानि समाधौ प्रयत्नं कुर्वतः मेधाविनः अपि पुरुषस्य मनः बलात् आकर्षन्ति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यततो हि | - यततः + हि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | ह्यपि | - हि + अपि | यणसन्धिः |
| **(ग) कृदन्तः** | यततः | - यत् + शतृ (कर्तरि) तस्य । | |

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥2.61॥**

**पदच्छेदः** – तानि, सर्वाणि, संयम्य, युक्तः, आसीत, मत्परः ।

वशे, हि, यस्य, इन्द्रियाणि, तस्य, प्रज्ञा, प्रतिष्ठिता ॥

**पदपरिचयः –**

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| तानि | – | तद्–द. सर्व. नपुं. द्वि. बहु. | सर्वाणि | – | अ. सर्व. नपुं. द्वि. बहु. |
| संयम्य | – | अव्ययम् | युक्तः | – | अ. पुं. प्र. एक. |
| आसीत | – | आस्–आत्म.कर्तरि वि.लिङ्.प्रपु.एक. | मत्परः | – | अ. पुं. प्र. एक. |
| वशे | – | अ. पुं. स. एक. | यस्य | – | यद्–द. सर्व. पुं. ष. एक. |
| इन्द्रियाणि | – | अ. नपुं. प्र. बहु. | तस्य | – | तद्–द. सर्व. पुं. ष. एक. |
| प्रज्ञा | – | आ. स्त्री. प्र. एक. | प्रतिष्ठिता | – | आ. स्त्री. प्र. एक. |

**पदार्थः –** तानि = इन्द्रियाणि, सर्वाणि = सकलानि, संयम्य = निरुध्य, युक्तः = योगी, मत्परः = मदासक्तः, आसीत = तिष्ठेत्, यस्य = यस्य, वशे = आधीन्ये, इन्द्रियाणि = नेत्रादीनि इन्द्रियाणि, तस्य = तस्य पुरुषस्य, प्रज्ञा = बुद्धिः, प्रतिष्ठिता = अतिस्थिरा ।

**अन्वयः –** तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । यस्य वशे इन्द्रियाणि (सन्ति) तस्य प्रज्ञा प्रतिष्ठिता (भवति) ।

**आकाङ्क्षा –**

**आसीत** ।

**कीदृशः** आसीत ? – **मत्परः** आसीत ।

**पुनश्च कीदृशः** मत्परः आसीत ? – **युक्तः** मत्परः आसीत ।

**किं कृत्वा** युक्तः मत्परः आसीत ? – **संयम्य** युक्तः मत्परः आसीत ।

**कानि** संयम्य युक्तः मत्परः आसीत ? – **तानि** संयम्य युक्तः मत्परः आसीत ।

तानि **कति** संयम्य युक्तः मत्परः आसीत ? – तानि **सर्वाणि** संयम्य युक्तः मत्परः आसीत ।

तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । **तस्य किं** भवति ?

– तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । **तस्य प्रज्ञा** भवति ।

तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । तस्य प्रज्ञा **कथंभूता** भवति ?

– तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । तस्य प्रज्ञा **प्रतिष्ठिता** भवति ।

तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । **कीदृशस्य** तस्य प्रज्ञा प्रतिष्ठिता भवति ?

– तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । **यस्य इन्द्रियाणि** तस्य प्रज्ञा प्रतिष्ठिता भवति ।

तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । तस्य इन्द्रियाणि **कस्मिन्** (सन्ति) यस्य प्रज्ञा प्रतिष्ठिता भवति ?

– तानि सर्वाणि संयम्य युक्तः मत्परः आसीत । यस्य इन्द्रियाणि **वशे** सन्ति तस्य प्रज्ञा प्रतिष्ठिता भवति ।

**तात्पर्यम् –** योगी तानि सर्वाणि इन्द्रियाणि संयम्य मत्परः सन् तिष्ठेत् । एवं यः तिष्ठति तस्य प्रज्ञा निश्चला भवति ।

**माध्वमतम् –** प्रमाथीनि इन्द्रियाणि संयम्य, भगवति मनः आधाय, तं च सर्वोत्तमं मन्वानस्य अपरोक्षज्ञानं जायते ।

**व्याकरणम् –**

**(क) सन्धिः** युक्त आसीत – युक्तः + आसीत विसर्गसन्धिः (लोपः)

| | | |
|---|---|---|
| | यस्येन्द्रियाणि | – यस्य + इन्द्रियाणि  गुणसन्धिः |
| **(ख) समासः** | मत्परः | – मम परः – षष्ठीतत्पुरुषः । |
| **(ग) कृदन्तः** | संयम्य | – सम् + यम् + ल्यप् । |
| | युक्तः | – युजिर् + क्त । (कर्तरि) |

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ॥**
**सङ्गात्सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥2.62॥**
**क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥2.63॥**

**पदच्छेदः –** ध्यायतः, विषयान्, पुंसः, सङ्गः, तेषु, उपजायते ॥
सङ्गात्, सञ्जायते, कामः, कामात्, क्रोधः, अभिजायते ॥
क्रोधात्, भवति, सम्मोहः, सम्मोहात्, स्मृतिविभ्रमः ।
स्मृतिभ्रंशात्, बुद्धिनाशः, बुद्धिनाशात्, प्रणश्यति ॥

**पदपरिचयः –**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| ध्यायतः | – | ध्यायत्–त. पुं. ष.एक. | विषयान् | – | अ. पुं. द्वि. बहु. |
| पुंसः | – | पुंस्–स. पुं. ष.एक. | सङ्गः | – | अ. पुं. प्र. एक. |
| तेषु | – | तद्–द. सर्व. पुं. स.बहु. | उपजायते | – | उप+जन्–आत्म. कर्तरि लट् प्रपु. एक. |
| सङ्गात् | – | अ. पुं. पं. एक. | सञ्जायते | – | सम्+जन्–आत्म. कर्तरि लट् प्रपु. एक. |
| कामः | – | अ. पुं. प्र. एक. | कामात् | – | अ.पुं.पं.एक. |
| क्रोधः | – | अ. पुं. प्र. एक. | अभिजायते | – | अभि+जन्–आत्म. कर्तरि लट् प्रपु.एक. |
| क्रोधात् | – | अ. पुं. पं. एक. | भवति | – | भू–पर. कर्तरि लट् प्रपु. एक. |
| सम्मोहः | – | अ. पुं. प्र. एक. | सम्मोहात् | – | अ. पुं. पं. एक. |
| स्मृतिविभ्रमः | – | अ. पुं. प्र. एक. | स्मृतिभ्रंशात् | – | अ. पुं. पं. एक. |
| बुद्धिनाशः | – | अ. पुं. प्र. एक. | बुद्धिनाशात् | – | अ. पुं. पं. एक. |
| प्रणश्यति | – | प्र+नश् पर. कर्तरि लट्. प्रपु.एक. | | | |

**पदार्थः –** विषयान् = इन्द्रियविषयान्, ध्यायतः = चिन्तयतः, पुंसः = पुरुषस्य, तेषु = तेषु विषयेषु, सङ्गः = आसक्तिः, उपजायते = उद्भवति, सङ्गात् = आसक्तेः, कामः = वाञ्छा, सञ्जायते = निष्पद्यते,कामात्= वाञ्छायाः, क्रोधः = रोषः, अभिजायते = सम्भवति, क्रोधात् = रोषात्, सम्मोहः = व्यामोहः, भवति = सम्पद्यते, सम्मोहात् = व्यामोहात्, स्मृतिविभ्रमः = स्मरणनाशः, स्मृतिभ्रंशात् = स्मरणनाशात्, बुद्धिनाशः = मतिनाशः, बुद्धिनाशात् = मतिनाशात्, प्रणश्यति = विनष्टो भवति ।

**अन्वयः –** विषयान् ध्यायतः पुंसः तेषु सङ्गः उपजायते, सङ्गात् कामः सञ्जायते, कामात् क्रोधः अभिजायते,

क्रोधात् सम्मोहः भवति, सम्मोहात् स्मृतिविभ्रमः, स्मृतिभ्रंशात् बुद्धिनाशः, बुद्धिनाशात् प्रणश्यति ।

**आकाङ्क्षा –**

**उपजायते** ।

| | |
|---|---|
| **कः** उपजायते ? | – **सङ्गः** उपजायते । |
| सङ्गः **केषु** उपजायते ? | – सङ्गः **तेषु** उपजायते । |
| **कस्य** सङ्गः तेषु उपजायते ? | – **पुंसः** सङ्गः तेषु उपजायते । |
| **किं कुर्वतः** पुंसः सङ्गः तेषु उपजायते ? | – **ध्यायतः** पुंसः तेषु सङ्गः उपजायते । |
| **कान्** ध्यायतः पुंसः तेषु सङ्गः उपजायते ? | – **विषयान्** ध्यायतः पुंसः तेषु सङ्गः उपजायते । |

विषयान् ध्यायतः पुंसः तेषु सङ्गः उपजायते । **तस्मात् किं भवति ?**

– तस्मात् **सञ्जायते ।**

| | |
|---|---|
| तस्मात् **कः** सञ्जायते ? | – तस्मात् **कामः** सञ्जायते । |

तस्मात् कामः सञ्जायते । **तस्मात् किं भवति ?**

– तस्मात् **अभिजायते ।**

| | |
|---|---|
| तस्मात् **कः** अभिजायते ? | – तस्मात् **क्रोधः** अभिजायते । |

तस्मात् क्रोधः अभिजायते । **तस्मात् कः भवति ?**

– तस्मात् **सम्मोहः** भवति ।

| | |
|---|---|
| सम्मोहात् **कः** भवति ? | – सम्मोहात् **स्मृतिविभ्रमः** भवति । |
| स्मृतिभ्रंशात् **कः** भवति ? | – स्मृतिभ्रंशात् **बुद्धिनाशः** भवति । |
| बुद्धिनाशात् **कः** भवति ? | – बुद्धिनाशात् **प्रणश्यति** । |

**तात्पर्यम् –** शब्दादिविषयान् आलोचयतः पुरुषस्य तेषु आसक्तिः उपजायते । तस्याः आसक्तेः तृष्णा सञ्जायते । यदि सा तृष्णा प्रतिहता भवति तर्हि क्रोधः अभिजायते । क्रोधात् अविवेकः उत्पद्यते । अविवेकात् शास्त्राध्ययनेन गुरूपदेशेन वा प्राप्तायाः स्मृतेः भ्रंशः भवति । स्मृतिभ्रंशात् बुद्धिनाशः भवति । बुद्धिनाशात् पुरुषः नष्टो भवति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | ध्यायतो विषयान् | – ध्यायतः + विषयान् | विसर्गसन्धिः (सकारः) रेफः उकारः गुणः |
| | सङ्गस्तेषु | – सङ्गः + तेषु | विसर्गसन्धिः (सकारः) |
| | तेषूपजायते | – तेषु + उपजायते | सवर्णदीर्घसन्धिः |
| | क्रोधोऽभिजायते | – क्रोधः + अभिजायते | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| | क्रोधाद्भवति | – क्रोधात् + भवति | जश्त्वसन्धिः |
| | स्मृतिभ्रंशाद्बुद्धिनाशः | – स्मृतिभ्रंशात् + बुद्धिनाशः | जश्त्वसन्धिः |
| | बुद्धिनाशो बुद्धिनाशात् | – बुद्धिनाशः + बुद्धिनाशात् | विसर्गसन्धिः (सकारः) रेफः उकारः गुणः |

**(ख) समासः** स्मृतिविभ्रमः - स्मृतेः विभ्रमः - षष्ठीतत्पुरुषः ।
बुद्धिनाशः - बुद्धेः नाशः - षष्ठीतत्पुरुषः ।
**(ग) कृदन्तः** ध्यायतः - ध्यै + शतृ (कर्तरि) ।

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥2.64॥**

**पदच्छेदः -** रागद्वेषवियुक्तैः, तु, विषयान्, इन्द्रियैः, चरन् ।
आत्मवश्यैः, विधेयात्मा, प्रसादम्, अधिगच्छति ॥

**पदपरिचयः -**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| रागद्वेषवियुक्तैः | - अ. नपुं. तृ. बहु. | विषयान् | - अ. पुं. द्वि. बहु. |
| इन्द्रियैः | - अ. नपुं. तृ. बहु. | चरन् | - चरत्-त. पुं. प्र. एक. |
| आत्मवश्यैः | - अ. नपुं. तृ. बहु. | विधेयात्मा | - विधेयात्मन्-न. पुं. प्र. एक. |
| प्रसादम् | - अ. पुं. द्वि. एक. | अधिगच्छति | - अधि + गम्लृ-पर.कर्तरि लट्. प्रपु. एक. |

**पदार्थः -** विधेयात्मा तु = वश्यमनस्कः, रागद्वेषवियुक्तैः = प्रीतिविरोधशून्यैः, आत्मवश्यैः = स्वाधीनैः, इन्द्रियैः = इन्द्रियैः, विषयान् = शब्दादीन्, चरन् = अनुभवन्, प्रसादम् = नैर्मल्यम्, अधिगच्छति = प्राप्नोति ।

**अन्वयः -** विधेयात्मा तु रागद्वेषवियुक्तैः आत्मवश्यैः इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ।

**आकाङ्क्षा -**

**अधिगच्छति** ।

**कम्** अधिगच्छति ? - **प्रसादम्** अधिगच्छति ।

**किं कुर्वन्** प्रसादम् अधिगच्छति ? - **चरन्** प्रसादम् अधिगच्छति ।

**कान्** चरन् प्रसादम् अधिगच्छति ? - **विषयान्** चरन् प्रसादम् अधिगच्छति ।

**कैः** विषयान् चरन् प्रसादम् अधिगच्छति ? - **इन्द्रियैः** विषयान् चरन् प्रसादम् अधिगच्छति ।

**कीदृशैः** इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ?
- **रागद्वेषवियुक्तैः** इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ।

रागद्वेषवियुक्तैः **पुनश्च कीदृशैः** आत्मवश्यैः इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ?
- रागद्वेषवियुक्तैः **आत्मवश्यैः** इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ।

**कः** रागद्वेषवियुक्तैः आत्मवश्यैः इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ?
- **विधेयात्मा तु** रागद्वेषवियुक्तैः आत्मवश्यैः इन्द्रियैः विषयान् चरन् प्रसादम् अधिगच्छति ।

**तात्पर्यम्-** वस्तुतः रागद्वेषपुरःसरा एव इन्द्रियाणां प्रवृत्तिः भवति । परन्तु यः मुमुक्षुः अस्ति सः ताभ्यां वियुक्तत्वात् स्ववशे वर्तमानैः श्रोत्रादिभिः इन्द्रियैः विषयान् उपसेवमानः प्रसन्नताम् अधिगच्छति ।

**व्याकरणम् –**

**(क) सन्धिः** रागद्वेषवियुक्तैस्तु – रागद्वेषवियुक्तैः + तु विसर्गसन्धिः (सकारः)
इन्द्रियैश्चरन् – इन्द्रियैः + चरन् विसर्गसन्धिः (सकारः) श्चुत्वं च
आत्मवश्यैर्विधेयात्मा – आत्मवश्यैः + विधेयात्मा विसर्गसन्धिः (रेफः)

**(ख) समासः** रागद्वेषवियुक्तैः – रागश्च द्वेषश्च रागद्वेषौ – द्वन्द्वः ।
– रागद्वेषाभ्यां वियुक्ताः, तैः – तृतीयातत्पुरुषः ।
आत्मवश्यैः – आत्मनः वश्यानि, तैः – षष्ठीतत्पुरुषः ।
विधेयात्मा – विधेयः आत्मा यस्य सः – बहुव्रीहिः ।

**(ग) कृदन्तः** चरन् – चर + शतृ (कर्तरि) ।
वियुक्तः – वि + युजिर् + क्त (कर्मणि)

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥2.65॥**

**पदच्छेदः –** प्रसादे, सर्वदुःखानाम्, हानिः, अस्य, उपजायते ।
प्रसन्नचेतसः, हि, आशु, बुद्धिः, पर्यवतिष्ठते ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| प्रसादे | – अ. पुं. स. एक. | सर्वदुःखानाम् | – अ. नपुं. ष. बहु. |
| हानिः | – इ. स्त्री. प्र. एक. | अस्य | – इदम्–म. सर्व. पुं. ष. बहु. |
| उपजायते | – उप+जन्–आत्म.कर्तरि लट्. प्रपु.एक. | प्रसन्नचेतसः | – प्रसन्नचेतस्–स. पुं. ष. एक. |
| आशु | – अव्ययम् | बुद्धिः | – इ. स्त्री. प्र. एक. |
| पर्यवतिष्ठते | – परि+अव+स्था आत्म. कर्तरि लट्. प्रपु. एक. | | |

**पदार्थः –** प्रसादे = चित्तनैर्मल्ये, अस्य = एतस्य, सर्वदुःखानाम् = सकलविषादानाम्, हानिः = नाशः, उपजायते = सम्भवति, प्रसन्नचेतसः हि = निर्मलचित्तस्य, बुद्धिः = मनः, आशु = शीघ्रम्, पर्यवतिष्ठते = निश्चलं भवति ।

**अन्वयः –** प्रसादे (सति) अस्य सर्वदुःखानां हानिः उपजायते । प्रसन्नचेतसः हि बुद्धिः आशु पर्यवतिष्ठते ।

**आकाङ्क्षा –**

**उपजायते ।**

**का** उपजायते ? – **हानिः** उपजायते ।

**केषां** हानिः उपजायते ? – **सर्वदुःखानां** हानिः उपजायते ।

**कस्य** सर्वदुःखानां हानिः उपजायते ? – **अस्य** सर्वदुःखानां हानिः उपजायते ।

**कस्मिन् (सति)** अस्य सर्वदुःखानां हानिः उपजायते ?

– **प्रसादे (सति)** अस्य सर्वदुःखानां हानिः उपजायते ।

प्रसादे सति अस्य सर्वदुःखानां हानिः उपजायते। (तस्मात्) **किं भवति ?**

(तस्मात्) **पर्यवतिष्ठते।**

**का** पर्यवतिष्ठते ? — **बुद्धिः** पर्यवतिष्ठते।

बुद्धिः **कथं** पर्यवतिष्ठते ? — बुद्धिः **आशु** पर्यवतिष्ठते।

**कस्य** बुद्धिः आशु पर्यवतिष्ठते ? — **प्रसन्नचेतसः हि** बुद्धिः आशु पर्यवतिष्ठते।

**तात्पर्यम् –** तस्यां प्रसन्नतावस्थायाम् अस्य सर्वदुःखानां नाशः भवति। प्रसन्नचेतसः तस्य बुद्धिः भगवति निश्चला तिष्ठति।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | हानिरस्य | – हानिः + अस्य | विसर्गसन्धिः (रेफः) |
| | अस्योपजायते | – अस्य + उपजायते | गुणसन्धिः |
| | प्रसन्नचेतसो हि | – प्रसन्नचेतसः + हि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | ह्याशु | – हि + आशु | यण्सन्धिः |
| **(ख) समासः** | प्रसन्नचेतसः | – प्रसन्नं चेतः यस्य सः, तस्य – बहुव्रीहिः। | |

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥2.66॥**

**पदच्छेदः –** नास्ति, बुद्धिः, अयुक्तस्य, न, च, अयुक्तस्य, भावना।
न, च, अभावयतः, शान्तिः, अशान्तस्य, कुतः, सुखम् ॥

**पदपरिचयः –**

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| अस्ति | – | अस्–पर. कर्तरि लट्. प्रपु. एक. | बुद्धिः | – | इ. स्त्री. प्र. एक. |
| अयुक्तस्य | – | अ. पुं. ष. एक. | भावना | – | आ. स्त्री. प्र. एक. |
| अभावयतः | – | अभावयत्–त. पुं. ष. एक. | शान्तिः | – | इ. स्त्री. प्र. एक. |
| अशान्तस्य | – | अ. पुं. ष. एक. | कुतः | – | अव्ययम् |
| सुखम् | – | अ. नपुं. प्र. एक. | | | |

**अन्वयः –** अयुक्तस्य बुद्धिः नास्ति। अयुक्तस्य च भावना न। अभावयतः च शान्तिः न। अशान्तस्य कुतः सुखम्।

**पदार्थः –** अयुक्तस्य = योगरहितस्य, बुद्धिः = धीः, नास्ति = न भवति, अयुक्तस्य च = अयोगिनः, भावना = चिन्तना अपि, न = न विद्यते, अभावयतः च = अचिन्तयतः, शान्तिः = शान्तिः, न = न भवति, अशान्तस्य = शान्तिविहीनस्य, सुखम् = आनन्दः, कुतः = कथं सम्भवति ?

**आकाङ्क्षा –**

**नास्ति।**

**का** नास्ति ? — **बुद्धिः** नास्ति।

**कस्य** बुद्धिः नास्ति ? — **अयुक्तस्य** बुद्धिः नास्ति।

**अयुक्तस्य** बुद्धिः नास्ति। **(तेन) किम्** ? — अयुक्तस्य बुद्धिः नास्ति। **(तेन) भावना न**।

अयुक्तस्य बुद्धिः नास्ति। तेन **कस्य** भावना न ? — अयुक्तस्य बुद्धिः नास्ति। तेन **अयुक्तस्य च** भावना न।

अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। **(तेन) किम्** ?

– अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। **(तेन) शान्तिः न**।

अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन **कस्य** शान्तिः न ?

– अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन **अभावयतः च** शान्तिः न।

अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन अभावयतः च शान्तिः न। **(तेन) किम्** ?

– अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन अभावयतः च शान्तिः न। **(तेन) सुखम्**।

अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन अभावयतः च शान्तिः न। तेन **कस्य** सुखम् ?

– अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन अभावयतः च शान्तिः न। तेन **अशान्तस्य** सुखम्।

अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन अभावयतः च शान्तिः न। तेन अशान्तस्य **ततः** सुखम्।

– अयुक्तस्य बुद्धिः नास्ति। तेन अयुक्तस्य भावना न। तेन अभावयतः च शान्तिः न। तेन अशान्तस्य **कुतः** सुखम् ?

**तात्पर्यम् –** यस्य समाधिः नास्ति तस्य आत्मस्वरूपविषया बुद्धिः न भवति। तादृशस्य अयुक्तस्य आत्मज्ञानाभिनिवेशः न भवति। आत्मज्ञानाभिनिवेशरहितस्य शान्तिः न भवति। अशान्तस्य कथं वा सुखं स्यात् ?

**माध्वमतम्–**मनःप्रसादाभावे चित्तनिरोधः नास्ति। तदभावे अपरोक्षज्ञानं नास्ति। तदभावे मोक्षः, मोक्षाभावे च सुखं नास्ति।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नास्ति | – न + अस्ति | सवर्णदीर्घसन्धिः |
| | बुद्धिरयुक्तस्य | – बुद्धिः + अयुक्तस्य | विसर्गसन्धिः (रेफः) |
| | चायुक्तस्य | – च + अयुक्तस्य | सवर्णदीर्घसन्धिः |
| | चाभावयतः | – च + अभावयतः | सवर्णदीर्घसन्धिः |
| | शान्तिरशान्तस्य | – शान्तिः + अशान्तस्य | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | अयुक्तस्य | – न युक्तः अयुक्तः, तस्य – नञ्तत्पुरुषः। | |
| | अभावयतः | – न भावयन् अभावयन्, तस्य – नञ्तत्पुरुषः। | |
| | अशान्तस्य | – न शान्तः, अशान्तः, तस्य – नञ्तत्पुरुषः। | |
| **(ग) कृदन्तः** | अयुक्तस्य | – दृश्यताम् – 2.61 | |
| | भावयतः | – भू + णिच् + शतृ (कर्तरि)। | |

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥2.67॥**

**पदच्छेदः –** इन्द्रियाणाम्, हि, चरताम्, यत्, मनः, अनुविधीयते ।
तत्, अस्य, हरति, प्रज्ञाम्, वायुः, नावम्, इव, अम्भसि ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| इन्द्रियाणाम् | – अ. नपुं. ष. बहु. | चरताम् | – चरत्–त. नपुं. ष.बहु. |
| यत् | – यद्–द. सर्व. नपुं. प्र. एक. | मनः | – मनस्–स. नपुं. प्र. एक. |
| अनुविधीयते | – अनु+वि+धा–पर.कर्मणि लट् प्रपु. एक. | तत् | – तद्–द.सर्व. नपुं. प्र. एक. |
| अस्य | – इदम्–म. सर्व. पुं. ष. एक. | हरति | – हृञ्–पर. कर्तरि लट्. प्रपु. एक. |
| प्रज्ञाम् | – आ.स्त्री.द्वि.एक. | वायुः | – उ. पुं. प्र. एक. |
| नावम् | – नौ–औ. स्त्री. द्वि.एक. | इव | – अव्ययम् |
| अम्भसि | – अम्भस्–स. नपुं. स. एक. | | |

**पदार्थः –** चरताम् = विषयेषु प्रवर्तमानानाम्, इन्द्रियाणाम् = नेत्रादीनाम् (मध्ये), मनः = बुद्धिः, यत् = यद् इन्द्रियम्, अनुविधीयते = अनुसृत्य प्रवर्तते, तत् = इन्द्रियम्, अस्य = एतस्य, प्रज्ञाम् = बुद्धिम्, वायुः = पवनः, अम्भसि = उदके, नावम् इव = नौकाम् इव, हरति = अपकर्षति ।

**अन्वयः –** चरतां हि इन्द्रियाणां यत् मनः अनुविधीयते तत् अस्य प्रज्ञां वायुः अम्भसि नावम् इव हरति ।

**आकाङ्क्षा –**

**अनुविधीयते** ।
**किम्** अनुविधीयते ? – **मनः** अनुविधीयते ।
मनः **किम्** अनुविधीयते ? – मनः **तत्** अनुविधीयते ।
मनः **केषां** (मध्ये) तत् अनुविधीयते ? – मनः **इन्द्रियाणां** (मध्ये) तत् अनुविधीयते ।
मनः **किं कुर्वताम्** इन्द्रियाणां मध्ये तत् अनुविधीयते ?
– मनः **चरताम्** इन्द्रियाणां मध्ये तत् अनुविधीयते ।
मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । **तत् किं करोति ?**
– मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । **तत् हरति** ।
मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् **कां** हरति ?
– मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् **प्रज्ञां** हरति ।
मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् **कः काम् इव** प्रज्ञां हरति ?
– मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् **वायुः नावम् इव** प्रज्ञां हरति ।
मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् वायुः **कुत्र** नावम् इव प्रज्ञां हरति ?
– मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् वायुः **अम्भसि** नावम् इव प्रज्ञां हरति ।
मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् वायुः अम्भसि नावम् इव **कस्य** प्रज्ञां हरति ?
– मनः चरताम् इन्द्रियाणां मध्ये तत् अनुविधीयते । तत् वायुः अम्भसि नावम् इव **अस्य** प्रज्ञां हरति ।

**तात्पर्यम् –** जले प्लवमानां नौकां वायुः यत्र कुत्रापि नयति । एवं विषयेषु प्रवृत्तम् एकम् इन्द्रियमपि तस्य प्रज्ञां हरति ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | |
|---|---|---|
| यन्मनः | – यत् + मनः | अनुनासिकसन्धिः |
| मनोऽनुविधीयते | – मनः + अनुविधीयते | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः पूर्वरूपं च |
| तदस्य | – तत् + अस्य | जश्त्वसन्धिः |
| वायुर्नावम् | – वायुः + नावम् | विसर्गसन्धिः (रेफः) |
| इवाम्भसि | – इव + अम्भसि | सवर्णदीर्घसन्धिः |

**(ग) कृदन्तः** चरताम् – चर् + शतृ (कर्तरि), तेषाम्।

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥2.68॥**

**पदच्छेदः –** तस्मात्, यस्य, महाबाहो, निगृहीतानि, सर्वशः।
इन्द्रियाणि, इन्द्रियार्थेभ्यः, तस्य, प्रज्ञा, प्रतिष्ठिता ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| तस्मात् | – तद्-द. सर्व. नपुं. पं. एक. | यस्य | – यद्-द. सर्व. पुं. ष. एक. |
| महाबाहो | – उ. पुं. सम्बो. एक. | निगृहीतानि | – अ. नपुं. प्र. बहु. |
| सर्वशः | – अव्ययम् | इन्द्रियाणि | – अ. नपुं. प्र. बहु. |
| इन्द्रियार्थेभ्यः | – अ. पुं. पं. बहु. | तस्य | – तद्-द. सर्व. पुं. ष. एक. |
| प्रज्ञा | – आ. स्त्री. प्र. एक. | प्रतिष्ठिता | – आ. स्त्री. प्र. एक. |

**पदार्थः –** महाबाहो = हे अर्जुन ! तस्मात् = ततः, यस्य = यस्य पुरुषस्य, इन्द्रियाणि = चक्षुरादीनि, इन्द्रियार्थेभ्यः = रूपादिविषयेभ्यः, सर्वशः = सर्वथा, निगृहीतानि = नियन्त्रितानि, तस्य = तस्य पुरुषस्य, प्रज्ञा = बुद्धिः, प्रतिष्ठिता = अतिस्थिरा।

**अन्वयः –** महाबाहो ! तस्मात् यस्य इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता (भवति)।

**आकाङ्क्षा –**

**निगृहीतानि** ।

**कानि** निगृहीतानि ? – **इन्द्रियाणि** निगृहीतानि।

इन्द्रियाणि **केभ्यः** निगृहीतानि ? – इन्द्रियाणि **इन्द्रियार्थेभ्यः** निगृहीतानि।

इन्द्रियाणि इन्द्रियार्थेभ्यः **कथं** निगृहीतानि ? – इन्द्रियाणि इन्द्रियार्थेभ्यः **सर्वशः** निगृहीतानि।

**यस्य** इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि। **तस्य किं** भवति ?

– **यस्य** इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि। **तस्य प्रज्ञा** भवति।

यस्य इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि। तस्य तदा प्रज्ञा **कथंभूता** भवति ?

– यस्य इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि तस्य प्रज्ञा **प्रतिष्ठिता** भवति।

**कस्मात्** यस्य इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता भवति ?

– **तस्मात्** यस्य इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता भवति ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **महाबाहो ।**

**तात्पर्यम्** – हे महाबाहो अर्जुन ! तस्मात् त्वं जानीहि यत् यस्य इन्द्रियाणि रूपरसादिभ्यः इन्द्रियार्थेभ्यः सर्वशः निगृहीतानि भवन्ति तस्य प्रज्ञा प्रतिष्ठिता भवति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | तस्माद्यस्य | – तस्मात् + यस्य | जश्त्वसन्धिः |
| | इन्द्रियाणीन्द्रियार्थेभ्यः | – इन्द्रियाणि + इन्द्रियार्थेभ्यः | सवर्णदीर्घसन्धिः |
| | इन्द्रियार्थेभ्यस्तस्य | – इन्द्रियार्थेभ्यः + तस्य | विसर्गसन्धिः (सकारः) |
| | युक्तो यया | – युक्तः + यया | विसर्गसन्धिः (सकारः) रेफः,उकारः गुणः |
| **(ग) कृदन्तः** | निगृहीतानि | – नि + ग्रह् + क्त । (कर्मणि) | |

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥2.69॥**

**पदच्छेदः** – या, निशा, सर्वभूतानाम्, तस्याम्, जागर्ति, संयमी ।
यस्याम्, जाग्रति, भूतानि, सा, निशा, पश्यतः, मुनेः ॥

**पदपरिचयः** –

| पदम् | | विवरणम् | पदम् | | विवरणम् |
|---|---|---|---|---|---|
| या | – | यद्–द. सर्व. स्त्री. प्र. एक. | निशा | – | आ. स्त्री. प्र. एक. |
| सर्वभूतानाम् | – | अ. नपुं. ष. बहु. | तस्याम् | – | तद्–द.सर्व.स्त्री.स.एक. |
| जागर्ति | – | जागृ–पर. कर्तरि लट्. प्रपु. एक. | संयमी | – | संयमिन्–न. पुं. प्र. एक. |
| यस्याम् | – | यद्–द. सर्व. स्त्री. स. एक. | जाग्रति | – | जागृ–पर. कर्तरि लट्. प्रपु. बहु. |
| भूतानि | – | अ. नपुं. प्र. बहु. | सा | – | तद्–द. सर्व. स्त्री. प्र. एक. |
| पश्यतः | – | पश्यत्–त.पुं. ष. एक. | मुनेः | – | इ. पुं. ष. एक. |

**पदार्थः** – सर्वभूतानाम् = समस्तप्राणिनाम्, या = या, निशा = रात्रिः (अप्रवृत्तिभूमिः), तस्याम् =तस्यां रात्रौ, संयमी = योगी, जागर्ति = जागरूकः भवति (प्रवर्तते), भूतानि = प्राणिनः, यस्याम् = यस्यां रात्रौ (विषयराशौ), जाग्रति = जागरूकानि भवन्ति, सा = सा, पश्यतः = विचारवतः, मुनेः = संयमिनः, निशा = रात्रिः (अप्रवृत्तिभूमिः) ।

**अन्वयः** – सर्वभूतानां या निशा तस्यां संयमी जागर्ति, यस्यां भूतानि जाग्रति सा पश्यतः मुनेः निशा ।

**आकाङ्क्षा** –

**जागर्ति** ।

**कः** जागर्ति ? – **संयमी** जागर्ति ।

**कस्यां** संयमी जागर्ति ? – **या निशा तस्यां** संयमी जागर्ति ।

**कीदृश्यां** तस्यां संयमी जागर्ति ? – **या निशा सर्वभूतानां** तस्यां संयमी जागर्ति ।

सा **केषां** निशा यस्यां संयमी जागर्ति ? – या **सर्वभूतानां** निशा तस्यां संयमी जागर्ति ।

या सर्वभूतानां निशा तस्यां संयमी जागर्ति । **(तर्हि) का निशा ?**

– या सर्वभूतानां निशा तस्यां संयमी जागर्ति । **(तर्हि) यस्यां जाग्रति सा निशा ।**

या सर्वभूतानां निशा तस्यां संयमी जागर्ति । तर्हि तस्यां **कानि** जाग्रति या निशा ?

– या सर्वभूतानां निशा तस्यां संयमी जागर्ति । तर्हि यस्यां **भूतानि** जाग्रति सा निशा ।

या सर्वभूतानां निशा तस्यां संयमी जागर्ति । तर्हि यस्यां भूतानि जाग्रति सा **कस्य** निशा ?

– या सर्वभूतानां निशा तस्यां संयमी जागर्ति । तर्हि यस्यां भूतानि जाग्रति सा **मुनेः** निशा ।

या सर्वभूतानां निशा तस्यां संयमी जागर्ति । तर्हि यस्यां भूतानि जाग्रति सा **किं कुर्वतः** मुनेः निशा ?

– या सर्वभूतानां निशा तस्यां संयमी जागर्ति । तर्हि यस्यां भूतानि जाग्रति सा **पश्यतः** मुनेः निशा ।

**तात्पर्यम् –** यस्मिन् सर्वे प्राणिनः न प्रवर्तन्ते तादृशे ब्रह्मणि योगी सर्वदा प्रवृत्तिशीलः भवति । यस्मिन् पुनः सर्वे प्राणिनः प्रवर्तन्ते तादृशे विषयप्रपञ्चे विचारवतः योगिनः प्रवृत्तिः न भवति ।

**माध्वमतम् –** येषां भगवत्स्वरूपज्ञानं नास्ति तेषां भगवत्स्वरूपं रात्रिरिव अन्धकारमयं भवति । संयमी तत्र (भवगत्स्वरूपरूपरात्रौ) जागर्ति । विषयस्वरूपे प्रपञ्चे प्राणिनः जाग्रति । किन्तु संयमी तत्र अनासक्तः भवति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पश्यतो मुनेः | – पश्यतः + मुनेः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ग) कृदन्तः** | सर्वभूतानाम् | – सर्व + भू + क्त (कर्तरि), तेषाम् । | |
| | पश्यतः | – दृशिर् + शतृ (कर्तरि), तस्य । | |
| **(ग) तद्धितान्तः** | संयमी | – संयम + इनि (मतुबर्थे) । संयमः अस्य अस्मिन् वा अस्ति । | |

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥2.70॥**

**पदच्छेदः –** आपूर्यमाणम्, अचलप्रतिष्ठम्, समुद्रम्, आपः, प्रविशन्ति, यद्वत् ।
तद्वत्, कामाः, यम्, प्रविशन्ति, सर्वे, सः, शान्तिम्, आप्नोति, न, कामकामी ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| आपूर्यमाणम् | – अ. पुं. द्वि.एक. | अचलप्रतिष्ठम् | – अ. पुं. द्वि. एक. |
| समुद्रम् | – अ. पुं. द्वि.एक. | आपः | – अप्.-प. स्त्री. प्र. बहु. |
| प्रविशन्ति | – प्र+विश्–पर. कर्तरि लट् प्रपु. एक. | यद्वत् | – अव्ययम् |
| तद्वत् | – अव्ययम् | कामाः | – अ. पुं. प्र. बहु. |
| यम् | – यद्–द. सर्व. पुं. द्वि. एक. | सर्वे | – अ. सर्व. पुं. प्र. बहु. |

| | | | |
|---|---|---|---|
| सः | – तद्–द. सर्व. पुं. प्र. एक. | शान्तिम् | – इ. स्त्री. द्वि. एक. |
| आप्नोति | – आप्लृ–पर. कर्तरि लट्. प्रपु. एक. | कामकामी | – कामकामिन्–न.पुं. प्र.एक. |

**पदार्थः –** आपः = जलानि, आपूर्यमाणम् = उदकेन सम्पूर्यमाणम्, अचलप्रतिष्ठम् = निश्चलस्थितिम्, समुद्रम् = सागरम्, यद्वत् = यथा, प्रविशन्ति = गच्छन्ति, तद्वत् = तथा, सर्वे = सकलाः, कामाः = अभिलाषाः, यम् = यं पुरुषम्, प्रविशन्ति = यान्ति, सः = सः पुरुषः, शान्तिम् = सुखम्, आप्नोति = लभते कामकामी न = भोगासक्तः न ।

**अन्वयः –** आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रम् यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः यं प्रविशन्ति सः शान्तिम् आप्नोति, कामकामी न ।

**आकाङ्क्षा –**

**प्रविशन्ति** ।

**काः** प्रविशन्ति ? – **आपः** प्रविशन्ति ।

आपः **कं** प्रविशन्ति ? – आपः **समुद्रं** प्रविशन्ति ।

आपः **कीदृशं** समुद्रं प्रविशन्ति ? – आपः **आपूर्यमाणं** समुद्रं प्रविशन्ति ।

आपः आपूर्यमाणं **पुनश्च कीदृशं** समुद्रं प्रविशन्ति ? – आपः आपूर्यमाणम् **अचलप्रतिष्ठं** समुद्रं प्रविशन्ति।

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं **यद्वत्** प्रविशन्ति **तद्वत् किं भवति** ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं **यद्वत्** प्रविशन्ति **तद्वत् प्रविशन्ति** ।

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् **के** प्रविशन्ति ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् **कामाः** प्रविशन्ति ।

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् **कति** कामाः प्रविशन्ति ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् **सर्वे** कामाः प्रविशन्ति ।

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः **कं** प्रविशन्ति ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः **तं** प्रविशन्ति ।

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः **तं** प्रविशन्ति । **तस्य किं भवति** ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः यं प्रविशन्ति **सः आप्नोति ।**

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः यं प्रविशन्ति सः **काम्** आप्नोति ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः यं प्रविशन्ति सः **शान्तिम्** आप्नोति ।

आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः यं प्रविशन्ति सः शान्तिम् आप्नोति । **कः न** ?

– आपः आपूर्यमाणम् अचलप्रतिष्ठं समुद्रं यद्वत् प्रविशन्ति तद्वत् सर्वे कामाः यं प्रविशन्ति सः शान्तिम् आप्नोति ।

**कामकामी न ।**

**तात्पर्यम् –** समुद्रः सर्वतः अपि जलैः आपूर्यमाणः भवति तथापि सः अचलं तिष्ठति । एवं सर्वेऽपि कामाः यं प्रविशन्ति सः शान्तिं प्राप्नोति । भोगे आसक्तस्तु शान्तिं न प्राप्नोति ।

**व्याकरणम् –**

(क) **सन्धिः** कामा यम् - कामाः + यम् विसर्गसन्धिः (लोपः)
स शान्तिम् - सः + शान्तिम् विसर्गसन्धिः (लोपः)

(ख) **समासः** अचलप्रतिष्ठम् - अचला प्रतिष्ठा यस्य सः, तम् - बहुव्रीहिः।

(ग) **कृदन्तः** आपूर्यमाणम् - आ + पॄ + शानच्। (कर्मणि)

**विहाय कामान्यः सर्वान्पुमांश्चलति निःस्पृहः।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥2.71॥**

**पदच्छेदः** – विहाय, कामान्, यः, सर्वान्, पुमान्, चलति, निःस्पृहः।
निर्ममः, निरहङ्कारः, सः, शान्तिम्, अधिगच्छति ॥

**पदपरिचयः** –

| **पदम्** | | **विवरणम्** | **पदम्** | | **विवरणम्** |
|---|---|---|---|---|---|
| विहाय | - | अव्ययम् | कामान् | - | अ. पुं. द्वि. बहु. |
| यः | - | यद्-द. सर्व. पुं. प्र. एक. | सर्वान् | - | अ. सर्व. पुं. द्वि. बहु. |
| पुमान् | - | पुंस्-स. पुं. प्र.एक. | चलति | - | चल्-पर. कर्तरि लट्. प्रपु. एक. |
| निःस्पृहः | - | अ. पुं. प्र. एक. | निर्ममः | - | अ. पुं. प्र. एक. |
| निरहङ्कारः | - | अ. पुं. प्र. एक. | सः | - | तद्-द.सर्व. पुं. प्र. एक. |
| शान्तिम् | - | इ. स्त्री. द्वि. एक. | अधिगच्छति | - | अधि+गम्लृ-पर.कर्तरि लट्. प्रपु. एक. |

**पदार्थः** – यः पुमान् = यः पुरुषः, सर्वान् = अखिलान्,कामान् = अभिलाषान्, विहाय = त्यक्त्वा, निःस्पृहः = निराशः, निर्ममः = ममताशून्यः, निरहङ्कारः = अहम्भावरहितः, चलति = वर्तते, सः = सः पुमान्, शान्तिम् = सुखम्, अधिगच्छति = प्राप्नोति।

**अन्वयः** – यः पुमान् सर्वान् कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः चलति सः शान्तिम् अधिगच्छति।

**आकाङ्क्षा** –

**चलति**।

**कः** चलति ? – **पुमान्** चलति।

**कीदृशः** पुमान् चलति ? – **निःस्पृहः** पुमान् चलति।

निःस्पृहः **पुनश्च कीदृशः** पुमान् चलति ? – निःस्पृहः **निर्ममः** पुमान् चलति।

निःस्पृहः निर्ममः **पुनश्च कीदृशः** पुमान् चलति ? – निःस्पृहः निर्ममः **निरहङ्कारः** पुमान् चलति।

निःस्पृहः निर्ममः निरहङ्कारः **किं कृत्वा** पुमान् चलति ? – निःस्पृहः निर्ममः निरहङ्कारः **विहाय** पुमान् चलति।

**कान्** विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति ?
– **कामान्** विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति।

**कति** कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति ?
– **सर्वान्** कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति।

**यः** सर्वान् कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति **तस्य किं भवति ?**

– **यः** सर्वान् कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति **सः अधिगच्छति** ।

यः सर्वान् कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति सः **काम्** अधिगच्छति ?

– यः सर्वान् कामान् विहाय निःस्पृहः निर्ममः निरहङ्कारः पुमान् चलति सः **शान्तिम्** अधिगच्छति ।

**तात्पर्यम् –** यः पुरुषः सर्वान् अपि कामान् परित्यजति, निःस्पृहः निर्ममः निरहङ्कारः च भवति सः निश्चयेन शान्तिं प्राप्नोति ।

**माध्वमतम्–** यः अनिषिद्धविषयान् सर्वान् अभिमानत्यागपूर्वकम् अनुभवति तादृशः अहङ्कारममकारवर्जितः पुरुषः मोक्षं भजति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पुमांश्चलति | – पुमान् + चलति | रुत्वम्, अनुस्वारागमः, विसर्गः, सकारः, श्चुत्वं च |
| | निर्ममो निरहङ्कारः | – निर्ममः + निरहङ्कारः | विसर्गसन्धिः (सकार) रेफः, उकारः, गुणः |
| | स शान्तिम् | – सः + शान्तिम् | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | निःस्पृहः | – निर्गता स्पृहा यस्मात् सः – बहुव्रीहिः । | |
| | निर्ममः | – निर्गतः ममः यस्मात् सः – बहुव्रीहिः । | |
| | निरहङ्कारः | – निर्गतः अहङ्कारः यस्मात् सः – बहुव्रीहिः । | |

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥2.72॥**

**पदच्छेदः –** एषा, ब्राह्मी, स्थितिः, पार्थ, न, एनाम्, प्राप्य, विमुह्यति ।
स्थित्वा, अस्याम्, अन्तकाले, अपि, ब्रह्मनिर्वाणम्, ऋच्छति ॥

**पदपरिचयः –**

| पदम् | विवरणम् | पदम् | विवरणम् |
|---|---|---|---|
| एषा | – एतद्–द. सर्व. स्त्री. प्र. एक. | ब्राह्मी – | ई.स्त्री.प्र.एक. |
| स्थितिः | – इ. स्त्री. प्र. एक. | पार्थ – | अ. पुं. सम्बो. एक. |
| एनाम् | – एतद्–द.सर्व. स्त्री. द्वि. एक. | प्राप्य – | ल्यबन्तम् अव्ययम् |
| विमुह्यति | – वि+मुह्–पर.लट्. प्रपु. एक. | स्थित्वा – | क्त्वान्तम् अव्ययम् |
| अस्याम् | – इदम्–म. सर्व. स्त्री. स. एक. | अन्तकाले– | अ. पुं. स.एक. |
| ब्रह्मनिर्वाणम् | – अ. नपुं. द्वि. एक. | ऋच्छति – | ऋ–पर. कर्तरि लट्. प्रपु. एक. |

**पदार्थः** – पार्थ = अर्जुन ! एषा = इयम्, ब्राह्मी = परमात्मसम्बन्धिनी, स्थितिः = निष्ठा, एनाम् = एताम्, प्राप्य = लब्ध्वा, न विमुह्यति = मोही न भवति, अन्तकाले अपि = मरणसमये अपि, अस्याम् = एतस्याम्,

स्थित्वा = वर्तित्वा, ब्रह्मनिर्वाणम् = ब्रह्मनिर्वाणम्, ऋच्छति = लभते ।

**अन्वयः –** पार्थ ! एषा ब्राह्मी स्थितिः । एनां प्राप्य न विमुह्यति । अन्तकाले अपि अस्यां स्थित्वा ब्रह्मनिर्वाणम् ऋच्छति ।

**आकाङ्क्षा –**

**स्थितिः** ।

**का** स्थितिः ? – **एषा** स्थितिः ।

एषा **कीदृशी** स्थितिः ? – एषा **ब्राह्मी** स्थितिः ।

**न विमुह्यति** ।

**किं कृत्वा** न विमुह्यति ? – **प्राप्य** न विमुह्यति ।

**कां** प्राप्य न विमुह्यति ? – **एनां** प्राप्य न विमुह्यति ।

**ऋच्छति** ।

**किम्** ऋच्छति ? – **ब्रह्मनिर्वाणम्** ऋच्छति ।

**किं कृत्वा** ब्रह्मनिर्वाणम् ऋच्छति ? – **स्थित्वा** ब्रह्मनिर्वाणम् ऋच्छति ।

**कस्यां** स्थित्वा ब्रह्मनिर्वाणम् ऋच्छति ? – **अस्यां** स्थित्वा ब्रह्मनिर्वाणम् ऋच्छति ।

**कदा** अपि अस्यां स्थित्वा ब्रह्मनिर्वाणम् ऋच्छति ? – **अन्तकाले** अपि अस्यां स्थित्वा ब्रह्मनिर्वाणम् ऋच्छति ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **पार्थ ।**

**तात्पर्यम् –** हे पार्थ ! इयं ब्राह्मी स्थितिः इति उच्यते । एनां स्थितिं यः प्राप्नोति सः कदापि मोहवशः न भवति । अन्तकाले अपि अस्यां स्थितौ स्थित्वा सः ब्रह्मानन्दं प्राप्नोति ।

**माध्वमतम् –** निषिद्धकामेच्छां परित्यज्य भगवत्स्मरणशीलः यः भवति सः ब्रह्मज्ञानी इति उच्यते । ब्रह्मज्ञानप्राप्त्यनन्तरं तस्य मोहः न पुनः सञ्जायते । सः मरणकालेऽपि परमात्मानं स्मरिष्यति । तदा प्राकृतशरीररहितं ब्रह्म (निर्वाणं ब्रह्म) आप्नोति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नैनाम् | – न + एनाम् | वृद्धिसन्धिः |
| | स्थित्वास्याम् | – स्थित्वा + अस्याम् | सवर्णदीर्घसन्धिः |
| | अन्तकालेऽपि | – अन्तकाले + अपि | पूर्वरूपसन्धिः |
| **(ख) समासः** | ब्रह्मनिर्वाणम् | – ब्रह्मणि निर्वाणम् – सप्तमीतत्पुरुषः । | |
| | अन्तकाले | – अन्तस्य कालः, तस्मिन् – षष्ठीतत्पुरुषः | |
| **(ग) कृदन्तः** | स्थितिः | – स्था + क्तिन् । (भावे) | |
| | प्राप्य | – प्र + आप् + ल्यप् । | |
| | स्थित्वा | – स्था + क्त्वा । | |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
साङ्ख्ययोगो नाम द्वितीयोऽध्यायः ॥

श्रीमद्भगवद्गीता

अथ तृतीयोऽध्यायः

## कर्मयोगः

**अर्जुन उवाच –** **ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥3.1॥**

**पदार्थः –** जनार्दन = हे कृष्ण ! बुद्धिः = ज्ञानम्, कर्मणः = कर्मापेक्षया, ज्यायसी = अतिशयेन प्रशस्ता, ते = तव, मता चेत् = अभिमता चेत्, तत् = तर्हि, केशव = कृष्ण ! माम् = माम्, घोरे = क्रूरे, कर्मणि = युद्धकार्ये, किम् = किमर्थम्, नियोजयसि = आयोजयसि ।

**अन्वयः –** जनार्दन ! बुद्धिः कर्मणः ज्यायसी ते मता चेत्, केशव ! तत् घोरे कर्मणि मां किं नियोजयसि ?

**आकाङ्क्षा –**

**मता** ।

**का** मता ? – **बुद्धिः मता** ।

बुद्धिः **कीदृशी** मता ? – बुद्धिः **ज्यायसी** मता ।

बुद्धिः **कस्मात्** ज्यायसी मता ? – बुद्धिः **कर्मणः** ज्यायसी मता ।

बुद्धिः कर्मणः ज्यायसी **कस्य** मता ? – बुद्धिः कर्मणः ज्यायसी **ते** मता ।

बुद्धिः कर्मणः ज्यायसी ते मता **चेत् तत् किं करोषि** ?

– बुद्धिः कर्मणः ज्यायसी ते मता **चेत् तत् नियोजयसि** ।

बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् **कुत्र** नियोजयसि ?

– बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् **कर्मणि** नियोजयसि ।

बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् **कीदृशे** कर्मणि नियोजयसि ?

– बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् **घोरे** कर्मणि नियोजयसि ।

बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् घोरे कर्मणि **कं** नियोजयसि ?

– बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् घोरे कर्मणि **मां** नियोजयसि ।

बुद्धिः कर्मणः ज्यायसी ते मता चेत् तत् घोरे कर्मणि मां **किं** नियोजयसि ।

श्लोके सम्बोधनपदे के ? – **जनार्दन । केशव ।**

**तात्पर्यम् –** हे भगवन् ! यदि कर्मणः अपेक्षया ज्ञानमेव श्रेष्ठमिति भवान् अभिप्रैति तर्हि मां किमर्थं क्रूरे युद्धकर्मणि नियोजयसि ?

---

**वि.सू.** – अस्मिन् अध्याये इतः अग्रिमेषु अध्यायेषु च पदच्छेदः पृथक् न प्रदर्श्यते । अन्वये तु सन्धिरहितानि पदानि दर्शितानि सन्ति, येन पदच्छेदः अनायासेन ज्ञातुं शक्यते । पदपरिचयः अपि अत्र अग्रे च न प्रदर्श्यते ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | कर्मणस्ते | – | कर्मणः + ते | विसर्गसन्धिः (सकारः) |
| | बुद्धिर्जनार्दन | – | बुद्धिः + जनार्दन | विसर्गसन्धिः (रेफः) |
| **(ख) कृदन्तः** | जनार्दन | – | दृश्यताम् – 1.36 | |
| **(ग) तद्धितान्तः** | ज्यायसी | – | प्रशस्य / वृद्ध + ईयसुन् (ज्य इति आदेशः) | |

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥3.2॥**

**पदार्थः –** व्यामिश्रेण इव = सङ्कीर्णेन इव, वाक्येन = वचनेन, मे = मम, बुद्धिम् = मतिम्, मोहयसि = भ्रामयसि, तत् = तस्मात्, एकम् = तादृशं प्रमुखम् (मार्गम्), निश्चित्य = निर्धार्य, वद = कथय, येन अहम् = येन अहम्, श्रेयः = अतिशयेन प्रशस्तम्, आप्नुयाम् = प्राप्नुयाम् ।

**अन्वयः –** व्यामिश्रेण इव वाक्येन मे बुद्धिं मोहयसि । तद् येन अहं श्रेयः आप्नुयाम् (तादृशम्) एकं निश्चित्य वद ।

**आकाङ्क्षा –**

**मोहयसि ।**

**कां** मोहयसि इव ? – **बुद्धिं** मोहयसि इव ।

**कस्य** बुद्धिं मोहयसि इव ? – **मे** बुद्धिं मोहयसि इव ।

**केन** मे बुद्धिं मोहयसि इव ? – **वाक्येन** मे बुद्धिं मोहयसि इव ।

**कीदृशेन** वाक्येन मे बुद्धिं मोहयसि इव ? – **व्यामिश्रेण** वाक्येन मे बुद्धिं मोहयसि इव ।

**तत् वद ।**

तत् **किं** वद ? – तत् **एकं** वद ।

तत् **कीदृशम्** एकं वद ? – तत् **येन अहं श्रेयः आप्नुयाम् (तादृशम्) एकं** वद ।

तत् येन अहं श्रेयः आप्नुयाम् (तादृशम्) एकं **किं कृत्वा** वद ?

– तत् येन अहं श्रेयः आप्नुयाम् (तादृशम्) एकं **निश्चित्य** वद ।

**तात्पर्यम् –** हे कृष्ण ! ज्ञानस्य श्रेष्ठत्वेन कर्मणश्च कर्तव्यत्वेन उपदिशन् मां भ्रामयन् असि । अतः येन अहं श्रेयः प्राप्नुयां तन्निश्चित्य वद ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | मोहयसीव | – मोहयसि + इव | सवर्णदीर्घसन्धिः |
| | तदेकम् | – तत् + एकम् | जश्त्वसन्धिः |
| | श्रेयोऽहम् | – श्रेयः + अहम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| **(ख) कृदन्तः** | निश्चित्य | – निस् + चि + ल्यप् । | |
| **(ग) तद्धितान्तः** | श्रेयः | – प्रशस्य + ईयसुन् (अतिशये) । (श्र इति आदेशः) | |

**श्रीभगवान् उवाच –** **लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ।।3.3।।**

**पदार्थः –** अनघ = हे पापरहित ! अस्मिन् = एतस्मिन्, लोके = प्रपञ्चे, पुरा = पूर्वम्, मया = अनेन मया, ज्ञानयोगेन = आत्म-अनात्मविवेकेन, साङ्ख्यानाम् = संन्यासिनाम्, कर्मयोगेन = कर्माचरणेन, योगिनाम् = कर्मासक्तानाम्, द्विविधा = उभयविधा, निष्ठा = व्यवस्था, प्रोक्ता = वर्णिता ।

**अन्वयः –** अनघ ! अस्मिन् लोके पुरा मया ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् (इति) द्विविधा निष्ठा प्रोक्ता ।

**आकाङ्क्षा –**

**प्रोक्ता ।**

**केन** प्रोक्ता ? – **मया** प्रोक्ता ।

**कदा** मया प्रोक्ता ? – **पुरा** मया प्रोक्ता ।

पुरा मया **का** प्रोक्ता ? – पुरा मया **निष्ठा** प्रोक्ता ।

पुरा मया निष्ठा **कतिधा** प्रोक्ता ? – पुरा मया निष्ठा **द्विविधा** प्रोक्ता ।

**कुत्र** पुरा मया द्विविधा निष्ठा प्रोक्ता ? – **लोके** पुरा मया द्विविधा निष्ठा प्रोक्ता ।

**कस्मिन्** लोके पुरा मया द्विविधा निष्ठा प्रोक्ता ? – **अस्मिन्** लोके पुरा मया द्विविधा निष्ठा प्रोक्ता ।

अस्मिन् लोके मया **केषां** द्विविधा निष्ठा प्रोक्ता ?

– अस्मिन् लोके मया **साङ्ख्यानां योगिनां च** द्विविधा निष्ठा प्रोक्ता ।

अस्मिन् लोके मया साङ्ख्यानां **पुनश्च केषां** द्विविधा निष्ठा प्रोक्ता ?

– अस्मिन् लोके मया **ज्ञानयोगेन** साङ्ख्यानां **कर्मयोगेन** योगिनम् (इति) द्विविधा निष्ठा प्रोक्ता ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? **– अनघ ।**

**तात्पर्यम् –** हे अर्जुन ! साङ्ख्यानां कृते ज्ञानमार्गः योगिनां कृते कर्ममार्गश्च इति द्विविधो मार्गः मया प्रागेव प्रोक्तः ।

**माध्वमतम् –** लोकेऽस्मिन् द्विविधाः जनाः सन्ति । ज्ञाननिष्ठाः अपि सनकादिमुनयः लोकसङ्ग्रहार्थम् ईषत् कर्म कुर्वन्ति । निष्कामकर्मनिष्ठाः अपि जनाकादयः ईषत् ज्ञानं सम्पादयन्ति । तावुभौ अपि मुक्तियोग्यौ । तस्मात् भवान् जनकादिवत् सकर्मैव ज्ञानयोग्योऽसि ।

**व्याकरणम् –**

| | | |
|---|---|---|
| **(क) सन्धिः** | लोकेऽस्मिन् | – लोके + अस्मिन् पूर्वरूपसन्धिः |
| **(ख) समासः** | अनघः | – न विद्यते अघं यस्य सः – नञ्बहुव्रीहिः । |
| | ज्ञानयोगः | – ज्ञानम् एव योगः – कर्मधारयः । |
| | कर्मयोगः | – कर्म एव योगः – कर्मधारयः । |
| **(ग) कृदन्तः** | निष्ठा | – नि + स्था + अङ् (भावे) । व्यवस्थाः इत्यर्थः । |
| | प्रोक्ता | – प्र + वच् + क्त (कर्मणि) । |
| **(घ) तद्धितान्तः** | योगिनाम् | – योग + इनि (मतुबर्थे) । योगः एषाम् एषु वा अस्ति, तेषाम् । |

साङ्ख्यानाम् - सङ्ख्या + अण् (भवार्थे) सङ्ख्यायां(बुद्धौ)भवाः, तेषाम् ।

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥3.4॥**

**पदच्छेदः** - न, कर्मणाम्, अनारम्भात्, नैष्कर्म्यम्, पुरुषः, अश्नुते ।
न, च, संन्यसनात्, एव, सिद्धिम्, समधिगच्छति ॥

**पदार्थः** - पुरुषः = मनुष्यः, कर्मणाम् = क्रियाणाम्, अनारम्भात् = अनाचरणात्, नैष्कर्म्यम् = कर्मराहित्यम्, न अश्नुते = न लभते, संन्यसनात् = सर्वकर्मपरित्यागात्, सिद्धिं च = आत्मज्ञानं च, न समधिगच्छति = न सम्प्राप्नोति ।

**अन्वयः** - पुरुषः कर्मणाम् अनारम्भात् नैष्कर्म्यं न अश्नुते । (कर्मणाम्) संन्यसनात् एव सिद्धिं च न समधिगच्छति ।

**आकाङ्क्षा** -

**न अश्नुते ।**

| | |
|---|---|
| **किं** न अश्नुते ? | - **नैष्कर्म्यं** न अश्नुते । |
| **कस्मात्** नैष्कर्म्यं न अश्नुते ? | - **अनारम्भात्** नैष्कर्म्यं न अश्नुते । |
| **केषाम्** अनारम्भात् नैष्कर्म्यं न अश्नुते ? | - **कर्मणाम्** अनारम्भात् नैष्कर्म्यं न अश्नुते । |
| कर्मणाम् अनारम्भात् **कः** नैष्कर्म्यं न अश्नुते ? | - कर्मणाम् अनारम्भात् **पुरुषः** नैष्कर्म्यं न अश्नुते । |

**न समधिगच्छति ।**

| | |
|---|---|
| **कां** न समधिगच्छति ? | - **सिद्धिं च** न समधिगच्छति । |
| सिद्धिं **कस्मात् एव** न समधिगच्छति ? | - सिद्धिं (कर्मणाम्) **संन्यसनात् एव** न समधिगच्छति । |

**तात्पर्यम्** - मनुष्यः कर्मणः अनाचरणेन निष्कर्मतां न लभते । तथा कर्मत्यागमात्रेण आत्मज्ञानमपि न विन्दति ।

**रामानुजीयमतम्** - नैष्कर्म्यम् = ज्ञाननिष्ठा ।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अनारम्भान्नैष्कर्म्यम् | - अनारम्भात् + नैष्कर्म्यम् | अनुनासिकसन्धिः |
| | पुरुषोऽश्नुते | - पुरुषः + अश्नुते | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः, पूर्वरूपं च |
| | संन्यसनात् | - सम् + न्यसनात् | अनुस्वारः, अनुनासिकसन्धिश्च |
| **(ख) समासः** | अनारम्भात् | - न आरम्भः अनारम्भः, तस्मात् - नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | संन्यसनात् | - सम् + नि +अस् + ल्युट् । (भावे) तस्मात् । | |
| **(घ) तद्धितान्तः** | नैष्कर्म्यम् | - निष्कर्म + ष्यञ् । निष्कर्मणः भावः इत्यर्थः । | |

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥3.5॥**

**पदार्थः** - कश्चित् = कोऽपि मनुष्यः, जातु = कदापि, क्षणमपि = क्षणकालमपि, अकर्मकृत् =कर्मरहितः,

न हि तिष्ठति = नैव वर्तते, हि = यतः, सर्वः = सर्वोऽपि, प्रकृतिजैः = प्रकृतिरूपैः, गुणैः = सत्त्वरजस्तमोभिः, अवशः = परवशः भूत्वा, कर्म = कर्म कर्तुम्, कार्यते = चोद्यते ।

**अन्वयः** – कश्चित् जातु क्षणमपि अकर्मकृत् न हि तिष्ठति । सर्वः हि प्रकृतिजैः गुणैः अवशः कर्म कार्यते ।

**आकाङ्क्षा** –

**न तिष्ठति** ।

| | |
|---|---|
| **कः** न तिष्ठति ? | – **कश्चित्** न तिष्ठति । |
| कश्चित् **कथंभूतः** न तिष्ठति ? | – कश्चित् **अकर्मकृत्** न तिष्ठति । |
| कश्चित् **कथम्** अकर्मकृत् न तिष्ठति ? | – कश्चित् **क्षणमपि** अकर्मकृत् न तिष्ठति । |
| कश्चित् **कदा** क्षणमपि अकर्मकृत् न तिष्ठति ? | – कश्चित् **जातु** क्षणमपि अकर्मकृत् न तिष्ठति । |

**कार्यते** ।

| | |
|---|---|
| **किं** कार्यते ? | – **कर्म** कार्यते । |
| **कथं** कर्म कार्यते ? | – **अवशः** कर्म कार्यते । |
| **कैः** अवशः कर्म कार्यते ? | – **गुणैः** अवशः कर्म कार्यते । |
| **कीदृशैः** गुणैः अवशः कर्म कार्यते ? | – **प्रकृतिजैः** गुणैः अवशः कर्म कार्यते । |
| **कः** प्रकृतिजैः गुणैः अवशः कर्म कार्यते ? | – **सर्वः** प्रकृतिजैः गुणैः अवशः कर्म कार्यते । |
| **कस्मात्** प्रकृतिजैः गुणैः अवशः कर्म कार्यते ? | – **सर्वः हि** प्रकृतिजैः गुणैः अवशः कर्म कार्यते । |

**तात्पर्यम्** – यः कोऽपि कदापि क्षणकालमपि कर्मरहितः सन् न भवति यतः सर्वेऽपि प्रकृतिसम्भूतैः विकारैः विवशाः सन्तः कर्मकरणे प्रवर्तन्ते ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | तिष्ठत्यकर्मकृत् | – | तिष्ठति + अकर्मकृत् | यणसन्धिः |
| | ह्यवशः | – | हि + अवशः | यण्सन्धिः |
| | प्रकृतिजैर्गुणैः | – | प्रकृतिजैः + गुणैः | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | अकर्मकृत् | – | न कर्मकृत् – | नञ्तत्पुरुषः । |
| | अवशः | – | न वशः – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | वशः | – | वश् + अच् । (कर्मणि) | |

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥3.6॥**

**पदार्थः** – यः विमूढात्मा = यः अविवेकी पुरुषः, कर्मेन्द्रियाणि = वाक्-पाणि-पाद-पायु-उपस्थान्, संयम्य = निरुध्य, मनसा = चित्तेन, इन्द्रियार्थान् = विषयान्, स्मरन् = चिन्तयन्, आस्ते = वर्तते, सः = सः पुरुषः, मिथ्याचारः = दम्भी, उच्यते = कथ्यते ।

**अन्वयः** – यः विमूढात्मा कर्मेन्द्रियाणि संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते सः मिथ्याचारः उच्यते ।

**आकाङ्क्षा –**

**आस्ते** ।

**कः** आस्ते ? – **विमूढात्मा** आस्ते ।

विमूढात्मा **किं कुर्वन्** आस्ते ? – विमूढात्मा **स्मरन्** आस्ते ।

विमूढात्मा **कान्** स्मरन् आस्ते ? – विमूढात्मा **इन्द्रियार्थान्** स्मरन् आस्ते ।

विमूढात्मा इन्द्रियार्थान् **केन** स्मरन् आस्ते ? – विमूढात्मा इन्द्रियार्थान् **मनसा** स्मरन् आस्ते ।

विमूढात्मा **किं कृत्वा** इन्द्रियार्थान् मनसा स्मरन् आस्ते ?

– विमूढात्मा **संयम्य** इन्द्रियार्थान् मनसा स्मरन् आस्ते ।

विमूढात्मा **कानि** संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते ?

– विमूढात्मा **कर्मेन्द्रियाणि** संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते ।

**यः** विमूढात्मा कर्मेन्द्रियाणि संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते **तस्य किं भवति ?**

– **यः** विमूढात्मा कर्मेन्द्रियाणि संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते **सः उच्यते** ।

यः विमूढात्मा कर्मेन्द्रियाणि संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते सः **कीदृशः** उच्यते ?

– यः विमूढात्मा कर्मेन्द्रियाणि संयम्य इन्द्रियार्थान् मनसा स्मरन् आस्ते सः **मिथ्याचारः** उच्यते ।

**तात्पयम् –** यः अविवेकी पुरुषः इन्द्रियाणि निरुध्य चित्तेन विषयान् चिन्तयन् भवति सः पुरुषः कपटाचारः इति कथ्यते ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | य आस्ते | – यः + आस्ते | विसर्गसन्धिः (लोपः) |
| | स उच्यते | – सः + उच्यते | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | कर्मेन्द्रियाणि | – कर्मणः इन्द्रियाणि | – षष्ठीतत्पुरुषः । |
| | इन्द्रियार्थान् | – इन्द्रियाणाम् अर्थाः, तान् – षष्ठीतत्पुरुषः । | |
| | विमूढात्मा | – विमूढः आत्मा यस्य सः – बहुव्रीहिः । | |
| | मिथ्याचारः | – मिथ्या आचारः यस्य सः – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | संयम्य | – सम् + यम् + ल्यप् । | |
| | स्मरन् | – स्मृ + शतृ (कर्तरि) । | |
| | विमूढः | – वि + मुह् + क्त (कर्तरि) । | |

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥3.7॥**

**पदार्थः –** अर्जुन = हे पार्थ ! यः तु = यः पुरुषः पुनः, मनसा = चित्तेन, इन्द्रियाणि = नेत्रादीनि, नियम्य = वशीकृत्य, असक्तः = सङ्गरहितः, कर्मेन्द्रियैः = हस्तादिभिः, कर्मयोगम् = कर्माचरणम्, आरभते = प्रारभते, सः = सः पुरुषः, विशिष्यते = उत्कृष्टः भवति ।

**अन्वयः –** अर्जुन ! यः तु असक्तः इन्द्रियाणि मनसा नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते सः विशिष्यते ।

**आकाङ्क्षा –**

**आरभते ।**

**कः** आरभते ? – **असक्तः** आरभते ।

असक्तः **कम्** आरभते ? – असक्तः **कर्मयोगम्** आरभते ।

असक्तः **कैः** कर्मयोगम् आरभते ? – असक्तः **कर्मेन्द्रियैः** कर्मयोगम् आरभते ।

असक्तः **किं कृत्वा** कर्मेन्द्रियैः कर्मयोगम् आरभते ?– असक्तः **नियम्य** कर्मेन्द्रियैः कर्मयोगम् आरभते ।

असक्तः **कानि** नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते ?

– असक्तः **इन्द्रियाणि** नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते ।

असक्तः इन्द्रियाणि **केन** नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते ?

– असक्तः इन्द्रियाणि **मनसा** नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते ।

**यः** असक्तः इन्द्रियाणि मनसा नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते **सः कीदृशः भवति** ?

– **यः** असक्तः इन्द्रियाणि मनसा नियम्य कर्मेन्द्रियैः कर्मयोगम् आरभते **सः विशिष्यते** ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **अर्जुन** ।

**तात्पर्यम् –** अर्जुन ! यः मनुष्यः चित्तेन ज्ञानेन्द्रियाणि वशीकृत्य सङ्गरहितः सन् वाक्पाण्यादिभिः कर्म प्रारभते सः मनुष्यः श्रेष्ठः इति परिगण्यते ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कर्मेन्द्रियैः | – कर्म + इन्द्रियैः | गुणसन्धिः |
| | यस्त्विन्द्रियाणि | – यः + त्विन्द्रियाणि | विसर्गसन्धिः (सकारः) |
| | | – तु + इन्द्रियाणि | यण्सन्धिः |
| | नियम्यारभतेऽर्जुन | – नियम्य + आरभते | सवर्णदीर्घसन्धिः |
| | | आरभते + अर्जुन | पूर्वरूपसन्धिः |
| **(ख) समासः** | असक्तः | – न सक्तः – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | नियम्य | – नि + यम् + ल्यप् । | |
| | सक्तः | – सञ्ज + क्त (कर्तरि) | |

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥3.8॥**

**पदार्थः –** त्वम् = त्वम्, नियतम् = निर्दिष्टम्, कर्म = कर्म, कुरु = आचर, हि = यतः, अकर्मणः = कर्माभावात्, कर्म = कर्माचरणम्, ज्यायः = श्रेष्ठम्, अकर्मणः = कर्माभावात्, ते = तव, शरीरयात्रा अपि = देहयात्रा अपि, न प्रसिद्ध्येत् = न जायेत् ।

**अन्वयः –** त्वं नियतं कर्म कुरु, कर्म हि अकर्मणः ज्यायः । अकर्मणः ते शरीरयात्रापि न प्रसिद्ध्येत् ।

**आकाङ्क्षा –**

**त्वं कुरु।**

| | |
|---|---|
| त्वं **किं** कुरु ? | – त्वं **कर्म** कुरु। |
| त्वं **कथं** कर्म कुरु ? | – त्वं **नियतं** कर्म कुरु। |
| त्वं नियतं कर्म कुरु। **कुतः** ? | – त्वं नियतं कर्म कुरु। **कर्म हि ज्यायः**। |
| त्वं नियतं कर्म कुरु। कर्म **कस्मात्** ज्यायः ? | – त्वं नियतं कर्म कुरु। कर्म हि **अकर्मणः** ज्यायः। |

**न प्रसिद्ध्येत्।**

| | |
|---|---|
| **का** न प्रसिद्ध्येत् ? | – **शरीरयात्रा अपि** न प्रसिद्ध्येत्। |
| **कस्य** शरीरयात्रापि न प्रसिद्ध्येत् ? | – **ते** शरीरयात्रापि न प्रसिद्ध्येत्। |
| **कीदृशस्य** ते शरीरयात्रापि न प्रसिद्ध्येत् ? | – **अकर्मणः** ते शरीरयात्रापि न प्रसिद्ध्येत्। |

**तात्पर्यम् –** भवान् नित्यं यस्मिन् कर्मणि अधिकृतः तत् कर्म आचरतु। कर्मणः अनाचरणात् कर्माचरणं श्रेष्ठं वर्तते। किञ्च कर्माभावे भवतः शरीरसंरक्षणमपि कर्तुं न शक्यते।

**रामानुजीयमतम् –** अकर्म = ज्ञाननिष्ठा।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **क) सन्धिः** | ज्यायो हि | – | ज्यायः + हि | विसर्गसन्धिः (सकारः) रेफः,उकारः, गुणः |
| | ह्यकर्मणः | – | हि + अकर्मणः | यणसन्धिः |
| | शरीरयात्रापि | – | शरीरयात्रा + अपि | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | शरीरयात्रा | – | शरीरस्य यात्रा – षष्ठीतत्पुरुषः। | |
| | अकर्मणः | – | न कर्म, तस्य – नञ्तत्पुरुषः। | |
| **(ग) कृदन्तः** | नियतम् | – | नि + यम् + क्त (कर्मणि) | |
| **(घ) तद्धितान्तः** | ज्यायः | – | प्रशस्य / वृद्ध + ईयसुन् (ज्य इति आदेशः) | |

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥3.9॥**

**पदार्थः –** यज्ञार्थात् = विष्णुप्राप्तिरूपात् प्रयोजनात्, कर्मणः = कर्मणः अपेक्षया, अन्यत्र = इतरत्र (संलग्नः) अयं लोकः = एषः प्रपञ्चः, कर्मबन्धनः = कर्मबन्धवान् भवति, कौन्तेय = अर्जुन ! तदर्थं = यज्ञार्थम्, मुक्तसङ्गः = त्यक्तसङ्गो भूत्वा, कर्म = शास्त्रोक्तं कर्म, समाचर = आचर।

**अन्वयः –** यज्ञार्थात् कर्मणः अन्यत्र अयं लोकः कर्मबन्धनः भवति। तदर्थं कौन्तेय ! मुक्तसङ्गः कर्म समाचर।

**आकाङ्क्षा –**

**कर्मबन्धनः।**

| | |
|---|---|
| **कः** कर्मबन्धनः ? | – **लोकः** कर्मबन्धनः। |
| **कः** लोकः कर्मबन्धनः ? | – अयं लोकः कर्मबन्धनः। |
| अयं लोकः **कुत्र** कर्मबन्धनः ? | – अयं लोकः **अन्यत्र** कर्मबन्धनः। |

अयं लोकः **कस्मात्** अन्यत्र कर्मबन्धनः ? — अयं लोकः **कर्मणः** अन्यत्र कर्मबन्धनः ।

अयं लोकः **कीदृशात्** कर्मणः अन्यत्र कर्मबन्धनः ? — अयं लोकः **यज्ञार्थात्** कर्मणः अन्यत्र कर्मबन्धनः ।

अयं लोकः यज्ञार्थात् कर्मणः अन्यत्र कर्मबन्धनः । **तेन किम् ?**

— अयं लोकः यज्ञार्थात् कर्मणः अन्यत्र कर्मबन्धनः । **तदर्थं समाचर** ।

अयं लोकः यज्ञार्थात् कर्मणः अन्यत्र कर्मबन्धनः । तदर्थं **किं** समाचर ?

— अयं लोकः यज्ञार्थात् कर्मणः अन्यत्र कर्मबन्धनः । तदर्थं **कर्म** समाचर ।

अयं लोकः यज्ञार्थात् कर्मणः अन्यत्र कर्मबन्धनः । तदर्थं **कीदृशः** कर्म समाचर ?

— अयं लोकः यज्ञार्थात् कर्मणः अन्यत्र कर्मबन्धनः । तदर्थं **मुक्तसङ्गः** कर्म समाचर ।

**तात्पर्यम् –** येन विष्णोः प्राप्तिः भवति ततोऽतिरिक्तं सर्वमपि कर्म जनानां बन्धकं भवति । तस्मात् फलापेक्षारहितः सन् शास्त्रोक्तं स्वकीयं कर्म समाचर ।

**माध्वमतम्–**भगवत्प्रीतये कृतानि कर्माणि बन्धकानि न भवन्ति । तत्प्रीत्युद्देशं विना कृतानि बन्धकानि भवन्ति । तदर्थं कामनां विहाय भगवत्प्रीत्यै कर्म कुरु ।

**व्याकरणम् –**

| | | |
|---|---|---|
| **(क) सन्धिः** | कर्मणोऽन्यत्र | – कर्मणः + अन्यत्र विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | लोकोऽयम् | – लोकः + अयम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | कर्मबन्धनः | – कर्म बन्धनं यस्य सः – बहुव्रीहिः । |
| | मुक्तसङ्गः | – मुक्तः सङ्गः येन सः – बहुव्रीहिः । |
| **(ग) कृदन्तः** | बन्धनम् | – बन्ध + ल्युट् । (करणे) बध्यते अनेन इत्यर्थः । |

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥3.10॥**

**पदार्थः –** प्रजापतिः = सृष्टिकर्ता, पुरा = पूर्वम्, सहयज्ञाः = कर्माधिकृताः, प्रजाः = मानवान्, सृष्ट्वा = विधाय, उवाच = अवदत्, अनेन = एतेन (यज्ञेन), प्रसविष्यध्वम् = वृद्धिं प्राप्नुवन्तु, एषः = अयम्(यज्ञः), वः इष्टकामधुक् = भवताम् अभीष्टदाता, अस्तु = भवतु ।

**अन्वयः –** प्रजापतिः पुरा सहयज्ञाः प्रजाः सृष्ट्वा उवाच । अनेन (यज्ञेन) प्रसविष्यध्वम् । एषः वः इष्टकामधुक् अस्तु ।

**आकाङ्क्षा –**

**उवाच** ।

**कः** उवाच ? — **प्रजापतिः** उवाच ।

प्रजापतिः **कदा** उवाच ? — प्रजापतिः **पुरा** उवाच ।

प्रजापतिः **किं कृत्वा** पुरा उवाच ? — प्रजापतिः **सृष्ट्वा** पुरा उवाच ।

प्रजापतिः **काः** सृष्ट्वा पुरा उवाच ? — प्रजापतिः **प्रजाः** सृष्ट्वा पुरा उवाच ।

प्रजापतिः **कीदृशीः** प्रजाः सृष्ट्वा पुरा उवाच ? — प्रजापतिः **सहयज्ञाः** प्रजाः सृष्ट्वा पुरा उवाच ।

प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच। **किम्** ?

– प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – **प्रसविष्यध्वम्**।

प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – **केन** प्रसविष्यध्वम् ?

– प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – **अनेन** प्रसविष्यध्वम् ?

प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – अनेन प्रसविष्यध्वम्। **पुनश्च किम्** ?

– प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – अनेन प्रसविष्यध्वम्। **अस्तु**।

प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – अनेन प्रसविष्यध्वम्। **कः** अस्तु ?

– प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – अनेन प्रसविष्यध्वम्। **एषः** (यज्ञः) अस्तु।

प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – अनेन प्रसविष्यध्वम्। एषः (यज्ञः) **कीदृशः** अस्तु ?

– प्रजापतिः सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच – अनेन प्रसविष्यध्वम्। एषः यज्ञः **इष्टकामधुक्** अस्तु।

प्रजापतिः ......... पुरा उवाच। अनेन प्रसविष्यध्वम् – एषः यज्ञः **केषाम्** इष्टकामधुक् अस्तु ?

– प्रजापतिः ......... पुरा उवाच। अनेन प्रसविष्यध्वम् – एषः यज्ञः **वः** इष्टकामधुक् अस्तु।

**तात्पर्यम्** – सृष्टिकर्ता कल्पादौ वर्णोचितकर्मणा सह प्रजाः सृष्ट्वा अनेन कर्मणा भवन्तः वृद्धिं प्राप्नुवन्तु, इदं कर्म भवताम् अभीष्टदायकं भवतु इत्यवदत्।

**व्याकरणम्** –

**(क) सन्धिः** पुरोवाच – पुरा + उवाच गुणसन्धिः

एष वः – एषः + वः विसर्गसन्धिः (लोपः)

वोऽस्तु – वः + अस्तु विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

अस्त्विष्टकामधुक् – अस्तु + इष्टकामधुक् यण्सन्धिः

**(ख) समासः** सहयज्ञाः – यज्ञेन सह वर्तन्ते – बहुव्रीहिः।

प्रजापतिः – प्रजानां पतिः – षष्ठीतत्पुरुषः।

इष्टकामधुक् – इष्टाश्च ते कामाश्च इष्टकामाः – कर्मधारयः।

इष्टकामान् दोग्धि – कर्तरि क्विप् उपपदसमासश्च।

**(ग) कृदन्तः** सृष्ट्वा – सृज् + क्त्वा।

**देवान्भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥3.11॥**

**पदार्थः** – अनेन = एतेन यज्ञेन, देवान् = इन्द्रादीन्, भावयत = वर्धयत, ते देवाः = एते इन्द्रादयः, वः = युष्मान्, भावयन्तु = वर्धयन्तु, परस्परम् = अन्योन्यम्, भावयन्तः = वर्धयन्तः, परं श्रेयः = उत्तमं हितम्, अवाप्स्यथ = लभध्वम्।

**अन्वयः** – अनेन (यज्ञेन) देवान् भावयत। ते देवाः वः भावयन्तु। (एवम्) परस्परं भावयन्तः परं श्रेयः अवाप्स्यथ।

**आकाङ्क्षा –**

**भावयत, भावयन्तु ।**

**कान्** भावयत, **के** भावयन्तु ? – **देवान्** भावयत, **देवाः** भावयन्तु ।

**केन** देवान् भावयत ? **के** देवाः भावयन्तु ? – **अनेन** देवान् भावयत । **ते** देवाः भावयन्तु ।

अनेन देवान् भावयत, ते देवाः **कान्** भावयन्तु ? – अनेन देवान् भावयत, ते देवाः **वः** भावयन्तु ।

अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **तेन किम्** ?

– अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **तेन अवाप्स्यथ** ।

अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **किम्** अवाप्स्यथ ?

– अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **श्रेयः** अवाप्स्यथ ।

अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **कीदृशं** श्रेयः अवाप्स्यथ ?

– अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **परं** श्रेयः अवाप्स्यथ ?

अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **कीदृशाः** परं श्रेयः अवाप्स्यथ ?

– अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **भावयन्तः** परं श्रेयः अवाप्स्यथ ।

अनेन देवान् भावयत, ते देवाः वः भावयन्तु । **कथं** भावयन्तः परं श्रेयः अवाप्स्यथ ?

– अनेन देवान् भावयत, ते देवाः वः भावयन्तु । (एवम्) **परस्परं** भावयन्तः परं श्रेयः अवाप्स्यथ ।

**तात्पर्यम्** – यूयम् एतेन यज्ञेन हविर्दानादिद्वारा देवान् वर्धयत । ते च देवाः युष्मान् वर्धयन्तु । एवं परस्परं वर्धयन्तः यूयम् उत्तमं हितं लभध्वम् ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | भावयतानेन | – | भावयत + अनेन | सवर्णदीर्घसन्धिः |
| | देवा भावयन्तु | – | देवाः + भावयन्तु | विसर्गसन्धिः (लोपः) |
| **(ख) कृदन्तः** | भावयन्तः | – | भू + णिच् + शतृ (कर्तरि) । | |
| **(ग) तद्धितान्तः** | श्रेयः | – | दृश्यताम् – 3.2 | |

**इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।।3.12।।**

**पदार्थः** – यज्ञभाविताः = यज्ञवर्धिताः, देवाः = इन्द्रादयः, वः = युष्मभ्यम्, इष्टान् = अभीप्सितान्, भोगान् = पदार्थान्, दास्यन्ते = वितरिष्यन्ति, तैः = देवैः, दत्तान् = वितीर्णान्, एभ्यः = देवेभ्यः, अप्रदाय = अदत्त्वा, यः भुङ्क्ते = यः पुरुषः अनुभवति, सः स्तेनः एव = सः चोरः एव ।

**अन्वयः** – यज्ञभाविताः देवाः वः इष्टान् भोगान् दास्यन्ते । तैः दत्तान् एभ्यः अप्रदाय यः भुङ्क्ते स स्तेनः एव ।

**आकाङ्क्षा –**

**दास्यन्ते ।**

**के** दास्यन्ते ? – **देवाः** दास्यन्ते ।

देवाः **कान्** दास्यन्ते ? – देवाः **भोगान्** दास्यन्ते ।

| | |
|---|---|
| देवाः **कीदृशान्** भोगान् दास्यन्ते ? | – देवाः **इष्टान्** भोगान् दास्यन्ते । |
| देवाः **केभ्यः** इष्टान् भोगान् दास्यन्ते ? | – देवाः **वः** इष्टान् भोगान् दास्यन्ते । |
| **कीदृशाः** देवाः वः इष्टान् भोगान् दास्यन्ते ? | – **यज्ञभाविताः** देवाः वः इष्टान् भोगान् दास्यन्ते । |

**भुङ्क्ते ।**

| | |
|---|---|
| **कान्** भुङ्क्ते ? | – **दत्तान्** भुङ्क्ते । |
| **कैः** दत्तान् भुङ्क्ते ? | – **तैः** दत्तान् भुङ्क्ते । |
| तैः दत्तान् **कथं** भुङ्क्ते ? | – तैः दत्तान् **अप्रदाय** भुङ्क्ते । |
| तैः दत्तान् **केभ्यः** अप्रदाय भुङ्क्ते ? | – तैः दत्तान् **एभ्यः** अप्रदाय भुङ्क्ते । |
| तैः दत्तान् एभ्यः अप्रदाय **यः** भुङ्क्ते **सः कः** ? | – तैः दत्तान् एभ्यः अप्रदाय **यः** भुङ्क्ते **सः स्तेनः एव** । |

**तात्पर्यम्** – यज्ञेन सन्तुष्टाः देवाः प्रार्थनां विनापि अस्मभ्यम् अभीप्सितं वस्तु प्रयच्छन्ति । तेभ्यः देवेभ्यः किमपि अदत्त्वा यः सर्वम् अनुभवति सः चोरः एव भवति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | वो देवाः | – | वः + देवाः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | तैर्दत्तान् | – | तैः + दत्तान् | विसर्गसन्धिः (रेफः) |
| | प्रदायैभ्यो | – | प्रदाय + एभ्यः | वृद्धिसन्धिः |
| | प्रदायैभ्यो यो | – | प्रदायैभ्यः + यः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | यो भुङ्क्ते | – | यः + भुङ्क्ते | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | स्तेन एव | – | स्तेनः + एव | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | यज्ञभाविताः | – | यज्ञेन भाविताः – तृतीयातत्पुरुषः । | |
| **(ग) कृदन्तः** | इष्टान् | – | इषु + क्त । (कर्मणि) तान् । | |
| | प्रदाय | – | प्र + दा + ल्यप् । | |
| | दत्तान् | – | दा + क्त । (कर्मणि) तान् । | |

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥3.13॥**

**पदार्थः** – यज्ञशिष्टाशिनः = यज्ञशेषभोजिनः, सन्तः = साधवः, सर्वकिल्बिषैः = सकलपापैः, मुच्यन्ते = त्यज्यन्ते, ये पापाः = ये च पापिनः, आत्मकारणात् = आत्मार्थम्, पचन्ति = पचन्ति, ते तु = तादृशाः तु, अघम् = पापम्, भुञ्जते = अनुभवन्ति ।

**अन्वयः** – यज्ञशिष्टाशिनः सन्तः सर्वकिल्बिषैः मुच्यन्ते । ये च पापाः आत्मकारणात् पचन्ति ते तु अघं भुञ्जते ।

**आकाङ्क्षा** –

**मुच्यन्ते** ।

| | |
|---|---|
| **कैः** मुच्यन्ते ? | – **सर्वकिल्बिषैः** मुच्यन्ते । |
| **के** सर्वकिल्बिषैः मुच्यन्ते ? | – **सन्तः** सर्वकिल्बिषैः मुच्यन्ते । |

**कीदृशाः** सन्तः सर्वकिल्बिषैः मुच्यन्ते ? – **यज्ञशिष्टाशिनः** सन्तः सर्वकिल्बिषैः मुच्यन्ते ।

**पचन्ति** ।

**कस्मात्** पचन्ति ? – **आत्मकारणात्** पचन्ति ।

**ये** आत्मकारणात् पचन्ति **ते कीदृशाः भवन्ति** ? – **ये** आत्मकारणात् पचन्ति **ते भुञ्जते** ।

ये आत्मकारणात् पचन्ति ते **कीदृशाः** भुञ्जते ? – ये आत्मकारणात् पचन्ति ते **पापाः** भुञ्जते ।

ये आत्मकारणात् पचन्ति ते पापाः **किं** भुञ्जते ? – ये आत्मकारणात् पचन्ति ते पापाः **अघं** भुञ्जते ।

**तात्पर्यम्** – ये यज्ञशेषं भुञ्जते ते सर्वेऽपि श्रेष्ठाः पुरुषाः पापान्मुक्ताः भवन्ति । ये च पापिनः आत्मार्थं पचन्ति ते तु पापमेव भुञ्जते ।

**व्याकरणम्** –

**(क) सन्धिः** सन्तो मुच्यन्ते – सन्तः + मुच्यन्ते विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः

त्वघम् – तु + अघम् यणसन्धिः

पापा ये – पापाः + ये विसर्गसन्धिः (लोपः)

पचन्त्यात्मकारणात् – पचन्ति + आत्मकारणात् यणसन्धिः

**(ख) समासः** यज्ञशिष्टाशिनः – यज्ञस्य शिष्टम् यज्ञशिष्टम् – षष्ठीतत्पुरुषः ।

– यज्ञशिष्टम् अशितुं शीलं येषां ते – कर्तरि णिनि उपपदसमासश्च ।

आत्मकारणात् – आत्मैव कारणम्, तस्मात् – कर्मधारयः ।

**(ग) कृदन्तः** सन्तः – अस् + शतृ (कर्तरि) ।

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः ॥3.14॥**

**पदार्थः** – भूतानि = प्राणिनः, अन्नात् = आहारात्, भवन्ति = जायन्ते, पर्जन्यात् = वृष्टेः, अन्नसम्भवः = आहारोत्पत्तिः भवति, पर्जन्यः = वृष्टिः, यज्ञात् = यागात्, भवति = समुद्भवति, यज्ञः = यागः, कर्मसमुद्भवः = कर्मजन्यः (भवति) ।

**अन्वयः** – अन्नात् भूतानि भवन्ति । पर्जन्यात् अन्नसम्भवः (भवति) । पर्जन्यः यज्ञात् भवति । यज्ञः कर्मसमुद्भवः भवति ।

**आकाङ्क्षा** –

**भवन्ति** ।

**कानि** भवन्ति ? – **भूतानि** भवन्ति ।

**कस्मात्** भूतानि भवन्ति ? – **अन्नात्** भूतानि भवन्ति ।

अन्नात् भूतानि भवन्ति । **कस्मात्** अन्नसम्भवः ? – अन्नात् भूतानि भवन्ति । **पर्जन्यात्** अन्नसम्भवः ।

अन्नात् भूतानि भवन्ति । पर्जन्यात् अन्नसम्भवः । **कस्मात्** पर्जन्यः भवति ?

– अन्नात् भूतानि भवन्ति । पर्जन्यात् अन्नसम्भवः । **यज्ञात्** पर्जन्यः भवति ।

अन्नात् भूतानि भवन्ति। पर्जन्यात् अन्नसम्भवः। यज्ञात् पर्जन्यः भवति। **यज्ञः कीदृशः** ?

– अन्नात् भूतानि भवन्ति। पर्जन्यात् अन्नसम्भवः। यज्ञात् पर्जन्यः भवति। **यज्ञः कर्मसमुद्भवः**।

**तात्पर्यम्** – प्राणिनः आहारात् उत्पद्यन्ते। आहारः वृष्टेः भवति। वृष्टिश्च यज्ञात् भवति। यज्ञस्तु कर्मणः समुद्भवति।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अन्नाद्भवन्ति | – | अन्नात् + भवन्ति जश्त्वसन्धिः |
| | पर्जन्यो यज्ञः | – | पर्जन्यः + यज्ञः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | अन्नसम्भवः | – | अन्नस्य सम्भवः – षष्ठीतत्पुरुषः। |
| | कर्मसमुद्भवः | – | कर्मणः समुद्भवः – पञ्चमीतत्पुरुषः। |
| **(ग) कृदन्तः** | समुद्भवः | – | सम् + उत् + भू + अप् (भावे) |

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥3.15॥**

**पदार्थः** – कर्म = यागादिकं कर्म, ब्रह्मोद्भवम् = वेदसमुद्भवम्, विद्धि = जानीहि, ब्रह्म = वेदः, अक्षरसमुद्भवम् = परमात्मसमुद्भवः (इति विद्धि), तस्मात् = अतः, सर्वगतम् = सर्वव्यापी, ब्रह्म = परमात्मा, नित्यम् = सदा, यज्ञे = यागे, प्रतिष्ठितम् = स्थिरतया स्थितः।

**अन्वयः** – कर्म ब्रह्मोद्भवं विद्धि। ब्रह्म अक्षरसमुद्भवं विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।

**आकाङ्क्षा** –

**प्रतिष्ठितम्**।

**किं** प्रतिष्ठितम् ? – **ब्रह्म** प्रतिष्ठितम्।

**कीदृशं** ब्रह्म प्रतिष्ठितम् ? – **सर्वगतं** ब्रह्म प्रतिष्ठितम्।

सर्वगतं ब्रह्म **कुत्र** प्रतिष्ठितम् ? – सर्वगतं ब्रह्म **यज्ञे** प्रतिष्ठितम्।

सर्वगतं ब्रह्म **कदा** यज्ञे प्रतिष्ठितम् ? – सर्वगतं ब्रह्म **नित्यं** यज्ञे प्रतिष्ठितम्।

**कस्मात्** सर्वगतं ब्रह्म यज्ञे नित्यं प्रतिष्ठितम् ? – **विद्धि। तस्मात्** सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।

**किं** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ?

– **कर्म** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।

कर्म **कीदृशं** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ?

– कर्म **ब्रह्मोद्भवं** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।

कर्म ब्रह्मोद्भवम्। **पुनश्च किं** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ?

– कर्म ब्रह्मोद्भवम्। **ब्रह्म** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।

कर्म ब्रह्मोद्भवम्। ब्रह्म **कीदृशं** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ?

– कर्म ब्रह्मोद्भवम्। ब्रह्म **अक्षरसमुद्भवं** विद्धि। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ?

**तात्पर्यम्** – कर्म वेदात् उत्पन्नम्। वेदश्च परमात्मनः उत्पन्नोऽस्ति। अतः सर्वव्यापी भगवान् यज्ञे सदा तिष्ठति।

**माध्वमतम्** – अन्नात् रेतोद्वारा प्राणिनः जायन्ते । अन्नं च वृष्टिद्वारा मेघमण्डलात् भवति । मेघमण्डलं च यज्ञतृप्तात् सूर्यात् जायते । यज्ञश्च विविधकर्मणः समुद्भवति । कर्मणः कारयिता परब्रह्म । तस्मात् परब्रह्मणः सकाशात् कर्मणः उद्भवः । परमात्मा च अक्षरनामकेन वेदेन अभिव्यज्यते । तस्मात् वेदेन तज्ज्ञानमवश्यं सम्पादनीयम् । तदेतादृशं ब्रह्म यज्ञे नित्यं सन्निहितम् । अत एव यज्ञात् पर्जन्यस्य, तस्मात् अन्नस्य अन्नात् च प्राणिनाम्, उद्भवः अक्षरवद्भ्यः तेभ्यः वेदः उद्भवति, वेदाच्च परमात्मनः अभिव्यक्तिः भवति । तस्मादवश्यं कर्माणि कार्याणि ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | ब्रह्माक्षरसमुद्भवम् | – ब्रह्म + अक्षरसमुद्भवम् सवर्णदीर्घसन्धिः |
| **(ख) समासः** | ब्रह्मोद्भवम् | – ब्रह्मणः उद्भवम् – पञ्चमीतत्पुरुषः । |
| | अक्षरसमुद्भवम् | – अक्षरात् समुद्भवम् – पञ्चमीतत्पुरुषः । |
| **(ग) कृदन्तः** | गतम् | – गम् + क्त (कर्तरि) । |
| | उद्भवम् | – उद् + भू + अच् (कर्तरि) । उद्भवतीति उद्भवम् । |

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥3.16॥**

**पदार्थः** – पार्थ= अर्जुन ! यः = यः पुरुषः, इह = अस्मिन् लोके, एवम् = इत्थम्, प्रवर्तितम् = निर्मितम्, चक्रम् = कर्मचक्रम्, न अनुवर्तयति = न अनुसरति, इन्द्रियारामः = इन्द्रियेषु रममाणः, अघायुः = पापभूयिष्ठजीवितः, सः = सः पुरुषः, मोघम् = वृथा, जीवति = प्राणिति ।

**अन्वयः** – पार्थ ! यः एवं प्रवर्तितं चक्रं इह न अनुवर्तयति अघायुः इन्द्रियारामः सः मोघं जीवति ।

**आकाङ्क्षा** –

**न अनुवर्तयति** ।

**किं** न अनुवर्तयति ? – **चक्रं** न अनुवर्तयति ।

**कीदृशं** चक्रं न अनुवर्तयति ? – **प्रवर्तितं** चक्रं न अनुवर्तयति ।

**कथं** प्रवर्तितं चक्रं न अनुवर्तयति ? – **एवं** प्रवर्तितं चक्रं न अनुवर्तयति ।

एवं प्रवर्तितं चक्रं **कुत्र** न अनुवर्तयति ? – एवं प्रवर्तितं चक्रम् **इह** न अनुवर्तयति ।

**यः** एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति **सः कीदृशः भवति ?**

– **यः** एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति **सः जीवति** ।

यः एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति सः **कथं** जीवति ?

– यः एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति सः **मोघं** जीवति ।

यः एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति **कीदृशः** सः मोघं जीवति ?

– यः एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति **अघायुः** सः मोघं जीवति ।

यः एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति अघायुः **पुनश्च कीदृशः** सः मोघं जीवति ?

– यः एवं प्रवर्तितं चक्रम् इह न अनुवर्तयति अघायुः **इन्द्रियारामः** सः मोघं जीवति ।

श्लोके सम्बोधनपदं किम् ? — **पार्थ** ।

**तात्पर्यम्** – यः मनुष्यः अस्मिन् लोके कर्मचक्रानुगुणं नैव व्यवहरति, यः च कर्तव्यकर्म न करोति तादृशः इन्द्रियसुखलोलुपः पापभूयिष्ठजीवितः पुरुषः व्यर्थं जीवति ।

**व्याकरणम्** –

**(क) सन्धिः** नानुवर्तयतीह – न + अनुवर्तयति + इह सवर्णदीर्घसन्धिः
अघायुरिन्द्रियारामो मोघः – अघायुः + इन्द्रियारामः विसर्गसन्धिः (रेफः)
– इन्द्रियारामः + मोघम् विसर्गसन्धिः (सकारः)
रेफः, उकारः, गुणः
स जीवति – सः + जीवति विसर्गसन्धिः (लोपः)

**(ख) समासः** अघायुः – अघम् (पापम्) आयुः यस्य सः – बहुव्रीहिः ।
इन्द्रियारामः – इन्द्रियैः आरामः – तृतीयातत्पुरुषः ।

**(ग) कृदन्तः** प्रवर्तितम् – प्र + वृत् + णिच् + क्त (कर्मणि) ।
आरामः – आ + रम् + घञ् (कर्तरि बहुलम्)

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ॥3.17॥**

**पदार्थः** – यः मानवः तु = यः मनुष्यः, आत्मरतिः एव = आत्मनि प्रीतिमान्, आत्मतृप्तः च = आत्मनि तृप्तिमान्, आत्मन्येव = स्वस्मिन् एव, सन्तुष्टः = सम्प्रीतः, स्यात् = भवेत्, तस्य = तादृशस्य मनुष्यस्य, कार्यम् = कर्तव्यम्, न विद्यते = नास्ति ।

**अन्वयः** – यः मानवः आत्मरतिः एव आत्मतृप्तः आत्मन्येव सन्तुष्टः च स्यात् तस्य कार्यं न विद्यते ।

**आकाङ्क्षा** –

**स्यात्** ।

**कः** स्यात् ? – **मानवः स्यात्** ।

मानवः **कीदृशः** स्यात् ? – मानवः **आत्मरतिः एव** स्यात् ।

मानवः आत्मरतिः एव **पुनश्च कीदृशः** स्यात् ? – मानवः आत्मरतिः एव **आत्मतृप्तश्च** स्यात् ।

मानवः आत्मरतिः एव आत्मतृप्तः **पुनश्च कीदृशः** स्यात् ?

– मानवः आत्मरतिः एव आत्मतृप्तः **सन्तुष्टश्च** स्यात् ।

मानवः आत्मरतिः एव आत्मतृप्तः **कस्मिन्** सन्तुष्टश्च स्यात् ?

– मानवः आत्मरतिः एव आत्मतृप्तः **आत्मनि एव** सन्तुष्टश्च स्यात् ।

यः मानवः आत्मरतिः एव आत्मतृप्तः आत्मनि एव सन्तुष्टश्च स्यात् **तस्य किं भवति** ?

– यः मानवः आत्मरतिः एव आत्मतृप्तः आत्मनि एव सन्तुष्टश्च स्यात् **तस्य न विद्यते** ।

यः मानवः आत्मरतिः एव आत्मतृप्तः आत्मनि एव सन्तुष्टश्च स्यात् तस्य **किं** न विद्यते ?

– यः मानवः आत्मरतिः एव आत्मतृप्तः आत्मनि एव सन्तुष्टश्च स्यात् तस्य **कार्यं** न विद्यते ।

**तात्पर्यम्** – यः मनुष्यः आत्मप्रियः, आत्मतृप्तः, आत्मसम्प्रीतश्च भवति तस्य कर्तव्यं नास्ति ।

**माध्वमतम्** – अपरोक्षज्ञानी परमात्मदर्शनजन्यसुखम् अनुभवन्, तदितरसुखे अनासक्तः तृप्तिं प्राप्नोति । तस्य नित्यं नैमित्तिकं च कार्यमित्येतत् नास्ति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | यस्त्वात्मरतिरेव | – | यः + तु | विसर्गसन्धिः (सकारः) |
| | | | तु + आत्मरतिः | यण्सन्धिः |
| | | | आत्मरतिः + एव | विसर्गसन्धिः (रेफः) |
| | स्यादात्मतृप्तः | – | स्यात् + आत्मतृप्तः | जश्त्वसन्धिः |
| | आत्मतृप्तश्च | – | आत्मतृप्तः + च | विसर्गसन्धिः (सकारः) श्चुत्वं च |
| | आत्मन्येव | – | आत्मनि + एव | यण्सन्धिः |
| | सन्तुष्टस्तस्य | – | सन्तुष्टः + तस्य | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | आत्मरतिः | – | आत्मनि एव रतिः यस्य सः – बहुव्रीहिः । | |
| | आत्मतृप्तः | – | आत्मनि एव तृप्तः – सप्तमीतत्पुरुषः । | |
| **(ग) कृदन्तः** | तृप्तः | – | तृप् + क्त (कर्तरि) । | |
| | सन्तुष्टः | – | सम् + तुष् + क्त (कर्तरि) । | |
| | कार्यम् | – | कृ + ण्यत् (कर्मणि) । | |
| **(घ) तद्धितान्तः** | मानवः | – | मनु + अण् (अपत्यार्थे) । मनोः अपत्यं पुमान् । | |

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥3.18॥**

**पदार्थः** – इह= अस्मिन् लोके, तस्य = आत्मरतस्य पुरुषस्य, कृतेन = विहितेन (कर्मणा), अर्थः = प्रयोजनम्, न एव = नास्ति, अकृतेन = अविहितेन (कर्मणा), कश्चन = कोऽपि अर्थः, न = नास्ति, अस्य = अस्य पुरुषस्य, सर्वभूतेषु = सर्वप्राणिषु, कश्चित् = कश्चन, अर्थव्यपाश्रयः च = प्रयोजनसम्बन्धः अपि, न = नास्ति ।

**अन्वयः** – इह तस्य कृतेन (कर्मणा) अकृतेन कश्चन अर्थः नास्ति । अस्य च सर्वभूतेषु कश्चित् अर्थव्यपाश्रयः नास्ति ।

**आकाङ्क्षा** –

**अर्थः न एव ।**

**कस्य** अर्थः न एव ? – **तस्य** अर्थः न एव ।

तस्य **कः** अर्थः न एव ? – तस्य **कश्चन** अर्थः न एव ।

तस्य **केन** कश्चन अर्थः न एव ? – तस्य **कृतेन** (कर्मणा) कश्चन अर्थः न एव ।

तस्य कृतेन कर्मणा कश्चन अर्थः नैव, **पुनश्च किम् ?**

– तस्य कृतेन कर्मणा कश्चन अर्थः नैव, **अकृतेनापि** (कर्मणा) **न** ।

तस्य कृतेन कर्मणा कश्चन अर्थः नैव, अकृतेनापि कर्मणा न, **पुनश्च किम् ?**

– तस्य कृतेन कर्मणा कश्चन अर्थः नैव, अकृतेनापि कर्मणा न, **अस्य न अर्थव्यपाश्रयः** ।

तस्य कृतेन कर्मणा कश्चन अर्थः नैव, अकृतेनापि कर्मणा न, अस्य **कः** न अर्थव्यपाश्रयः ?

– तस्य कृतेन कर्मणा कश्चन अर्थः नैव, अकृतेनापि कर्मणा न, अस्य **कश्चित्** न अर्थव्यपाश्रयः ।

तस्य कृतेन कर्मणा कश्चन अर्थः नैव, अकृतेनापि कर्मणा न, अस्य **केषु** कश्चित् न अर्थव्यपाश्रयः ?

– तस्य कृतेन कर्मणा कश्चन अर्थः नैव, अकृतेनापि कर्मणा न, अस्य **सर्वभूतेषु** कश्चित् न अर्थव्यपाश्रयः।

**तात्पर्यम्** – आत्मतृप्तस्य पुरुषस्य कृतेन कर्मणा अकृतेनापि कर्मणा प्रयोजनं नास्ति । प्राणिषु केनापि सह तस्य प्रयोजनस्य हेतोः सम्बन्धोऽपि नास्ति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नैव | – न + एव | वृद्धिसन्धिः |
| | कृतेनार्थः | – कृतेन + अर्थः | सवर्णदीर्घसन्धिः |
| | नाकृतेन | – न + अकृतेन | सवर्णदीर्घसन्धिः |
| | अकृतेनेह | – अकृतेन + इह | गुणसन्धिः |
| | चास्य | – च + अस्य | सवर्णदीर्घसन्धिः |
| | कश्चिदर्थव्यपाश्रयः | – कश्चित् + अर्थव्यपाश्रयः | जश्त्वसन्धिः |
| **(ख) समासः** | अकृतेन | – न कृतम्, तेन – नञ्तत्पुरुषः । | |
| | अर्थव्यपाश्रयः | – अर्थाय व्यपाश्रयः – चतुर्थीतत्पुरुषः । | |
| | सर्वभूतेषु | – सर्वाणि च तानि भूतानि च, तेषु – कर्मधारयः । | |
| **(ग) कृदन्तः** | कृतेन | – कृ + क्त (कर्मणि) । | |

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥3.19॥**

**पदार्थः** – तस्मात् = अतः, असक्तः = निस्सङ्गः, सततम् = सर्वदा, कार्यम् = आचरणयोग्यम्, कर्म = कर्म, समाचर = कुरु, हि = यस्मात्, असक्तः = सङ्गरहितः, पूरुषः = मानवः, कर्म = कर्म, आचरन् = कुर्वन्, परम् = परं धाम, आप्नोति = प्राप्नोति ।

**अन्वयः** – तस्मात् असक्तः सततं कार्यं कर्म समाचर । असक्तः हि कर्म आचरन् पूरुषः परम् आप्नोति ।

**आकाङ्क्षा** –

**समाचर** ।

**किं** समाचर ? – **कर्म** समाचर ।

**कीदृशं** कर्म समाचर ? – **कार्यं** कर्म समाचर ।

**कदा** कार्यं कर्म समाचर ? – **सततं** कार्यं कर्म समाचर ।

**कथंभूतः** सततं कार्यं कर्म समाचर ? – **असक्तः** सततं कार्यं कर्म समाचर ।

**कस्मात्** असक्तः सततं कार्यं कर्म समाचर ? – **तस्मात्** असक्तः सततं कार्यं कर्म समाचर ।

तस्मात् असक्तः सततं कार्यं कर्म समाचर, (तेन) **किम्** ?

– तस्मात् असक्तः सततं कार्यं कर्म समाचर, (तेन) **आप्नोति** ।

तस्मात् असक्तः सततं कार्यं कर्म समाचर, तेन **कः** आप्नोति ?

– तस्मात् असक्तः सततं कार्यं कर्म समाचर, तेन **पूरुषः** आप्नोति ।

तस्मात् असक्तः सततं कार्यं कर्म समाचर, तेन **कीदृशः** पूरुषः आप्नोति ?

– तस्मात् असक्तः सततं कार्यं कर्म समाचर, तेन **असक्तः हि** पूरुषः आप्नोति ।

तस्मात् असक्तः सततं कार्यं कर्म समाचर, असक्तः हि **किं कुर्वन्** पूरुषः आप्नोति ?

– तस्मात् असक्तः सततं कार्यं कर्म समाचर, असक्तः हि **आचरन्** पूरुषः आप्नोति ।

तस्मात् असक्तः सततं कार्यं कर्म समाचर, असक्तः हि **किम्** आचरन् पूरुषः आप्नोति ?

– तस्मात् असक्तः सततं कार्यं कर्म समाचर, असक्तः हि **कर्म** आचरन् पूरुषः आप्नोति ।

तस्मात् असक्तः सततं कार्यं कर्म समाचर, असक्तः हि कर्म आचरन् पूरुषः **किम्** आप्नोति ?

– तस्मात् असक्तः सततं कार्यं कर्म समाचर, असक्तः हि कर्म आचरन् पूरुषः **परम्** आप्नोति ।

**तात्पर्यम् –** भवान् सङ्गरहितः भूत्वा कर्तव्यं कर्म आचरतु । यतः सङ्गरहितः पुरुषः कर्म आचरन् परं तत्त्वं विन्दति ।

**व्याकरणम् –**

| | | |
|---|---|---|
| **(क) सन्धिः** | तस्मादसक्तः | – तस्मात् + असक्तः – जश्त्वसन्धिः |
| | ह्याचरन् | – हि + आचरन् – यणसन्धिः |
| **(ख) समासः** | असक्तः | – न सक्तः – नञ्तत्पुरुषः । |
| **(ग) कृदन्तः** | सक्तः | – सञ्ज + क्तः (कर्तरि) । |
| | आचरन् | – आ + चर + शतृ (कर्तरि) । |

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥3.20॥**

**पदार्थः –** जनकादयः हि = जनकराजप्रभृतयः अपि, कर्मणा एव = कर्माचरणेन एव, संसिद्धिम् = साफल्यम्, आस्थिताः = प्राप्तवन्तः, लोकसङ्ग्रहम् = स्वधर्मे प्रवर्तनम् अधर्माच्च निवर्तनम्, सम्पश्यन् अपि = भावयन् अपि, कर्तुमेव = कर्म आचरितुमेव, अर्हसि = प्रभवसि ।

**अन्वयः –** जनकादयो हि कर्मणा एव संसिद्धिम् आस्थिताः । लोकसङ्ग्रहम् अपि सम्पश्यन् (कर्म) कर्तुम् अर्हसि एव ।

**आकाङ्क्षा –**

**आस्थिताः** ।

**के** आस्थिताः ? – **जनकादयः** आस्थिताः ।

जनकादयः **काम्** आस्थिताः ? – जनकादयः **संसिद्धिम्** आस्थिताः ।

जनकादयः **केन एव** संसिद्धिम् आस्थिताः ? – जनकादयः **कर्मणा एव** संसिद्धिम् आस्थिताः ।

जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः । **तेन किम्** ?

– जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। (तेन) **अर्हसि**।

जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। **किम्** अर्हसि ?

– जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। (कर्म) **कर्तुम्** अर्हसि।

जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। **किं कुर्वन्** कर्म कर्तुम् अर्हसि ?

– जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। **सम्पश्यन्** कर्म कर्तुम् अर्हसि।

जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। **कं** सम्पश्यन् अपि कर्तुम् अर्हसि ?

– जनकादयः कर्मणा एव संसिद्धिम् आस्थिताः। **लोकसङ्ग्रहं** सम्पश्यन् कर्तुम् अर्हसि।

**तात्पर्यम्** – जनकादयः ज्ञानिनः कर्माचरणेन एव सद्गतिं प्राप्तवन्तः इत्यतः भवान् अपि लोकहितदृष्ट्या कर्म कर्तुम् अर्हति।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | कर्मणैव | – | कर्मणा + एव | वृद्धिसन्धिः |
| | आस्थिता जनकादयः | – | आस्थिताः + जनकादयः | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | लोकसङ्ग्रहम् | – | लोकस्य सङ्ग्रहः, तम् – षष्ठीतत्पुरुषः। | |
| | जनकादयः | – | जनकः आदिः येषां ते – बहुव्रीहिः। | |
| **(ग) कृदन्तः** | संसिद्धिम् | – | सम् + सिद् + क्तिन्। (भावे) | |
| | आस्थिताः | – | आ + स्था + क्त। (कर्तरि) | |
| | सङ्ग्रहम् | – | सम् + ग्रह् + अच्। (भावे) तम्। | |
| | सम्पश्यन् | – | सम् + दृशिर् + शतृ (कर्तरि)। | |
| | कर्तुम् | – | कृ + तुमुन्। | |

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥3.21॥**

**पदार्थः** – श्रेष्ठः = प्रशस्तः, यत् यत् = यत् कर्म, आचरति = करोति, इतरः जनः = अन्यः पुरुषः, तत् तत् एव = तत् कर्म एव (आचरति), सः = श्रेष्ठः, यत् = यत्, प्रमाणम् = प्रमितिसाधनम्, कुरुते = अङ्गीकरोति, लोकः = जनः, तत् = तदेव प्रमितिसाधनम्, अनुवर्तते = अनुसरति।

**अन्वयः** – श्रेष्ठः यत् यत् आचरति (तेन) इतरः जनः तत् तत् एव आचरति। सः यत् प्रमाणं कुरुते लोकः तत् अनुवर्तते।

**आकाङ्क्षा** –

**आचरति**।

**कः** आचरति ? – **श्रेष्ठः** आचरति।

श्रेष्ठः यद्यत् आचरति **तेन किम्** ? – श्रेष्ठः यद्यत् आचरति **(तेन) आचरति**।

श्रेष्ठः यद्यत् आचरति तेन **कः** आचरति ? – श्रेष्ठः यद्यत् आचरति तेन **जनः** आचरति।

श्रेष्ठः यद्यत् आचरति तेन **कः** जनः आचरति ? – श्रेष्ठः यद्यत् आचरति तेन **इतरः** जनः आचरति।

श्रेष्ठः यद्यत् आचरति तेन इतरः जनः **किम्** आचरति ?

– श्रेष्ठः यद्यत् आचरति तेन इतरः जनः **तत्तदेव** आचरति ।

**कुरुते** ।

**कः** कुरुते ? – **सः** कुरुते ।

सः **किं** कुरुते ? – सः **प्रमाणं** कुरुते ।

सः यत् प्रमाणं कुरुते (तेन) **किं भवति** ? – सः यत् प्रमाणं कुरुते (तेन) **अनुवर्तते** ।

सः यत् प्रमाणं कुरुते तेन **कः** अनुवर्तते ? – सः यत् प्रमाणं कुरुते तेन **लोकः** अनुवर्तते ।

सः यत् प्रमाणं कुरुते तेन लोकः **किम्** अनुवर्तते ? – सः यत् प्रमाणं कुरुते तेन लोकः **तत्** अनुवर्तते ।

**तात्पर्यम्** – श्रेष्ठः पुरुषः यथा आचरति इतरे साधारणाः जनाः तथैव आचरन्ति । सः यत् प्रमाणत्वेन स्वीकरोति इतरेऽपि तदेव प्रमाणत्वेन स्वीकुर्वन्ति ।

**रामानुजीयमतम्** – यत्प्रमाणम् इति एकपदम् । यदङ्ग्युक्तम् इत्यर्थः ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | यद्यदाचरति | – | यत् + यत् + आचरति | जश्त्वसन्धिः |
| | श्रेष्ठस्तत् | – | श्रेष्ठः + तत् | विसर्गसन्धिः (सकारः) |
| | तदेव | – | तत् + एव | जश्त्वसन्धिः |
| | एवेतरो जनः | – | एव + इतरः | गुणसन्धिः |
| | | – | इतरः + जनः | विसर्गसन्धिः(सकारः)रेफः,उकारः,गुणः |
| | स यत् | – | सः यत् | विसर्गसन्धिः लोपः |
| | लोकस्तदनुवर्तते | – | लोकः + तत् | विसर्गसन्धिः (सकारः) |
| | | – | तत् + अनुवर्तते | जश्त्वसन्धिः |
| **(ख) कृदन्तः** | प्रमाणम् | – | प्र + मा + ल्युट् । (करणे) प्रमीयते (ज्ञायते) अनेन इति प्रमाणम् । | |
| | श्रेष्ठः | – | प्रशस्य + इष्ठन् (अतिशये) । (श्र इति आदेशः) | |

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥3.22॥**

**पदार्थः** – पार्थ = पृथानन्दन ! त्रिषु लोकेषु = त्रिषु भुवनेषु, मे = मम, किञ्चन = किमपि, कर्तव्यम् = कर्म, नास्ति = न विद्यते, अनवाप्तम् = अलब्धम्, अवाप्तव्यम् = लब्धव्यम्, नास्ति = न वर्तते, कर्मणि एव = केवलकर्मणि, वर्ते = तिष्ठामि ।

**अन्वयः** – पार्थ ! त्रिषु लोकेषु मे किञ्चन कर्तव्यं नास्ति । अनवाप्तम् अवाप्तव्यं च नास्ति । (तथापि) कर्मणि एव वर्ते ।

**आकाङ्क्षा** –

**न अस्ति** ।

**किं** न अस्ति ? – **कर्तव्यं** न अस्ति ।

**कीदृशं** कर्तव्यं नास्ति ? – **किञ्चन** कर्तव्यं नास्ति ।

**कस्य** किञ्चन कर्तव्यं नास्ति ? – **मे** किञ्चन कर्तव्यं नास्ति ।

**कुत्र** मे किञ्चन कर्तव्यं नास्ति ? – **लोकेषु** मे किञ्चन कर्तव्यं नास्ति ।
**कतिषु** लोकेषु मे किञ्चन कर्तव्यं नास्ति ? – **त्रिषु** लोकेषु मे किञ्चन कर्तव्यं नास्ति ।
**न** ।
**किं** नास्ति ? – **अनवाप्तं** नास्ति ।
**कीदृशं च** अनवाप्तं नास्ति ? – **अवाप्तव्यम्** अनवाप्तं च नास्ति ।
**वर्ते** ।
**कस्मिन्** एव वर्ते ? – **कर्मणि** एव वर्ते ।
अस्मिन् श्लोके सम्बोधनपदं किम् ? – **पार्थ** ।

**तात्पर्यम्** – अर्जुन ! त्रिभुवनेषु मम किमपि कर्म नास्ति । अप्राप्तं प्राप्तव्यम् अपि नास्ति । तथापि अहं कर्मणि प्रवृत्तोऽस्मि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पार्थास्ति | – पार्थ + अस्ति | सवर्णदीर्घसन्धिः |
| | नानवाप्तव्यम् | – न + अनवाप्तव्यम् | सवर्णदीर्घसन्धिः |
| | वर्त एव | – वर्ते + एव | अयादेशः, यकारलोपः प्रकृतिभावश्च |
| **(ख) समासः** | अनवाप्तव्यम् | – न अवाप्तव्यम् – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | कर्तव्यम् | – कृ + तव्यत् । (कर्मणि) | |
| | अवाप्तम् | – अव + आप् + क्त । (कर्मणि) | |
| | आप्तव्यम् | – आप् + तव्यत् । (कर्मणि) | |

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥3.23॥**

**पदार्थः** – यदि = चेत्, अहम् = अहम्, जातु = कदापि, कर्मणि = कर्तव्ये, अतन्द्रितः = अप्रमत्तः (जागरूकः), न वर्तेयम् = न भवेयम्, तर्हि = तस्मिन् पक्षे, सर्वशः = सर्वे, मनुष्याः = मानवाः, मम = मे, वर्त्म = मार्गम्, अनुवर्तन्ते = अनुसरन्ति ।

**अन्वयः** – पार्थ ! यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । (तर्हि) सर्वशः मनुष्याः मम वर्त्म अनुवर्तन्ते ।

**आकाङ्क्षा** –

**अहं न वर्तेयम्** ।
अहं **कीदृशः** न वर्तेयम् ? – अहम् **अतन्द्रितः** न वर्तेयम् ।
अहं **कुत्र** अतन्द्रितः न वर्तेयम् ? – अहं **कर्मणि** अतन्द्रितः न वर्तेयम् ।
अहं कर्मणि **कदा** अतन्द्रितः न वर्तेयम् ? – अहं कर्मणि **जातु** अतन्द्रितः न वर्तेयम् ।
यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । **(तर्हि) किं भवति** ?
– यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । **तर्हि अनुवर्तन्ते** ।
यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि **के अनुवर्तन्ते ?**

– यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि **मनुष्याः** अनुवर्तन्ते ।

यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि मनुष्याः **किम्** अनुवर्तन्ते ?

– यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि मनुष्याः **वर्त्म** अनुवर्तन्ते ।

यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि मनुष्याः **कस्य** वर्त्म अनुवर्तन्ते ?

– यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि मनुष्याः **मम** वर्त्म अनुवर्तन्ते ।

यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि **कति** मनुष्याः मम वर्त्म अनुवर्तन्ते ?

– यदि अहं कर्मणि जातु अतन्द्रितः न वर्तेयम् । तर्हि **सर्वशः** मनुष्याः मम वर्त्म अनुवर्तन्ते ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **पार्थ** ।

**तात्पर्यम्** – हे पार्थ ! यदि अहं कर्म न करोमि तर्हि सर्वेऽपि जनाः मम मार्गमेव अनुसरेयुः । एतेन महती हानिः सम्भवति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | ह्यहम् | – हि + अहम् | यणसन्धिः |
| | कर्मण्यतन्द्रितः | – कर्मणि + अतन्द्रितः | यणसन्धिः |
| | वर्त्मानुवर्तन्ते | – वर्त्म + अनुवर्तन्ते | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अतन्द्रितः | – न तन्द्रितः | नञ्तत्पुरुषः । |
| **(ग) कृदन्तः** | तन्द्रितः | – तन्द्रा + इतच् । (तन्द्रा जाड्यम् अस्य सञ्जाता) | |
| **(घ) तद्धितान्तः** | सर्वशः | – सर्व + शस् (स्वार्थे) | |

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥3.24॥**

**पदार्थः** – अहम् = अहम्, कर्म = कर्तव्यम्, न कुर्यां चेत् = यदि न आचरेयम्, इमे लोकाः = एतानि भुवनानि, उत्सीदेयुः = विनश्येयुः, सङ्करस्य च = साङ्कर्यस्य च, कर्ता = विधाता, स्याम् = भवेयम्, इमाः प्रजाः = एतान् जनान्, उपहन्याम् = विनाशयेयम् ।

**अन्वयः** – अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । इमाः प्रजाः उपहन्याम् ।

**आकाङ्क्षा** –

**अहं न कुर्याम्** ।

अहं **किं** न कुर्याम् ? – अहं **कर्म** न कुर्याम् ।

अहं **कर्म** न कुर्यां चेत् **किं भवति** ? – अहं कर्म न कुर्यां चेत् **उत्सीदेयुः** ।

अहं कर्म न कुर्यां चेत् **के** उत्सीदेयुः ? – अहं कर्म न कुर्यां चेत् **लोकाः** उत्सीदेयुः ।

अहं कर्म न कुर्यां चेत् **के** लोकाः उत्सीदेयुः ? – अहं कर्म न कुर्यां चेत् **इमे** लोकाः उत्सीदेयुः ।

अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । **पुनश्च किं भवति** ?

– अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । **स्याम्** ।

अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । **कीदृशः** स्याम् ?

– अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । **कर्ता** स्याम् ।

अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । **कस्य च** कर्ता स्याम् ?
– अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । **सङ्करस्य च** कर्ता स्याम् ।
अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । **पुनश्च किं भवति** ?
– अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । **उपहन्याम्** ।
अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । **काः** उपहन्याम् ?
– अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । **प्रजाः** उपहन्याम् ।
अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । **काः** प्रजाः उपहन्याम् ?
– अहं कर्म न कुर्यां चेत् इमे लोकाः उत्सीदेयुः । सङ्करस्य च कर्ता स्याम् । **इमाः** प्रजाः उपहन्याम् ।

**तात्पर्यम् –** यदि अहं कर्म न आचरेयं तर्हि भुवनानि नाशं प्राप्नुयुः । किञ्च अहमेव सङ्करस्य कारणम्, प्रजा-नाशकश्च भवेयम् ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | उत्सीदेयुरिमे | – | उत्सीदेयुः + इमे | विसर्गसन्धिः (रेफः) |
| | लोका न | – | लोकाः + न | विसर्गसन्धिः (लोपः) |
| | चेदहम् | – | चेत् + अहम् | जश्त्वसन्धिः |
| **(ख) कृदन्तः** | सङ्करस्य | – | सम् + कृ + अच् (भावे) तस्य । | |
| | कर्ता | – | कृ + तृच् (कर्तरि) । | |

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तः चिकिर्षुर्लोकसङ्ग्रहम् ॥3.25॥**

**पदार्थः –** भारत = हे भरतकुलश्रेष्ठ! कर्मणि = कर्तव्ये, सक्ताः = आसक्ताः, अविद्वांसः = अज्ञानिनः, यथा = येन प्रकारेण, कुर्वन्ति = आचरन्ति, तथा = तेन प्रकारेण, लोकसङ्ग्रहम् = स्वधर्मे प्रवर्तनम् अधर्माच्च निवर्तनम्, चिकीर्षुः = कर्तुमनाः (कर्तुम् इच्छुः), असक्तः = निस्सङ्गः, विद्वान् = ज्ञानी, कुर्यात् = आचरेत् ।

**अन्वयः –** भारत ! अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् असक्तः लोकसङ्ग्रहं चिकीर्षुः (कर्म) कुर्यात् ।

**आकाङ्क्षा –**

**कुर्वन्ति** ।
**के** कुर्वन्ति ? – **अविद्वांसः** कुर्वन्ति ।
अविद्वांसः **कीदृशाः** कुर्वन्ति ? – अविद्वांसः **सक्ताः** कुर्वन्ति ।
अविद्वांसः **कस्मिन्** सक्ताः कुर्वन्ति ? – अविद्वांसः **कर्मणि** सक्ताः कुर्वन्ति ।
अविद्वांसः कर्मणि सक्ताः **यथा** कुर्वन्ति **तथा किं कुर्यात्** ?
– अविद्वांसः कर्मणि सक्ताः **यथा** कुर्वन्ति **तथा (कर्म) कुर्यात्** ।
अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा **कः** कर्म कुर्यात् ?
– अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा **विद्वान्** कर्म कुर्यात् ।

अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् **कीदृशः** कर्म कुर्यात् ?

– अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् **असक्तः** कर्म कुर्यात् ।

अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् असक्तः **पुनश्च कीदृशः** कर्म कुर्यात् ?

– अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् असक्तः **चिकीर्षुः** कर्म कुर्यात् ।

अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् असक्तः **कं** चिकीर्षुः कर्म कुर्यात् ?

– अविद्वांसः कर्मणि सक्ताः यथा कुर्वन्ति तथा विद्वान् असक्तः **लोकसङ्ग्रहं** चिकीर्षुः कर्म कुर्यात् ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **भारत** ।

**तात्पर्यम्** – हे अर्जुन ! कर्मणि आसक्ताः अज्ञानिनः यथा कर्म आचरन्ति तथा अनासक्तोऽपि विद्वान् लोकोद्धाराय कर्म आचरेत् ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| कर्मण्यविद्वांसः | – कर्मणि + अविद्वांसः | यणसन्धिः |
| विद्वांसो यथा | – विद्वांसः + यथा | विसर्गसन्धिः (सकारः) रेफः,उकारः, गुणः |
| कुर्याद्विद्वान् | – कुर्यात् + विद्वान् | जश्त्वसन्धिः |
| विद्वांस्तथा | – विद्वान् + तथा | रुत्वम्, अनुस्वारागमः, विसर्गः सत्वं च |
| तथासक्तः | – तथा + असक्तः | सवर्णदीर्घसन्धिः |
| असक्तश्चिकीर्षुः | – असक्तः + चिकीर्षुः | विसर्गसन्धिः (सकारः) श्चुत्वम्, |
| चिकीर्षुर्लोकसङ्ग्रहम् | – चिकीर्षुः + लोकसङ्ग्रहम् | विसर्गसन्धिः (रेफः) |

**(ख) कृदन्तः** विद्वान् – विद् + शतृ (कर्तरि) । वसु इति आदेशः ।

सक्तः – दृश्यताम् – 3.7

**(ग) सन्नन्तः** चिकीर्षुः – कृ + सन् + उ (कर्तरि) ।

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥3.26॥**

**पदार्थः** – युक्तः = परमात्मनि लीनः, विद्वान् = ज्ञानी, कर्मसङ्गिनाम् = कर्मासक्तानाम्, अज्ञानाम् = अविदुषाम्, बुद्धिभेदम् = संशयम्, न जनयेत् = न उत्पादयेत्, सर्वकर्माणि = सकलकर्तव्यानि, समाचरन् = कुर्वन्, जोषयेत् = तैः सेवयेत्, (यथा ते सेवन्ते तथा कुर्यात् ।)

**अन्वयः** – युक्तः विद्वान् (कर्म) समाचरन् कर्मसङ्गिनाम् अज्ञानां बुद्धिभेदं न जनयेत् । सर्वकर्माणि जोषयेत् ।

**आकाङ्क्षा** –

**न जनयेत्** ।

**कः** न जनयेत् ? – **विद्वान्** न जनयेत् ।

**कीदृशः** विद्वान् न जनयेत् ? – **युक्तः** विद्वान् न जनयेत् ।

युक्तः विद्वान् **किं कुर्वन्** न जनयेत् ? – युक्तः विद्वान् **(कर्म) समाचरन्** न जनयेत् ।

युक्तः विद्वान् (कर्म) समाचरन् **कं** न जनयेत् ? – युक्तः विद्वान् कर्म समाचरन् **बुद्धिभेदं** न जनयेत् ।

युक्तः विद्वान् कर्म समाचरन् **केषां** बुद्धिभेदं न जनयेत् ?

– युक्तः विद्वान् कर्म समाचरन् **अज्ञानां** बुद्धिभेदं न जनयेत्।

युक्तः विद्वान् कर्म समाचरन् **कीदृशानाम्** अज्ञानां बुद्धिभेदं न जनयेत् ?

– युक्तः विद्वान् कर्म समाचरन् **कर्मसङ्गिनाम्** अज्ञानां बुद्धिभेदं न जनयेत्।

युक्तः विद्वान् कर्म समाचरन् कर्मसङ्गिनाम् अज्ञानां बुद्धिभेदं न जनयेत्। **पुनश्च किं कुर्यात्** ?

– युक्तः विद्वान् कर्म समाचरन् कर्मसङ्गिनाम् अज्ञानां बुद्धिभेदं न जनयेत्। **जोषयेत्**।

युक्तः विद्वान् कर्म समाचरन् कर्मसङ्गिनाम् अज्ञानां बुद्धिभेदं न जनयेत्। **कानि** जोषयेत् ?

– युक्तः विद्वान् कर्म समाचरन् कर्मसङ्गिनाम् अज्ञानां बुद्धिभेदं न जनयेत्। **सर्वकर्माणि** जोषयेत्।

**तात्पर्यम्** – ज्ञानी कर्मासक्तानाम् अविदुषां भ्रान्तिम् न उत्पादयेत्। स्वयं सत्कार्याणि कुर्वन् तद्द्वारापि तानि कारयेत्।

**रामानुजीयमतम्** – जोषयेत् = प्रीतिं जनयेत्।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | जनयेदज्ञानाम् | – जनयेत् + अज्ञानाम् जश्त्वसन्धिः |
| **(ख) समासः** | बुद्धिभेदम् | – बुद्धेः भेदः, तम् – षष्ठीतत्पुरुषः। |
| | कर्मसङ्गिनाम् | – कर्मणि सङ्गः कर्मसङ्गः – सप्तमीतत्पुरुषः। कर्मसङ्गः एषाम् एषु वा अस्तीति कर्मसङ्गिनः (मतुबर्थे इनिप्रत्ययः) तेषाम्। |
| | अज्ञानाम् | – जानन्ति इति ज्ञाः। न ज्ञाः अज्ञाः, तेषाम् – नञ्बहुव्रीहिः। |
| | सर्वकर्मणि | – सर्वाणि कर्माणि – कर्मधारयः। |
| **(ग) कृदन्तः** | युक्तः | – दृश्यताम् – 2.39 |
| | समाचरन् | – सम् + आङ् + चर् + शतृ (कर्तरि)। |

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥3.27॥**

**पदार्थः** – अहङ्कारविमूढात्मा = अहङ्कारविवशात्मा, प्रकृतेः = स्वभावस्य, गुणैः = देहेन्द्रियादिभिः विकारैः, सर्वशः = सर्वप्रकारेण, क्रियमाणानि = विधीयमानानि, कर्माणि = कर्माणि, कर्ता = आचरिता, अहम् इति = अहमेव इति, मन्यते = चिन्तयति।

**अन्वयः** – अहङ्कारविमूढात्मा प्रकृतेः गुणैः सर्वशः क्रियमाणानि कर्माणि कर्ता अहम् इति मन्यते।

**आकाङ्क्षा** –

**मन्यते**।

**कः** मन्यते ? – **अहङ्कारविमूढात्मा** मन्यते।

अहङ्कारविमूढात्मा **किम् इति** मन्यते ? – अहङ्कारविमूढात्मा **कर्ता अहम् इति** मन्यते।

अहङ्कारविमूढात्मा **कानि** कर्ता अहमिति मन्यते ? – अहङ्कारविमूढात्मा **कर्माणि** कर्ता अहमिति मन्यते।

अहङ्कारविमूढात्मा **कीदृशानि** कर्माणि कर्ता अहमिति मन्यते ?

– अहङ्कारविमूढात्मा **क्रियमाणानि** कर्माणि कर्ता अहमिति मन्यते ।

अहङ्कारविमूढात्मा **कैः** क्रियमाणानि कर्माणि कर्ता अहमिति मन्यते ?

– अहङ्कारविमूढात्मा **गुणैः** क्रियमाणानि कर्माणि कर्ता अहमिति मन्यते ।

अहङ्कारविमूढात्मा गुणैः **कथं** क्रियमाणानि कर्माणि कर्ता अहमिति मन्यते ?

– अहङ्कारविमूढात्मा गुणैः **सर्वशः** क्रियमाणानि कर्माणि कर्ता अहमिति मन्यते ।

अहङ्कारविमूढात्मा **कस्याः** गुणैः सर्वशः क्रियमाणानि कर्माणि कर्ता अहमिति मन्यते ?

– अहङ्कारविमूढात्मा **प्रकृतेः** गुणैः सर्वशः क्रियमाणानि कर्माणि कर्ता अहमिति मन्यते ।

**तात्पर्यम्** – देहेन्द्रियादयः सर्वेऽपि प्रकृतेः विकारभूताः । ते एव कर्माणि कुर्वन्ति न तु आत्मा । अयं पुनः आत्मा यदा प्रकृतिजन्येन अहङ्कारेण युक्तः भवति तदा अहमेव सर्वेषां कर्मणां कर्ता इति जानाति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कर्ताहम् | – | कर्ता + अहम् सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अहङ्कारविमूढात्मा | – | अहङ्कारेण विमूढः अहङ्कारविमूढः – तृतीयातत्पुरुषः । |
| | | | अहङ्कारविमूढः आत्मा यस्य सः – बहुव्रीहिः । |
| **(ग) कृदन्तः** | प्रकृतेः | – | प्र + कृ + क्तिन् (कर्तरि), तस्याः । प्रकरोति इति प्रकृतिः । |
| | क्रियमाणानि | – | कृ + कर्मणि लट्, शानच् । |
| **(घ) तद्धितान्तः** | सर्वशः | – | सर्व + शस् (प्रकारार्थे) । |

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥3.28॥**

**पदार्थः** – महाबाहो = महाबाहो (अर्जुन) ! गुणकर्मविभागयोः = चक्षुरादीनाम् इन्द्रियाणां दर्शनादीनां च क्रियाणां विभागयोः, तत्त्ववित् तु = याथातथ्येन ज्ञाता पुनः, गुणाः = चक्षुरादीनि इन्द्रियाणि बुद्धिः मनश्च गुणेषु = रूपशब्दादिषु, वर्तन्ते = विद्यन्ते, इति मत्वा = इति ज्ञात्वा, न सज्जते = आत्मा सक्तो न भवति।

**अन्वयः** – महाबाहो ! गुणकर्मविभागयोः तत्त्ववित् तु गुणाः गुणेषु वर्तन्ते इति मत्वा न सज्जते ।

**आकाङ्क्षा** –

**न सज्जते** ।

**कः पुनः** न सज्जते ? – **तत्त्ववित् तु** न सज्जते ।

**कयोः** तत्त्ववित् तु न सज्जते ? – **गुणकर्मविभागयोः** तत्त्ववित् तु न सज्जते ।

गुणकर्मविभागयोः तत्त्ववित्तु **किं कृत्वा** न सज्जते ? – गुणकर्मविभागयोः तत्त्ववित्तु **इति मत्वा** न सज्जते ।

गुणकर्मविभागयोः तत्त्ववित्तु **किम्** इति मत्वा न सज्जते ?

– गुणकर्मविभागयोः तत्त्ववित्तु **वर्तन्ते** इति मत्वा न सज्जते ।

गुणकर्मविभागयोः तत्त्ववित्तु **के** वर्तन्ते इति मत्वा न सज्जते ?

– गुणकर्मविभागयोः तत्त्ववित्तु **गुणाः** वर्तन्ते इति मत्वा न सज्जते ।

गुणकर्मविभागयोः तत्त्ववित्तु गुणाः **केषु** वर्तन्ते इति मत्वा न सज्जते ?

– गुणकर्मविभागयोः तत्त्ववित्तु गुणाः **गुणेषु** वर्तन्ते इति मत्वा न सज्जते ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **महाबाहो** ।

**तात्पर्यम् –** हे महाबाहो ! चक्षुःश्रोत्रादीनि ज्ञानेन्द्रियाणि, वाक्पाणिप्रभृतीनि कर्मेन्द्रियाणि, बुद्धिः मनश्च प्रकृतिजन्यानि इति गुणाः इत्युच्यन्ते । तानि च क्रमेण दर्शनश्रवणादौ वचनस्वीकारादौ अहङ्कारेण सङ्कल्पेन च प्रवर्तन्ते । न कदापि आत्मा एतेषु कर्मसु व्याप्रियते, निष्क्रियत्वात् । एवं गुणाः के, तेषां च क्रियाः काः इति ज्ञात्वा अयम् आत्मा तेभ्यः भिद्यते इति यः वस्तुस्थितिं विजानाति सः कदापि रूपशब्दादीनां दर्शनश्रवणादौ न ममतां प्राप्नोति ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | गुणा गुणेषु | – | गुणाः + गुणेषु | विसर्गसन्धिः (लोपः) |
| | वर्तन्त इति | – | वर्तन्ते + इति | यान्तावान्तादेशसन्धिः (यलोपः) |
| **(ख) समासः** | गुणकर्मविभागयोः | – | गुणः च कर्म च गुणकर्मणी – द्वन्द्वः । | |
| | | – | गुणकर्मणोः विभागः, तयोः – षष्ठीतत्पुरुषः । | |
| | तत्त्ववित् | – | तत्त्वं वेत्ति इति तत्त्ववित् – कर्तरि क्विप् उपपदसमासश्च । | |
| **(ग) कृदन्तः** | मत्वा | – | मन् + क्त्वा | |

**प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥3.29॥**

**पदार्थः –** प्रकृतेः = त्रिगुणात्मिकायाः मायायाः, गुणसम्मूढाः = सत्त्वादिगुणैः प्रकृतिभागमपि आत्मत्वेन परिकल्पयन्तः, गुणकर्मसु = चक्षुरादीन्द्रियाणां दर्शनादिषु क्रियासु, सज्जन्ते = आसक्ताः भवन्ति, अकृत्स्नविदः = अज्ञानिनः, मन्दान् = मूढान्, तान् = तादृशान्, कृत्स्नवित् = ज्ञानी, न विचालयेत् = न भ्रामयेत् ।

**अन्वयः –** प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते । अकृत्स्नविदः मन्दान् तान् कृत्स्नवित् न विचालयेत् ।

**आकाङ्क्षा –**

**सज्जन्ते** ।

**के** सज्जन्ते ? – **गुणसम्मूढाः** सज्जन्ते ।

**कस्याः** गुणसम्मूढाः सज्जन्ते ? – **प्रकृतेः** गुणसम्मूढाः सज्जन्ते ।

प्रकृतेः गुणसम्मूढाः **कुत्र** सज्जन्ते ? – प्रकृतेः गुणसम्मूढाः **गुणकर्मसु** सज्जन्ते ।

प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, **तान् किं कुर्यात् ?**

– प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, **तान् न विचालयेत् ।**

प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, तान् **कः** नविचालयेत् ?

– प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, तान् **कृत्स्नवित्** न विचालयेत् ।

प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, **कीदृशान्** तान् कृत्स्नवित् न विचालयेत् ?

– प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, **मन्दान्** तान् कृत्स्नवित् न विचालयेत् ।

प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, **पुनश्च कीदृशान्** मन्दान् तान् कृत्स्नवित् न विचालयेत् ?

– प्रकृतेः गुणसम्मूढाः गुणकर्मसु सज्जन्ते, **अकृत्स्नविदः** मन्दान् तान् कृत्स्नवित् न विचालयेत् ।

**तात्पर्यम् –** प्रकृतेः गुणैः सत्त्वादिभिः तद्भागभूतम् इदम् इन्द्रियादिकमपि आत्मत्वेन परिकल्प्य तेषाम् इन्द्रियादीनां दर्शनश्रवणादौ क्रियायां प्रवर्तन्ते । वस्तुतस्तु ते मूढाः । तथापि तथा प्रवृत्तान् तान् ज्ञानी न कदापि क्रियातः विचालयेत् ।

**व्याकरणम् –**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | प्रकृतेर्गुणसम्मूढाः | – | प्रकृतेः + गुणसम्मूढाः | विसर्गसन्धिः (रेफः) |
| | कृत्स्नविन्न | – | कृत्स्नवित् + न | परसवर्णसन्धिः |
| **(ख) समासः** | गुणसम्मूढाः | – | गुणैः सम्मूढाः – तृतीयातत्पुरुषः । | |
| | गुणकर्मसु | – | गुणानां कर्माणि, तेषु – षष्ठीतत्पुरुषः । | |
| | अकृत्स्नवित् | – | कृत्स्नं वेत्ति इति कृत्स्नवित् – कर्तरि क्विप् उपपदसमासश्च ।<br>न कृत्स्नवित् – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | प्रकृतिः | – | दृश्यताम् – 3.27 | |
| | सम्मूढाः | – | सम् + मुह् + क्त । (कर्तरि) | |

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥3.30॥**

**पदार्थः –** अध्यात्मचेतसा = आत्मनिष्ठमनसा, सर्वाणि = निखिलानि, कर्माणि = कर्तव्यानि, मयि =भगवति, सन्यस्य = समर्प्य, निराशीः = निष्कामः, निर्ममः = ममताशून्यः, विगतज्वरः = विगतभयः, भूत्वा = स्थित्वा, युध्यस्व = युद्धं कुरु ।

**अन्वयः –** अध्यात्मचेतसा सर्वाणि कर्माणि मयि सन्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ।

**आकाङ्क्षा –**

**युध्यस्व** ।

**किं** कृत्वा युध्यस्व ? – **भूत्वा** युध्यस्व ।

**कीदृशः** भूत्वा युध्यस्व ? – **निराशीः** भूत्वा युध्यस्व ।

**पुनश्च कीदृशो** निरीशीः भूत्वा युध्यस्व ? – निरीशीः **निर्ममः** भूत्वा युध्यस्व ।

निरीशीः निर्ममः **पुनश्च कीदृशो** भूत्वा युध्यस्व ? – निरीशीः निर्ममः **विगतज्वरः** भूत्वा युध्यस्व ।

**किं कृत्वा** निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ?

– **सन्यस्य** निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ।

**कस्मिन्** सन्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ?

– **मयि** सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ।

**कानि** मयि सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ?

– **कर्माणि** मयि सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ।

**कति** कर्माणि मयि सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ?

– **सर्वाणि** कर्माणि मयि सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ।

**केन** सर्वाणि कर्माणि मयि सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ?

– **अध्यात्मचेतसा** सर्वाणि कर्माणि मयि सन्न्यस्य निराशीः निर्ममः विगतज्वरः भूत्वा युध्यस्व ।

**तात्पर्यम्** – भवान् आत्मनि एव मनः स्थापयन् सर्वकर्माणि भगवते समर्प्य आशारहितः ममकारशून्यः विगतभयश्च भूत्वा युद्धं करोतु ।

**व्याकरणम्** –

**(क) सन्धिः** सन्न्यस्याध्यात्मचेतसा – सन्न्यस्य + अध्यात्मचेतसा सवर्णदीर्घसन्धिः
निराशीर्निर्ममः – निराशीः + निर्ममः विसर्गसन्धिः (रेफः)
निर्ममो भूत्वा – निर्ममः + भूत्वा विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** अध्यात्मचेतसा – आत्मनि इति अध्यात्मम् – अव्ययीभावः ।
अध्यात्मं चेतः, तेन – सप्तमीतत्पुरुषः ।
विगतज्वरः – विगतः ज्वरः यस्मात् सः – बहुव्रीहिः ।
निराशीः – निर्गता आशीः यस्मात् सः – बहुव्रीहिः ।

**(ग) कृदन्तः** सन्न्यस्य – सम् + नि + अस् + ल्यप् ।

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥3.31॥**

**पदार्थः** – ये मानवाः = ये मनुष्याः, नित्यम् = सततम्, मे = मम, इदम् = एतत्, मतम् = अभिप्रायम्, अनुतिष्ठन्ति = आचरन्ति, अनसूयन्तः = असूयारहिताः, श्रद्धावन्तः = श्रद्धालवः, तेऽपि = तेऽपि, कर्मभिः = कर्मबन्धनात्, मुच्यन्ते = मुक्ताः भवन्ति ।

**अन्वयः** – ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति, अनसूयन्तः श्रद्धावन्तः तेऽपि कर्मभिः मुच्यन्ते ।

**आकाङ्क्षा** –

**अनुतिष्ठन्ति** ।

**के** अनुतिष्ठन्ति ? – **मानवाः** अनुतिष्ठन्ति ।

मानवाः **किम्** अनुतिष्ठन्ति ? – मानवाः **मतम्** अनुतिष्ठन्ति ?

मानवाः **किं** मतम् अनुतिष्ठन्ति ? – मानवाः **इदं** मतम् अनुतिष्ठन्ति ।

मानवाः **कस्य** इदं मतम् अनुतिष्ठन्ति ? – मानवाः **मे** इदं मतम् अनुतिष्ठन्ति ।

मानवाः मे इदं मतं **कदा** अनुतिष्ठन्ति ? — मानवाः मे इदं मतं **नित्यम्** अनुतिष्ठन्ति ।

ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति **ते कीदृशाः भवन्ति** ?

– ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति **ते मुच्यन्ते** ।

ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति **कीदृशाः** ते मुच्यन्ते ?

– ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति **श्रद्धावन्तः** ते मुच्यन्ते ।

ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति श्रद्धावन्तः **पुनश्च कीदृशाः** ते मुच्यन्ते ?

– ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति श्रद्धावन्तः **अनसूयन्तः** ते मुच्यन्ते ।

ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति श्रद्धावन्तः अनसूयन्तः ते **कैः** मुच्यन्ते ?

– ये मानवाः मे इदं मतं नित्यम् अनुतिष्ठन्ति श्रद्धावन्तः अनसूयन्तः ते **कर्मभिः** मुच्यन्ते ।

**तात्पर्यम्**– ये मानवाः मदभिप्रायानुगुणं विना असूयां श्रद्धया च व्यवहरन्ति ते मानवाः सर्वकर्मभिः मुक्ताः भवन्ति ।

**व्याकरणम्** –

**(क) सन्धिः** श्रद्धावन्तोऽनसूयन्तः – श्रद्धावन्तः + अनसूयन्तः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

अनसूयन्तो मुच्यन्ते – अनसूयन्तः + मुच्यन्ते विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

तेऽपि – ते + अपि पूर्वरूपसन्धिः

**(ख) कृदन्तः** असूयन्तः – असू + शतृ (कर्तरि) ।

श्रद्धावन्तः – श्रद्धा + मतुप् । श्रद्धा एषाम् एषु वा अस्ति ।

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥3.32॥**

**पदार्थः** – ये तु = ये मनुष्याः, अभ्यसूयन्तः = असूयाविष्टाः सन्तः, मे = मम, एतन्मतम् = इदम् इष्टम्, न अनुतिष्ठन्ति = न पालयन्ति, सर्वज्ञानविमूढान् = सकलज्ञानशून्यान्, अचेतसः = अविवेकिनः, तान् = तान् मानवान्, नष्टान् = नाशं गतान्, विद्धि = जानीहि ।

**अन्वयः** – ये तु अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति सर्वज्ञानविमूढान् अचेतसः तान् नष्टान् विद्धि ।

**आकाङ्क्षा** –

**न अनुतिष्ठन्ति** ।

**के** न अनुतिष्ठन्ति ? – **अभ्यसूयन्तः** न अनुतिष्ठन्ति ।

अभ्यसूयन्तः **किं** न अनुतिष्ठन्ति ? – अभ्यसूयन्तः **मतं** न अनुतिष्ठन्ति ।

अभ्यसूयन्तः **किं** मतं न अनुतिष्ठन्ति ? – अभ्यसूयन्तः **एतत्** मतं न अनुतिष्ठन्ति ।

अभ्यसूयन्तः **कस्य** एतत् मतं न अनुतिष्ठन्ति ? – अभ्यसूयन्तः **मे** एतत् मतं न अनुतिष्ठन्ति ।

ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति **ते कीदृशाः** ?

– ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति **तान् विद्धि** ।

ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति तान् **कीदृशान्** विद्धि ?

– ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति तान् **नष्टान्** विद्धि ।

ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति **कीदृशान्** तान् नष्टान् विद्धि ?

– ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति **सर्वज्ञानविमूढान्** तान् नष्टान् विद्धि ।

ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति सर्वज्ञानविमूढान् **पुनश्च कीदृशान्** तान् नष्टान् विद्धि ?

– ये अभ्यसूयन्तः मे एतत् मतं न अनुतिष्ठन्ति सर्वज्ञानविमूढान् **अचेतसः** तान् नष्टान् विद्धि ।

**तात्पर्यम्** – ये मानवाः असूयाविष्टाः सन्तः मम अभिप्रायानुगुणं न अनुसरन्ति तान् सर्वान् अविवेकिनः सकल-ज्ञानशून्यान् च मृतानेव जानीहि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | त्वेतदभ्यसूयन्तः | – तु + एतत् | यणसन्धिः |
| | | – एतत् + अभ्यससूयन्तः | जश्त्वसन्धिः |
| | अभ्यसूयन्तो न | – अभ्यसूयन्तः + न | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | नानुतिष्ठन्ति | – न + अनुतिष्ठन्ति | सवर्णदीर्घसन्धिः |
| | सर्वज्ञानविमूढांस्तान् | – सर्वज्ञानविमूढान् + तान् | रुत्वम्, अनुस्वारागमः, विसर्गः सत्वं च |
| **(ख) समासः** | सर्वज्ञानविमूढान् | – सर्वाणि ज्ञानानि सर्वज्ञानानि – कर्मधारयः । सर्वज्ञानेषु विमूढाः, तान् – सप्तमीतत्पुरुषः । | |
| | अचेतसः | – नास्ति चेतः येषां ते – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | अभ्यसूयन्तः | – अभि + असू + शतृ (कर्तरि) । | |
| | नष्टान् | – नश् + क्त (कर्तरि) तान् । | |

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥3.33॥**

**पदार्थः** – ज्ञानवान् अपि = ज्ञानसम्पन्नः अपि, प्रकृतेः = स्वभावस्य, सदृशम् = अनुरूपम्, चेष्टते = कुरुते, भूतानि = प्राणिनः, प्रकृतिम् = स्वभावम्, यान्ति = उपगच्छन्ति, निग्रहः = निषेधः, किं करिष्यति = किं वा विधास्यति ?

**अन्वयः** – ज्ञानवान् अपि प्रकृतेः सदृशं चेष्टते । भूतानि प्रकृतिं यान्ति । निग्रहः किं करिष्यति ?

**आकाङ्क्षा** –

**चेष्टते** ।

| | |
|---|---|
| **कीदृशं** चेष्टते ? | – **सदृशं** चेष्टते । |
| **कस्याः** सदृशं चेष्टते ? | – **प्रकृतेः** सदृशं चेष्टते । |
| **कीदृश्याः** प्रकृतेः सदृशं चेष्टते ? | – **स्वस्याः** प्रकृतेः सदृशं चेष्टते । |
| **कः** प्रकृतेः सदृशं चेष्टते ? | – **ज्ञानवान्** अपि प्रकृतेः सदृशं चेष्टते । |

**यान्ति** ।

**कां** यान्ति ? – **प्रकृतिं** यान्ति ।

**कानि** प्रकृतिं यान्ति ? – **भूतानि** प्रकृतिं यान्ति ।

**किं करिष्यति** ?

**कः** किं करिष्यति ? – **निग्रहः** किं करिष्यति ?

**तात्पर्यम्** – ज्ञानवन्तोऽपि जन्मान्तरीयकर्मसंस्कारस्य अनुगुणमेव अस्मिन् जन्मनि प्रवर्तन्ते, किं पुनः मूर्खाः ? तस्मात् सर्वेऽपि मन्दाः स्वभावमेव अनुसरन्ति । न तेषां निग्रहः कथञ्चिदपि कर्तुं शक्यते ।

**व्याकरणम्** –

**(क) सन्धिः** प्रकृतेर्ज्ञानवानपि – प्रकृतेः + ज्ञानवानपि विसर्गसन्धिः (रेफः)

**(ख) तद्धितान्तः** ज्ञानवान् – ज्ञान + मतुप् । ज्ञानम् अस्य अस्मिन् वा अस्ति ।

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥3.34॥**

**पदार्थः** – इन्द्रियस्य इन्द्रियस्य = चक्षुरादीनां ज्ञानेन्द्रियाणां वागादीनां च कर्मेन्द्रियाणाम्, अर्थे = रूपरसादौ वचनस्वीकारादौ च, रागद्वेषौ = रागः द्वेषश्च, व्यवस्थितौ = तिष्ठतः, तयोः = रागद्वेषयोः, वशम् = अधीनताम्, न आगच्छेत् = न प्राप्नुयात्, हि = यतः, तौ = रागद्वेषौ, अस्य = एतस्य मुमुक्षोः, परिपन्थिनौ = प्रतिबन्धकौ ।

**अन्वयः** – इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तयोः वशं न आगच्छेत् । तौ हि अस्य परिपन्थिनौ ।

**आकाङ्क्षा** –

**व्यवस्थितौ** ।

**कौ** व्यवस्थितौ ? – **रागद्वेषौ** व्यवस्थितौ ।

**कुत्र** रागद्वेषौ व्यवस्थितौ ? – **अर्थे** रागद्वेषौ व्यवस्थितौ ।

**कस्य** अर्थे रागद्वेषौ व्यवस्थितौ ? – **इन्द्रियस्य इन्द्रियस्य** अर्थे रागद्वेषौ व्यवस्थितौ ।

इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । **तेन किम्** ?

– इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । **तेन न आगच्छेत्** ।

इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तेन **कं** न आगच्छेत् ?

– इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तेन **वशं** न आगच्छेत् ।

इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । **कयोः** वशं न आगच्छेत् ?

– इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । **तयोः** वशं न आगच्छेत् ।

इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तयोः वशं न आगच्छेत् । **कुतः** ?

– इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तयोः वशं न आगच्छेत् । **तौ हि परिपन्थिनौ** ।

इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तयोः वशं न आगच्छेत् । तौ **कस्य** परिपन्थिनौ ?

– इन्द्रियस्य इन्द्रियस्य अर्थे रागद्वेषौ व्यवस्थितौ । तयोः वशं न आगच्छेत् । तौ **अस्य** परिपन्थिनौ ।

**तात्पर्यम्** – चक्षुरादीनि ज्ञानेन्द्रियाणि। रूपरसगन्धादयः तेषां विषयाः। वाक्पाण्यादीनि कर्मेन्द्रियाणि। वचनदानादयः तु तेषां विषयाः। तेषु अनुकूलेषु विषयेषु रागः भवति, प्रतिकूलेषु तु द्वेषः। तस्मात् बुद्धिमान् गुरूपदेशादिना तयोः रागद्वेषयोः यथा अधीनः न भवति तथा प्रयतेत। कुतः ? तौ हि मोक्षं प्राप्तुम् इच्छतः पुरुषस्य कार्यविघातकौ स्तः।

**माध्वमतम्** – सर्वेषाम् इद्रियाणां स्वकीये विषयपदार्थे रागद्वेषौ वर्तेते एव। तस्मात् तौ आत्मनः शत्रुवत् विद्येते। ज्ञानी तयोर्वशं न गच्छेत्।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | इन्द्रियस्येन्द्रियस्यार्थे | – इन्द्रियस्य + इन्द्रियस्य | गुणसन्धिः |
| | | – इन्द्रियस्य + अर्थे | सवर्णदीर्घसन्धिः |
| | तयोर्न | – तयोः + न | विसर्गसन्धिः (रेफः) |
| | ह्यस्य | – हि + अस्य | यण् सन्धिः |
| **(ख) समासः** | रागद्वेषौ | – रागश्च द्वेषश्च – द्वन्द्वः। | |
| **(ग) कृदन्तः** | व्यवस्थितौ | – वि +अव + स्था + क्त। (कर्तरि) | |
| **विशेषः** – | इन्द्रियस्य इन्द्रियस्य | – कात्स्न्र्यस्य गम्यमानत्वात् इन्द्रियशब्दस्य द्वित्वम्। सर्वेषामपि इन्द्रियाणाम् इत्यर्थः। | |

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥3.35॥**

**पदार्थः** – स्वनुष्ठितात् = साधु आचरितात्, परधर्मात् = अन्यधर्मात्, विगुणः = गुणरहितः अपि, स्वधर्मः = आत्मधर्मः, श्रेयान् = वरीयान्, स्वधर्मे = आत्मधर्मे, निधनम् = नाशोऽपि, श्रेयः = साधीयान् (श्रेष्ठः), परधर्मः = अन्यधर्मः, भयावहः = भयजनकः।

**अन्वयः** – स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान्। स्वधर्मे निधनं श्रेयः। परधर्मः भयावहः।

**आकाङ्क्षा** –

**श्रेयान्।**

**कः** श्रेयान् ? – **स्वधर्मः** श्रेयान्।

**कीदृशः** स्वधर्मः श्रेयान् ? – **विगुणः** स्वधर्मः श्रेयान्।

**कस्मात्** विगुणः स्वधर्मः श्रेयान् ? – **परधर्मात्** विगुणः स्वधर्मः श्रेयान्।

**कीदृशात्** परधर्मात् विगुणः स्वधर्मः श्रेयान् ? – **स्वनुष्ठितात्** परधर्मात् विगुणः स्वधर्मः श्रेयान्।

**स्वनुष्ठितात्** परधर्मात् विगुणः स्वधर्मः श्रेयान्। **तेन किम् ?**

– स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान्। (तेन) **श्रेयः**।

स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान्। तेन **किं** श्रेयः ?

– स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान्। तेन **निधनं** श्रेयः।

स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान् । तेन **कुत्र** निधनं श्रेयः ?

– स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान् । तेन **स्वधर्मे** निधनं श्रेयः ।

स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान् । तेन स्वधर्मे निधनं श्रेयः । **परधर्मः कीदृशः ?**

– स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः श्रेयान् । तेन स्वधर्मे निधनं श्रेयः । **परधर्मः भयावहः ।**

**तात्पर्यम्** – परधर्माचरणस्य अपेक्षया स्वधर्माचरणम् उत्तमम् । किञ्च स्वधर्मे नाशोऽपि श्रेयः । परधर्मस्तु अनर्थजनकः एव भवति ।

**रामानुजीयमतम्** – स्वधर्मः = कर्मयोगः, परधर्मः = ज्ञानयोगः ।

**व्याकरणम्** –

**(क) सन्धिः** स्वधर्मो विगुणः – स्वधर्मः + विगुणः विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः

परधर्मो भयावहः – परधर्मः + भयावहः विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः

**(घ) तद्धितान्तः** श्रेयान् – प्रशस् / वृद्ध + ईयसुन् (श्र इति आदेशः)

**अर्जुन उवाच – अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥3.36॥**

**पदार्थः** – अथ = एवं हि, केन = केन हेतुना, प्रयुक्तः = प्रेरितः, वार्ष्णेय = वृष्णिकुलसम्भव ! अनिच्छन् अपि = अनभिलषन् अपि, बलात् इव = हठात् इव, नियोजितः = प्रवर्तितः, अयं पूरुषः = एषः मानवः, पापं चरति = अकर्मणि प्रवर्तते ?

**अन्वयः** – वार्ष्णेय ! अथ केन प्रयुक्तः अनिच्छन्नपि बलात् इव नियोजितः अयं पूरुषः पापं चरति ?

**आकाङ्क्षा** –

**चरति** ।

**कः** चरति ? – **पूरुषः** चरति ।

**कः** पूरुषः चरति ? – **अयं** पूरुषः चरति ।

अयं पूरुषः **किं** चरति ? – अयं पूरुषः **पापं** चरति ।

अयं पूरुषः **कीदृशः** पापं चरति ? – अयं पूरुषः **नियोजितः** पापं चरति ?

अयं पूरुषः **कस्मादिव** नियोजितः पापं चरति ? – अयं पूरुषः **बलादिव** नियोजितः पापं चरति ।

अयं पूरुषः **किं कुर्वन्नपि** बलादिव नियोजितः पापं चरति ?

– अयं पूरुषः **अनिच्छन्नपि** बलादिव नियोजितः पापं चरति ।

**कथंभूतः** अयं पूरुषः अनिच्छन्नपि बलादिव नियोजितः पापं चरति ?

– **प्रयुक्तः** अयं पूरुषः अनिच्छन्नपि बलादिव नियोजितः पापं चरति ।

**अनेन** प्रयुक्तः अयं पूरुषः अनिच्छन्नपि बलादिव नियोजितः पापं चरति ।

– **अथ केन** प्रयुक्तः अयं पूरुषः अनिच्छन्नपि बलादिव नियोजितः पापं चरति ?

अस्मिन् श्लोके सम्बोधनपदं किम् ? — **वार्ष्णेय** ।

**तात्पर्यम् –** हे कृष्ण ! अनभिलषन् अपि मानवः राज्ञा नियोजितः भृत्यः इव केन प्रेरितः सन् बलात् पापम् आचरति ?

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | प्रयुक्तोऽयम् | – प्रयुक्तः + अयम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| | अनिच्छन्नपि | – अनिच्छन् + अपि | ङमुडागमसन्धिः |
| | बलादिव | – बलात् + इव | जश्त्वसन्धिः |
| **(ख) कृदन्तः** | प्रयुक्तो | – प्र + युज् + क्त । (कर्मणि) | |
| | इच्छन् | – इष् + शतृ (कर्तरि) । | |
| | नियोजितः | – नि + युज् + क्त । (कर्मणि) | |
| **(ग) तद्धितान्तः** | वार्ष्णेय | – वृष्णि + ञ्यङ् (अपत्यार्थे), तत्सम्बुद्धौ । | |

**श्रीभगवान् उवाच –** **काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥3.37॥**

**पदार्थः –** एषः कामः = अयम् अभिलाषः, एषः क्रोधः = अयं रोषः, रजोगुणसमुद्भवः = रजोगुणात् उत्पन्नः, महाशनः = महाभोजनः, महापाप्मा = महापापः च, इह = अत्र, एनम् = अमुम्, वैरिणम् = शत्रुम्, विद्धि = जानीहि ।

**अन्वयः –** एषः कामः एषः क्रोधः रजोगुणसमुद्भवः महाशनः महापाप्मा च अस्ति । (तेन) इह एनं वैरिणं विद्धि ।

**आकाङ्क्षा –**

**एषः** ।

एषः **कः** ? — एषः **कामः** ।

एषः कामः । एषः **पुनश्च कः ?** — एषः कामः । **एषः क्रोधः** ।

एषः कामः, एषः (एव च) क्रोधः **कीदृशः** ? — एषः कामः, एषः (एव च) क्रोधः **रजोगुणसमुद्भवः** ।

एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, **पुनश्च कीदृशः** ?

– एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, **महाशनः** ।

एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, **पुनश्च कीदृशः** ?

– एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, **महापाप्मा** ।

एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । **तेन किम्** ?

– एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । (तेन) **विद्धि** ।

एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । तेन **कं** विद्धि ?

– एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । तेन **एनं** विद्धि ।

एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । तेन एनं **कीदृशं** विद्धि ?

– एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । तेन एनं **वैरिणं** विद्धि ।

एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । तेन **कुत्र** एनं वैरिणं विद्धि ?

– एषः कामः, एषः एव च क्रोधः रजोगुणसमुद्भवः, महाशनः, महापाप्मा । तेन **इह** एनं वैरिणं विद्धि ।

**तात्पर्यम् –** अयं विषयाभिलाषः । प्रतिरोधे सति अयमेव क्रोधः इति उच्यते । अयं रजोगुणात् समुद्भवति । अनेन पुरुषः अपरिमितानि वस्तूनि प्राप्तुम् इच्छति इति हेतोः अयं महाशनः । अनेनैव हेतुना अपरिमितं पापं च करोति इति अयं महापाप्मा इति उच्यते । अनेनैव प्रेरितः एव पुरुषः पापम् अवाप्नोति इति एनं वैरिणं भावय ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | काम एष क्रोध एषः | – कामः + एषः + क्रोधः + एषः | विसर्गसन्धिः (लोपः) |
| | महाशनो महापाप्मा | – महाशनः + महापाप्मा | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | विद्ध्येनम् | – विद्धि + एनम् | यण् सन्धिः |
| **(ख) समासः** | रजोगुणसमुद्भवः | – रजोगुणात् समुद्भवः – पञ्चमीतत्पुरुषः । | |
| | महाशनः | – महत् अशनं यस्य सः – बहुव्रीहिः । | |
| | महापाप्मा | – महत् पाप्म यस्मिन् सः – बहुव्रीहिः । | |
| **(घ) तद्धितान्तः** | वैरी | – वैर + इनि (मतुबर्थे) । वैरम् अस्य अस्मिन् वा अस्ति इत्यर्थः । | |

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥3.38॥**

**पदार्थः –** यथा = येन प्रकारेण, धूमेन = धूमेन, वह्निः = अग्निः, आव्रियते = आवृतः भवति, यथा = येन प्रकारेण, मलेन = रजसा, आदर्शः = दर्पणः, यथा = येन प्रकारेण, उल्बेन = गर्भवेष्टनेन चर्मणा, गर्भः = पिण्डः, तथा = तेन प्रकारेण, तेन = कामेन, इदम् = ज्ञानम्, आवृतम् = आच्छादितम् ।

**अन्वयः –** यथा धूमेन वह्निः आव्रियते, यथा मलेन आदर्शः, यथा उल्बेन च गर्भः तथा इदं (ज्ञानम्) तेन आवृतम् ।

**आकाङ्क्षा –**

**आव्रियते** ।

**कः** आव्रियते ? – **वह्निः** आव्रियते ।

**केन** वह्निः आव्रियते ? – **धूमेन** वह्निः आव्रियते ।

धूमेन वह्निः आव्रियते, **पुनश्च केन कः** ? – धूमेन वह्निः आव्रियते । **मलेन च आदर्शः** ।

धूमेन वह्निः आव्रियते, मलेन च आदर्शः, **पुनश्च केन कः** ?

– धूमेन वह्निः आव्रियते, मलेन च आदर्शः, **उल्बेन च गर्भः** ।

यथा धूमेन वह्निः आव्रियते, मलेन च आदर्शः, उल्बेन च गर्भः, **तथा किम् आवृतम्** ?

– यथा धूमेन वह्निः आव्रियते, मलेन च आदर्शः, उल्बेन च गर्भः, **तथा इदम्** आवृतम् ।

यथा धूमेन वह्निः आव्रियते, मलेन च आदर्शः, उल्बेन च गर्भः, तथा इदं **केन** आवृतम् ?

– यथा धूमेन वह्निः आव्रियते, मलेन च आदर्शः, उल्बेन च गर्भः, तथा इदं **तेन** आवृतम् ।

**तात्पर्यम् –** येन प्रकारेण धूमेन अग्निः, रजसा दर्पणः, यथा च गर्भवेष्टनेन चर्मणा गर्भः आच्छादितः भवति तेन प्रकारेण कामेन ज्ञानम् आच्छादितम् अस्ति ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | |
|---|---|---|
| धूमेनाव्रियते | – धूमेन + आव्रियते | सवर्णदीर्घसन्धिः |
| यथादर्शः | – यथा + आदर्शः | सवर्णदीर्घसन्धिः |
| वह्निर्यथा | – वह्निः + यथा | विसर्गसन्धिः (रेफः) |
| आदर्शो मलेन | – आदर्शः + मलेन | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| आवृतो गर्भः | – आावृतः + गर्भः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| यथोल्बेन | – यथा + उल्बेन | गुणसन्धिः |
| तेनेदम् | – तेन + इदम् | गुणसन्धिः |

**(ख) कृदन्तः** आवृतम् – आङ् + वृ + क्त। (कर्मणि)

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ।।3.39।।**

**पदार्थः** – कौन्तेय = कुन्तीसुत ! ज्ञानिनः = विदुषः, नित्यवैरिणा = नित्यशत्रुणा, कामरूपेण = इच्छारूपेण, दुष्पूरेण = पूरयितुमशक्येन, अनलेन = अग्निना, एतेन = अनेन, ज्ञानम् = ज्ञानम्, आवृतम् = आच्छादितम्।

**अन्वयः** – कौन्तेय ! ज्ञानिनः नित्यवैरिणा कामरूपेण दुष्पूरेण अनलेन च एतेन ज्ञानम् आवृतम्।

**आकाङ्क्षा –**

**आवृतम्**।

**केन** आवृतम् ? – **एतेन** आवृतम्।

**कीदृशेन** एतेन आवृतम् ? – **नित्यवैरिणा** एतेन आवृतम्।

**कस्य** नित्यवैरिणा एतेन आवृतम् ? – **ज्ञानिनः** नित्यवैरिणा एतेन आवृतम्।

ज्ञानिनः नित्यवैरिणा **पुनश्च कीदृशेन** एतेन आवृतम् ? – ज्ञानिनः नित्यवैरिणा **कामरूपेण** एतेन आवृतम्।

ज्ञानिनः नित्यवैरिणा कामरूपिणा **पुनश्च कीदृशेन** एतेन आवृतम् ?

– ज्ञानिनः नित्यवैरिणा कामरूपिणा **दुष्पूरेण** एतेन आवृतम्।

ज्ञानिनः नित्यवैरिणा कामरूपिणा दुष्पूरेण **पुनश्च कीदृशेन** एतेन आवृतम् ?

– ज्ञानिनः नित्यवैरिणा कामरूपिणा दुष्पूरेण **अनलेन च** एतेन आवृतम्।

ज्ञानिनः नित्यवैरिणा कामरूपिणा दुष्पूरेण अनलेन च एतेन **किम्** आवृतम् ?

– ज्ञानिनः नित्यवैरिणा कामरूपिणा दुष्पूरेण अनलेन च एतेन **ज्ञानम्** आवृतम्।

अस्मिन् श्लोके सम्बोधनं पदं किम् ? – **कौन्तेय**।

**तात्पर्यम्** – हे अर्जुन ! अयं कामः ज्ञानिनां सर्वदा वैरी। विषयैः पूरयितुम् अशक्यः अयम् अग्निः इव भाति। तादृशः कामः ज्ञानम् आवृत्य वर्तते।

**व्याकरणम् –**

**(क) सन्धिः** ज्ञानिनो नित्यवैरिणा – ज्ञानिनः + नित्यवैरिणा विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

| | दुष्पूरेणानलेन | – दुष्पूरेण + अनलेन सवर्णदीर्घसन्धिः |
|---|---|---|
| **(ख) समासः** | नित्यवैरिणा | – नित्यं वैरी, तेन – सुप्समासः । |
| | कामरूपेण | – कामेन रूपाणि यस्य सः, तेन – बहुव्रीहिः । |
| **(घ) तद्धितान्तः** | ज्ञानी | – ज्ञान + इनि (मतुबर्थे) ज्ञानम् अस्य अस्मिन् वा अस्ति । |
| | वैरी | – वैर + इनि (मतुबर्थे) वैरम् अस्य अस्मिन् वा अस्ति । |

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥3.40॥**

**पदार्थः –** इन्द्रियाणि = नेत्रादीनि, मनः = चित्तम्, बुद्धिश्च = धीः च, अस्य = एतस्य कामस्य, अधिष्ठानम् = आश्रयः, उच्यते = कथ्यते, एषः = एषः कामः, एतैः = एभिः, ज्ञानम् = ज्ञानम्, आवृत्य = आच्छाद्य, देहिनम् = शरीरिणम्, विमोहयति = विविधं मोहयति ।

**अन्वयः –** इन्द्रियाणि, मनः, बुद्धिश्च अस्य अधिष्ठानम् उच्यते । एषः (कामः) एतैः ज्ञानम् आवृत्य देहिनं विमोहयति ।

**आकाङ्क्षा –**

**उच्यते ।**

| | |
|---|---|
| **किम्** उच्यते ? | – **अधिष्ठानम्** उच्यते । |
| **कस्य** अधिष्ठानम् उच्यते ? | – **अस्य** अधिष्ठानम् उच्यते । |
| **कानि च** अस्य अधिष्ठानम् उच्यते ? | – **इन्द्रियाणि, मनः, बुद्धिश्च** अस्य अधिष्ठानम् उच्यते । |

**विमोहयति ।**

| | |
|---|---|
| **कं** विमोहयति ? | – **देहिनं** विमोहयति । |
| **किं कृत्वा** देहिनं विमोहयति ? | – **आवृत्य** देहिनं विमोहयति । |
| **किम्** आवृत्य देहिनं विमोहयति ? | – **ज्ञानम्** आवृत्य देहिनं विमोहयति । |
| **कैः** ज्ञानम् आवृत्य देहिनं विमोहयति ? | – **एतैः** ज्ञानम् आवृत्य देहिनं विमोहयति । |
| **कः** एतैः ज्ञानम् आवृत्य देहिनं विमोहयति ? | – **एषः (कामः)** एतैः ज्ञानम् आवृत्य देहिनं विमोहयति । |

**तात्पर्यम् –** पञ्चेन्द्रियाणि, मनः, बुद्धिः च कामस्य आश्रयाः सन्ति । एषः कामः एभिः पञ्चभिः इन्द्रियैः ज्ञानम् आच्छाद्य शरीरिणं विमोहयति ।

**व्याकरणम् –**

| | | |
|---|---|---|
| **(क) सन्धिः** | मनो बुद्धिः | – मनः + बुद्धिः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | बुद्धिरस्य | – बुद्धिः + अस्य विसर्गसन्धिः (रेफः) |
| | विमोहयत्येषः | – विमोहयति + एषः यणसन्धिः |
| | एतैर्विमोहयति | – एतैः + विमोहयति विसर्गसन्धिः (रेफः) |
| **(ख) कृदन्तः** | अधिष्ठानम् | – अधि + स्था + ल्युट् (अधिकरणे) |
| | आवृत्य | – आङ् + वृतु + ल्यप् । |

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥3.41॥**

**पदार्थः** – भरतर्षभ = भरतश्रेष्ठ ! तस्मात् = तेन हेतुना, त्वम् = त्वम्, आदौ = प्रथमम्, इन्द्रियाणि = नेत्रादीनि, नियम्य = निगृह्य, ज्ञानविज्ञाननाशनम् = समस्तविज्ञाननाशनम्, एनम् = इमम्, पाप्मानम् = पापम्, प्रजहि = त्यज ।

**अन्वयः** – भरतर्षभ ! तस्मात् त्वम् आदौ इन्द्रियाणि नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ।

**आकाङ्क्षा** –

**त्वं प्रजहि ।**
त्वं **कं** प्रजहि ? – त्वम् **एनं** प्रजहि ।
त्वं **कीदृशम्** एनं प्रजहि ? – त्वं **पाप्मानम्** एनं प्रजहि ।
त्वं **पुनः कीदृशं** पाप्मानम् एनं प्रजहि ? – त्वं **ज्ञानविज्ञाननाशनं** पाप्मानम् एनं प्रजहि ।
त्वं **किं कृत्वा** ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ? – त्वं **नियम्य** ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ।
त्वं **कानि** नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ?
– त्वम् **इन्द्रियाणि** नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ।
त्वं **कदा** इन्द्रियाणि नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ?
– त्वम् **आदौ** इन्द्रियाणि नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ।
**कस्मात्** त्वम् आदौ इन्द्रियाणि नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ?
– **तस्मात्** त्वम् आदौ इन्द्रियाणि नियम्य ज्ञानविज्ञाननाशनं पाप्मानम् एनं प्रजहि ।
अस्मिन् श्लोके सम्बोधनपदं किम् ? – **भरतर्षभ** ।

**तात्पर्यम्** – अर्जुन ! अतः भवान् आदौ सर्वाणि इन्द्रियाणि संयम्य समस्तविज्ञाननाशकम् एतत् पापं त्यजतु ।

**रामानुजीयमतम्** – ज्ञानम् = आत्मस्वरूपविषयं ज्ञानम्, विज्ञानम् = आत्मस्वरूपविवेकविषयं ज्ञानम् ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | इन्द्रियाण्यादौ | – इन्द्रियाणि + आदौ यणसन्धिः |
| | ह्येनम् | – हि + एनम् यणसन्धिः |
| **(ख) समासः** | भरतर्षभः | – भरतः ऋषभः इव – उपमितसमासः (कर्मधारयः) |
| | ज्ञानविज्ञाननाशनम् | – ज्ञानं च विज्ञानं च, ज्ञानविज्ञाने – द्वन्द्वः । ज्ञानविज्ञानयोः नाशनम्, तत् – षष्ठीतत्पुरुषः । |
| **(ग) कृदन्तः** | नियम्य | – नि +यम् + ल्यप् । |

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥3.42॥**

**पदार्थः** – इन्द्रियाणि = नेत्रादीनि, पराणि = उत्कृष्टानि, आहुः = कथयन्ति, इन्द्रियेभ्यः = नेत्रादिभ्यः, परम् = उत्कृष्टम्, मनः तु = चित्तं पुनः, मनसः = चित्तात्, परा = उत्कृष्टा, बुद्धिः = धीः, यः बुद्धेः तु = यः धियः

तु, परतः = उत्कृष्टः वर्तते, सः = सः आत्मा ।

**अन्वयः** – इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः परं मनः, मनसः परा बुद्धिः, यः बुद्धेः परतः सः (आत्मा) अस्ति ।

**आकाङ्क्षा** –

**आहुः** ।

**कानि** आहुः ? – **इन्द्रियाणि** आहुः ।

इन्द्रियाणि **कीदृशानि** आहुः ? – इन्द्रियाणि **पराणि** आहुः ।

इन्द्रियाणि पराणि आहुः । **पुनश्च किं परम् ?** – इन्द्रियाणि पराणि आहुः । **मनः परम् ।**

इन्द्रियाणि पराणि आहुः । **केभ्यः** मनः परम् ? – इन्द्रियाणि पराणि आहुः । **इन्द्रियेभ्यः** मनः परम् ।

इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, **पुनश्च का परा ?**

– इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, **बुद्धिः परा ।**

इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, **कस्मात्** बुद्धिः परा ?

– इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, **मनसस्तु** बुद्धिः परा ।

इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, मनसस्तु बुद्धिः परा, **पुनश्च परतः कः** ?

– इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, मनसस्तु बुद्धिः परा, **परतः सः** ।

इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, मनसस्तु बुद्धिः परा, **कस्याः** परतः सः ?

– इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, मनसस्तु बुद्धिः परा, **बुद्धेः** परतः सः ।

इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, मनसस्तु बुद्धिः परा, **यः** बुद्धेः परतः सः **कः** ?

– इन्द्रियाणि पराणि आहुः । इन्द्रियेभ्यः मनः परम्, मनसस्तु बुद्धिः परा, **यः** बुद्धेः परतः **सः (आत्मा)**

**तात्पर्यम्** – इन्द्रियाणि उत्कृष्टानि वदन्ति । इन्द्रियेभ्यः मनः उत्कृष्टम्, मनसः बुद्धिः उत्कृष्टा, बुद्धेः अपेक्षया आत्मा उत्कृष्टः वर्तते ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पराण्याहुः | – पराणि + आहुः | यण्सन्धिः |
| | आहुरिन्द्रियेभ्यः | – आहुः + इन्द्रियेभ्यः | विसर्गसन्धिः (रेफः) |
| | बुद्धिर्यो बुद्धेः | – बुद्धिः + यः | विसर्गसन्धिः (रेफः) |
| | | – यः + बुद्धेः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | मनसस्तु | – मनसः + तु | विसर्गसन्धिः (सकारः) |
| | परतस्तु | – परतः + तु | विसर्गसन्धिः (सकारः) |
| **(ख) तद्धितान्तः** | परतः | – पर + तसिः (प्रथमाविभक्त्यन्तात् स्वार्थे तसिः) | |

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ।।3.43।।**

**पदार्थः** – महाबाहो = दीर्घबाहो (अर्जुन) एवम् = इत्थम्, बुद्धेः = धियः, परम् = उत्कृष्टम् (आत्मानम्) बुद्ध्वा = विज्ञाय, आत्मना = स्वेन, आत्मानम् = स्वम्, संस्तभ्य = नियम्य, कामरूपम् = तृष्णारूपम्, दुरासदम् = दुर्जयम्, शत्रुम् = वैरिणम्, जहि = नाशय ।

**अन्वयः** – महाबाहो ! एवं बुद्धेः परं बुद्ध्वा आत्मना आत्मानं संस्तभ्य कामरूपं दुरासदं शत्रुं जहि ।

**आकाङ्क्षा** –

**जहि** ।

**कं** जहि ? – **शत्रुं** जहि ।

**कीदृशं** शत्रुं जहि ? – **कामरूपं** शत्रुं जहि ।

कामरूपं **पुनश्च कीदृशं** शत्रुं जहि ? – कामरूपं **दुरासदं** शत्रुं जहि ।

**किं कृत्वा** कामरूपं दुरासदं शत्रुं जहि? – **संस्तभ्य** कामरूपं दुरासदं शत्रुं जहि ।

**कं** संस्तभ्य कामरूपं दुरासदं शत्रुं जहि ? – **आत्मानं** संस्तभ्य कामरूपं दुरासदं शत्रुं जहि ।

**केन** आत्मानं संस्तभ्य कामरूपं दुरासदं शत्रुं जहि ? – **आत्मना** आत्मानं संस्तभ्य कामरूपं दुरासदं शत्रुं जहि।

आत्मना आत्मानं संस्तभ्य **पुनश्च किं कृत्वा** कामरूपं दुरासदं शत्रुं जहि ?

– आत्मना आत्मानं संस्तभ्य **बुद्ध्वा** कामरूपं दुरासदं शत्रुं जहि ।

आत्मना आत्मानं संस्तभ्य **किं** बुद्ध्वा कामरूपं दुरासदं शत्रुं जहि ?

– आत्मना आत्मानं संस्तभ्य **परं** बुद्ध्वा कामरूपं दुरासदं शत्रुं जहि ।

आत्मना आत्मानं संस्तभ्य **कस्याः** परं बुद्ध्वा कामरूपं दुरासदं शत्रुं जहि ?

– आत्मना आत्मानं संस्तभ्य **बुद्धेः** परं बुद्ध्वा कामरूपं दुरासदं शत्रुं जहि ।

आत्मना आत्मानं संस्तभ्य **कथं** बुद्धेःपरं बुद्ध्वा कामरूपं दुरासदं शत्रुं जहि ?

– आत्मना आत्मानं संस्तभ्य **एवं** बुद्धेः परं बुद्ध्वा कामरूपं दुरासदं शत्रुं जहि ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **महाबाहो** ।

**तात्पर्यम्** – अर्जुन ! अनेन प्रकारेण बुद्धेः अपेक्षया आत्मा अत्युत्कृष्टः इति विज्ञाय आत्मना आत्मानं विजित्य तृष्णारूपं दुर्जनं शत्रुं विनाशय ।

**व्याकरणम्** –

**(क) सन्धिः** संस्तभ्यात्मानम् – संस्तभ्य + आत्मानम् सवर्णदीर्घसन्धिः

**(ख) कृदन्तः** संस्तभ्य – सम् + स्तम्भ् + ल्यप्

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ।

## श्रीमद्भगवद्गीता

अथ चतुर्थोऽध्यायः

# ज्ञानकर्मसन्न्यासयोगः

**श्रीभगवान् उवाच –** **इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ।।4.1।।**

**पदार्थः** – इमम् = एनम्, अव्ययम् = अविनाशिनम्, योगम् = योगमार्गम्, अहम् = अहम्, विवस्वते = सूर्याय, प्रोक्तवान् = अवोचम्, विवस्वान् = सूर्यः, मनवे = मनुसंज्ञकाय राज्ञे, प्राह = अवदत्, मनुः = मनुः, इक्ष्वाकवे = इक्ष्वाकुनाम्ने राज्ञे, अब्रवीत् = अकथयत् ।

**अन्वयः** – अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् मनवे प्राह । मनुः इक्ष्वाकवे अब्रवीत् ।

**आकाङ्क्षा** –

**प्रोक्तवान्** ।

**कः** प्रोक्तवान् ? – **अहं** प्रोक्तवान् ।

अहं **कस्मै** प्रोक्तवान् ? – अहं **विवस्वते** प्रोक्तवान् ।

अहं विवस्वते **कं** प्रोक्तवान् ? – अहं विवस्वते **योगं** प्रोक्तवान् ।

अहं विवस्वते **कं** योगं प्रोक्तवान् ? – अहं विवस्वते **इमं** योगं प्रोक्तवान् ।

अहं विवस्वते इमं **कीदृशं** योगं प्रोक्तवान् ? – अहं विवस्वते इमम् **अव्ययं** योगं प्रोक्तवान् ।

अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । **विवस्वान् किम् अकरोत्** ?

– अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । **विवस्वान् प्राह** ।

अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् **कस्मै** प्राह ?

– अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् **मनवे** प्राह ।

अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् मनवे प्राह । **मनुः किम् अकरोत्** ?

– अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् मनवे प्राह । **मनुः अब्रवीत्** ।

अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् मनवे प्राह । मनुः **कस्मै** अब्रवीत् ?

– अहं विवस्वते इमम् अव्ययं योगं प्रोक्तवान् । विवस्वान् मनवे प्राह । मनुः **इक्ष्वाकवे** अब्रवीत् ।

**तात्पर्यम्** – इमम् अविनाशिनं योगमार्गम् अहं कल्पादौ सूर्याय अवोचम् । सूर्यः स्वपुत्राय मनवे अवोचत् । मनुः स्वपुत्राय इक्ष्वाकवे अवोचत् ।

**व्याकरणम्** –

**(क) सन्धिः** मनुरिक्ष्वाकवेऽब्रवीत् – मनुः + इक्ष्वाकवे विसर्गसन्धिः (रेफः)
– इक्ष्वाकवे + अब्रवीत् पूर्वरूपसन्धिः

**(ख) कृदन्तः** प्रोक्तवान् – प्र + वच् + क्तवतु (कर्तरि)

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तप ।।4.2।।**

**पदार्थः** – परन्तप = शत्रुञ्जय ! एवम् = इत्थम्, परम्पराप्राप्तम् = सम्प्रदायात् आगतम्, इमम् = अमुम्, राजर्षयः = राजश्रेष्ठाः, विदुः = अजानन्, महता = दीर्घेण, कालेन = समयेन, सः = एषः (पूर्वोक्तः), योगः = योगः, इह = अत्र, नष्टः = लुप्तः ।

**अन्वयः** – परन्तप ! एवं परम्पराप्राप्तम् इमं राजर्षयः विदुः । महता कालेन सः योगः इह नष्टः ।

**आकाङ्क्षा** –

**विदुः** ।

| | |
|---|---|
| **के** विदुः ? | – **राजर्षयः** विदुः । |
| **कं** राजर्षयः विदुः ? | – **इमं** (योगम्) राजर्षयः विदुः । |
| **कीदृशम्** इमं राजर्षयः विदुः ? | – **परम्पराप्राप्तम्** इमं राजर्षयः विदुः । |
| **कथं** परम्पराप्राप्तम् इमं राजर्षयः विदुः ? | – **एवं** परम्पराप्राप्तम् इमं राजर्षयः विदुः । |

**नष्टः** ।

| | |
|---|---|
| **कः** नष्टः ? | – **योगः** नष्टः । |
| **कः** योगः नष्टः ? | – **सः** योगः नष्टः । |
| सः योगः **कुत्र** नष्टः ? | – सः योगः **इह** नष्टः । |
| **केन** सः योगः इह नष्टः ? | – **कालेन** सः योगः इह नष्टः । |
| **कियता** कालेन स योगः इह नष्टः ? | – **महता** कालेन स योगः इह नष्टः । |
| अस्मिन् श्लोके सम्बोधनपदं किम् ? | – **परन्तप** । |

**तात्पर्यम्** – इत्थं परम्पराप्राप्तम् अमुं योगं राजर्षयः अजानन् । ततः बहोः कालात् सः योगः अत्र नष्टप्रायः सम्पन्नः ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | राजर्षयो विदुः | – | राजर्षयः + विदुः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | स कालेन | – | सः कालेन | विसर्गसन्धिः (लोपः) |
| | कालेनेह | – | कालेन + इह | गुणसन्धिः |
| | योगो नष्टः | – | योगः + नष्टः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | परम्पराप्राप्तम् | – | परम्परया प्राप्तम् – तृतीयातत्पुरुषः । | |
| | राजर्षयः | – | राजानः ऋषयः इव – कर्मधारयः । | |
| **(ग) कृदन्तः** | प्राप्तम् | – | प्र + आप्लृ + क्त । (कर्मणि) | |
| | नष्टः | – | नश् + क्त (कर्तरि) | |

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ।।4.3।।**

**पदार्थः** – पुरातनः = प्राचीनः, सः एव = पूर्वोक्तः एव, अयम् = असौ, योगः = ज्ञानयोगः, अद्य = इदानीम्, मया = भगवता, ते = तुभ्यम्, प्रोक्तः = कथितः, हि = यस्मात्, भक्तः असि = आराधकः असि इति, मे सखा च = मम मित्रं च इति, एतत् = इदम्, उत्तमम् = उत्कृष्टम्, रहस्यम् = गोप्यम्। (प्रोक्तम्)

**अन्वयः** – पुरातनः सः एव अयं योगः अद्य मया ते प्रोक्तः। भक्तोऽसि इति सखा च इति एतत् उत्तमं रहस्यं (त्वम्) प्रोक्तः।

**आकाङ्क्षा** –

**प्रोक्तः**।

**कस्मै** प्रोक्तः ? – **ते** प्रोक्तः।

**केन** ते प्रोक्तः ? – **मया** ते प्रोक्तः।

**कदा** मया ते प्रोक्तः ? – **अद्य** मया ते प्रोक्तः।

**कः** अद्य मया ते प्रोक्तः ? – **योगः** अद्य मया ते प्रोक्तः।

**कीदृशः** अयं योगः अद्य मया ते प्रोक्तः ? – **पुरातनः** सः एव अयं योगः अद्य मया ते प्रोक्तः।

**प्रोक्तः**।

**किं** प्रोक्तः ? – **रहस्यं** (त्वम्) प्रोक्तः।

**किं** रहस्यं त्वं प्रोक्तः ? – **एतत्** रहस्यं त्वं प्रोक्तः।

एतत् **कीदृशं** रहस्यं त्वं प्रोक्तः ? – एतत् **उत्तमं** रहस्यं त्वं प्रोक्तः।

**किमर्थम्** एतत् उत्तमं रहस्यं त्वं प्रोक्तः ? – **भक्तोऽसि इति** एतत् उत्तमं रहस्यं त्वं प्रोक्तः।

भक्तोऽसि इति, **पुनश्च किमर्थम्** एतत् उत्तमं रहस्यं त्वं प्रोक्तः ?

– भक्तोऽसि इति, **सखा च इति** एतत् उत्तमं रहस्यं त्वं प्रोक्तः।

**तात्पर्यम्** – तमेव प्राचीनम् अत्युत्कृष्टं रहस्यं इमं योगम् अधुना भवते अकथयम्, यतः भवान् मद्भक्तः मित्रं च वर्तते।

**व्याकरणम्** –

**(क) सन्धिः** –

| | | | |
|---|---|---|---|
| तेऽद्य | – | ते + अद्य | पूर्वरूपसन्धिः |
| एवायम् | – | एव + अयम् | सवर्णदीर्घसन्धिः |
| भक्तोऽसि | – | भक्तः + असि | विसर्गसन्धिः (सकारः) उकारः, गुणः, पूर्वरूपं च |
| चेति | – | च + इति | गुणसन्धिः |
| ह्येतदुत्तमम् | – | हि + एतत् | यणसन्धिः |
| | – | एतत् + उत्तमम् | जश्त्वसन्धिः |
| स एव | – | सः + एव | विसर्गसन्धिः (लोपः) |

**(ख) कृदन्तः** प्रोक्तः – प्र + वच् + क्त। (कर्मणि)

**अर्जुन उवाच** –

**अपरं भवतो जन्म परं जन्म विवस्वतः।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥4.4॥**

**पदार्थः** – भवतः = तव, जन्म = जननम्, अपरम् = उत्तरकालिकम्, विवस्वतः = सूर्यस्य, जन्म = जननम्,

परम् = पूर्वकालिकम्, त्वम् = भवान्, आदौ = प्रथमतः, एतत् = इमं विषयम्, प्रोक्तवान् इति = कथितवान् इति, कथम् = केन प्रकारेण, विजानीयाम् = ज्ञातुं शक्नुयाम् ।

**अन्वयः** – भवतः जन्म अपरम्, विवस्वतः जन्म परम् । (तस्मात्) त्वम् आदौ एतत् प्रोक्तवान् इति कथं विजानीयाम् ?

**आकाङ्क्षा –**

**जन्म** ।

**कस्य** जन्म ? – **भवतः** जन्म ।

भवतः जन्म **कीदृशम्** ? – भवतः जन्म **अपरम्** ।

भवतः जन्म अपरम् । **परं जन्म कस्य** ? – भवतः जन्म अपरम् । **परं जन्म विवस्वतः** ।

भवतः जन्म अपरम् । परं जन्म विवस्वतः । **तेन किम्** ?

– भवतः जन्म अपरम् । परं जन्म विवस्वतः । (तस्मात्) **विजानीयाम्** ।

भवतः जन्म अपरम् । परं जन्म विवस्वतः । (तस्मात्) **किं** विजानीयाम् ?

– भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् **एतत्** विजानीयाम् ।

भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् **किम्** एतत् विजानीयाम् ?

– भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् **प्रोक्तवान्** इति एतत् विजानीयाम् ।

भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् **कः** प्रोक्तवान् इति एतत् विजानीयाम् ?

– भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् **त्वं** प्रोक्तवान् इति एतत् विजानीयाम् ।

भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् त्वं **कदा** प्रोक्तवान् इति एतत् विजानीयाम् ?

– भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् त्वम् **आदौ** प्रोक्तवान् इति एतत् विजानीयाम् ।

भवतः जन्म अपरम् । परं जन्म विवस्वतः । तस्मात् त्वम् आदौ प्रोक्तवान् इति एतत् **कथं** विजानीयाम् ?

**तात्पर्यम्** – भवतः जन्म अधुनातनं (अस्मिन् युगे) ज्ञायते । सूर्यस्य जन्म तु अतिप्राचीनम् (कल्पादौ) इति ज्ञायते । एवं स्थिते भवान् सूर्याय इमं योगं प्रोक्तवानिति कथम् अहं विश्वसिमि ?

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | भवतो जन्म | – भवतः + जन्म विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | एतद्विजानीयाम् | – एतत् + विजानीयाम् जशत्वसन्धिः |
| **(ख) समासः** | अपरम् | – न परम् – नञ्तत्पुरुषः । |
| **(ग) कृदन्तः** | प्रोक्तवान् | – दृश्यताम् – 4.1 |

**श्रीभगवान् उवाच – बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ।।4.5।।**

**पदार्थः** – परन्तप = अर्जुन ! मे तव च = मम च ते च, बहूनि = नैकानि, जन्मानि = जनूंषि, व्यतीतानि = अतिक्रान्तानि, तानि सर्वाणि = तानि असङ्ख्येयानि जनूंषि, अहम् = अहम्, वेद = जानामि, त्वम् = भवान्, न वेत्थ = न जानाति ।

**अन्वयः** – परन्तप, अर्जुन ! बहूनि मे तव च जन्मानि व्यतीतानि । तानि जन्मानि सर्वाणि अहं वेद । त्वं न वेत्थ ।

**आकाङ्क्षा –**

**व्यतीतानि** ।

**कानि** व्यतीतानि ? – **जन्मानि** व्यतीतानि ।

**कति** जन्मानि व्यतीतानि ? – **बहूनि** जन्मानि व्यतीतानि ।

बहूनि **कस्य कस्य** जन्मानि व्यतीतानि ? – बहूनि **मे तव च** जन्मानि व्यतीतानि ।

बहूनि मे तव च जन्मानि व्यतीतानि । **तेन किम्** ? – बहूनि मे तव च जन्मानि व्यतीतानि । **वेद** ।

बहूनि मे तव च जन्मानि व्यतीतानि । **कः** वेद ? – बहूनि मे तव च जन्मानि व्यतीतानि । **अहं** वेद ।

बहूनि मे तव च जन्मानि व्यतीतानि । **कानि** अहं वेद ?

– बहूनि मे तव च जन्मानि व्यतीतानि । **तानि** अहं वेद ।

बहूनि मे तव च जन्मानि व्यतीतानि । तानि **कानि** अहं वेद ?

– बहूनि मे तव च जन्मानि व्यतीतानि । तानि **सर्वाणि** अहं वेद ।

बहूनि मे तव च जन्मानि व्यतीतानि । तानि सर्वाणि अहं वेद । **कः न वेत्ति** ?

– बहूनि मे तव च जन्मानि व्यतीतानि । तानि सर्वाणि अहं वेद । **त्वं न वेत्थ** ।

अस्मिन् श्लोके सम्बोधनपदे के ? – **अर्जुन, परन्तप** ।

**तात्पर्यम् –** हे अर्जुन ! मम च तव च जन्मानि असङ्ख्याकानि सम्पन्नानि । परन्तु तानि सर्वाणि भवान् ज्ञातुं न शक्नोति । अहं तु जानामि ।

**व्याकरणम् –**

**(क) सन्धिः** तान्यहम् – तानि + अहम् यण्सन्धिः

**(ख) कृदन्तः** व्यतीतानि – वि + अति + इण् + क्त (कर्तरि) ।

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥4.6॥**

**पदार्थः –** अजः = जन्मरहितः, अव्ययात्मा = अविनाशी, सन् अपि = भवन् अपि, भूतानाम् = प्राणिनाम्, ईश्वरः = प्रभुः, सन् अपि = भवन् अपि, स्वाम् = स्वकीयाम्, प्रकृतिम् = शक्तिम्, अधिष्ठाय =अवलम्ब्य, आत्ममायया = स्वमायया, सम्भवामि = उद्भवामि ।

**अन्वयः –** अजः अपि अव्ययात्मा सन् भूतानाम् ईश्वरः सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ।

**आकाङ्क्षा –**

**सम्भवामि** ।

**कया** सम्भवामि ? – **आत्ममायया** सम्भवामि ।

**किं** कृत्वा आत्ममायया सम्भवामि ? – **अधिष्ठाय** आत्ममायया सम्भवामि ।

**काम्** अधिष्ठाय आत्ममायया सम्भवामि ? – **प्रकृतिम्** अधिष्ठाय आत्ममायया सम्भवामि ।

**कीदृशीं** प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ? – **स्वां** प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ।

**कीदृशः अपि** स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ?

– **अजः अपि** स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ।

अजः अपि **पुनः कीदृशः** सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ?

– अजः अपि **अव्ययात्मा** सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ।

अजः अपि अव्ययात्मा सन् **पुनश्च कीदृशः** सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ?

– अजः अपि अव्ययात्मा सन् **ईश्वरः** सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ।

अजः अपि अव्ययात्मा सन् **केषाम्** ईश्वरः सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ?

– अजः अपि अव्ययात्मा सन् **भूतानाम्** ईश्वरः सन् स्वां प्रकृतिम् अधिष्ठाय आत्ममायया सम्भवामि ।

**तात्पर्यम्** – अहम् अविनाशी, जन्मरहितः, समस्तप्राणिनां स्वामी च सन् अपि स्वकीयां शक्तिम् अवलम्ब्य योगमायया आत्मानं सृजामि ।

**माध्वमतम्**–अहं देहतः स्वरूपतश्च उत्पत्तिनाशरहितः । तस्मात् ईश्वरोऽहं स्वाधीनप्रकृत्या वसुदेवादीन् निर्माय तेभ्यः स्वेच्छया प्रादुर्भवामि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अजोऽपि | – अजः + अपि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| | सन्नव्ययात्मा | – सन् + अव्ययात्मा | ङमुडागमसन्धिः |
| | ईश्वरोऽपि | – ईश्वरः + अपि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| | सम्भवाम्यात्ममायया | – सम्भवामि + आत्ममायया | यणसन्धिः |
| **(ख) समासः** | अव्ययात्मा | – अव्ययः आत्मा यस्य सः – बहुव्रीहिः । | |
| | आत्ममायया | – आत्मनः माया, तया – षष्ठीतत्पुरुषः । | |
| **(ग) कृदन्तः** | सन् | – अस + शतृ (कर्तरि) । | |
| | प्रकृतिम् | – दृश्यताम् – 3.5 | |
| | अधिष्ठाय | – अधि + स्था + ल्यप् | |

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥4.7॥**

**पदार्थः** – भारत = अर्जुन ! यदा यदा = यस्मिन् यस्मिन् काले, धर्मस्य = धर्मस्य, ग्लानिः = हानिः, अधर्मस्य = अधर्मस्य, अभ्युत्थानम् = वर्धनम्, भवति = सम्पद्यते, तदा = तस्मिन् काले, अहम् = अहम्, आत्मानम् = स्वम्, सृजामि = प्रकाशयामि ।

**अन्वयः** – भारत ! यदा यदा धर्मस्य ग्लानिः, अधर्मस्य च अभ्युत्थानं भवति तदा अहम् आत्मानं सृजामि ।

**आकाङ्क्षा** –

**भवति** ।

**का** भवति ? – **ग्लानिः** भवति ।

**कस्य** ग्लानिः भवति ? – **धर्मस्य** ग्लानिः भवति ।

धर्मस्य ग्लानिः **पुनश्च किं** भवति ? – धर्मस्य ग्लानिः **अभ्युत्थानं च** भवति ।

धर्मस्य ग्लानिः **कस्य** च अभ्युत्थानं भवति ? – धर्मस्य ग्लानिः **अधर्मस्य** च अभ्युत्थानं भवति ।

**यदा यदा** धर्मस्य ग्लानिः अधर्मस्य च अभ्युत्थानं भवति **तदा किं करोषि** ?

– **यदा यदा** धर्मस्य ग्लानिः अधर्मस्य च अभ्युत्थानं भवति **तदा सृजामि** ।

यदा यदा धर्मस्य ग्लानिः अधर्मस्य च अभ्युत्थानं भवति तदा **कं** सृजसि ?

– यदा यदा धर्मस्य ग्लानिः अधर्मस्य च अभ्युत्थानं भवति तदा **आत्मानं** सृजामि ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **भारत** ।

**तात्पर्यम्** – हे अर्जुन ! यदा यदा धर्मस्य हानिः अधर्मस्य आधिक्यं च सम्भवति तदा अहम् आत्मानं लोकाय प्रकाशयामि । निराकारोऽपि साकारः भविष्यामि ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | ग्लानिर्भवति | – | ग्लानिः + भवति | विसर्गसन्धिः (रेफः) |
| | तदात्मानम् | – | तदा + आत्मानम् | सवर्णदीर्घसन्धिः |
| | सृजाम्यहम् | – | सृजामि + अहम् | यण्सन्धिः |
| **(ख) कृदन्तः** | अभ्युत्थानम् | – | अभि + उत् + स्था + ल्युट् (भावे) | |

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥4.8॥**

**पदार्थः** – साधूनाम् = सज्जनानाम्, परित्राणाय = संरक्षणाय, दुष्कृताम् = दुर्जनानाम्, विनाशाय = मारणाय, धर्मसंस्थापनार्थाय च = धर्मप्रतिष्ठापनार्थाय च, युगे युगे = प्रतियुगम्, सम्भवामि = उद्भवामि ।

**अन्वयः** – साधूनां परित्राणाय, दुष्कृतां च विनाशाय, धर्मसंस्थापनार्थाय च युगे युगे सम्भवामि ।

**आकाङ्क्षा** –

**सम्भवामि** ।

**कदा कदा** सम्भवामि ? – **युगे युगे** सम्भवामि ।

**किमर्थं** युगे युगे सम्भवामि ? – **परित्राणाय** युगे युगे सम्भवामि ।

**केषां** परित्राणाय युगे युगे सम्भवामि ? – **साधूनां** परित्राणाय युगे युगे सम्भवामि ।

साधूनां परित्राणाय, **पुनश्च किमर्थं** युगे युगे सम्भवामि ?

– साधूनां परित्राणाय, **विनाशाय च** युगे युगे सम्भवामि ।

साधूनां परित्राणाय, **केषां** च विनाशाय युगे युगे सम्भवामि ?

– साधूनां परित्राणाय, **दुष्कृतां** च विनाशाय च युगे युगे सम्भवामि ।

साधूनां परित्राणाय, दुष्कृतां च विनाशाय **पुनश्च किमर्थं** युगे युगे सम्भवामि ?

– साधूनां परित्राणाय, दुष्कृतां च विनाशाय **धर्मसंस्थापनार्थाय च** युगे युगे सम्भवामि ।

**तात्पर्यम्** – सत्पुरुषाणां संरक्षणाय, दुर्जनानां विनाशाय, धर्मस्य च संस्थापनाय प्रत्येकं युगे अवतरामि ।

**व्याकरणम् –**

**(क) कृदन्तः** दुष्कृताम् – दुस् + कृ + क्विप् (कर्तरि) दुष्कृत्, तेषाम् ।
परित्राणाय – परि + त्रै + ल्युट् (भावे), तस्मै ।

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥4.9॥**

**पदार्थः –** अर्जुन = हे अर्जुन ! यः = यः पुरुषः, मे = मम, दिव्यम् = अलौकिकम्, जन्म = जननम्, कर्म च = क्रियां च, तत्त्वतः = यथार्थम्, वेत्ति = जानाति, सः = सः पुरुषः, देहम् = शरीरम्, त्यक्त्वा = विसृज्य, पुनर्जन्म = पुनर्जन्म, न एति = न प्राप्नोति, माम् = माम्, एति = लभते ।

**अन्वयः –** अर्जुन ! यः मे दिव्यं जन्म कर्म च तत्त्वतः वेत्ति सः देहं त्यक्त्वा पुनर्जन्म न एति । माम् एति ।

**आकाङ्क्षा –**

**वेत्ति** ।
**किं किं** वेत्ति ? – **जन्म कर्म च** वेत्ति ।
**कीदृशं** जन्म कर्म च वेत्ति ? – **दिव्यं** जन्म कर्म च वेत्ति ।
दिव्यं **कस्य** जन्म कर्म च वेत्ति ? – दिव्यं **मे** जन्म कर्म च वेत्ति ।
दिव्यं मे जन्म कर्म च **कथं** वेत्ति ? – दिव्यं मे जन्म कर्म च **तत्त्वतः** वेत्ति ।
यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति **तस्य किं भवति** ?
– यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति **सः न एति** ।
यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः **किं** न एति ?
– यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः **पुनर्जन्म** न एति ।
यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः **किं कृत्वा** पुनर्जन्म न एति ?
– यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः **त्यक्त्वा** पुनर्जन्म न एति ।
यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः **कं** त्यक्त्वा पुनर्जन्म न एति ?
– यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः **देहं** त्यक्त्वा पुनर्जन्म न एति ।
यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः देहं त्यक्त्वा पुनर्जन्म एति । **कं पुनः एति** ?
– यः दिव्यं मे जन्म कर्म च तत्त्वतः वेत्ति सः देहं त्यक्त्वा पुनर्जन्म न एति । (प्रत्युत) **माम्** एति ।
अस्मिन् श्लोके सम्बोधनपदं किम् ? – **अर्जुन** ।

**तात्पर्यम् –** हे अर्जुन ! मम एतत् जन्म कर्म च अलौकिकमिति यः पुरुषः यथार्थं जानाति सः शरीरत्यागे सति पुनर्जन्म नाप्नोति प्रत्युत मामेव प्राप्नोति ।

**माध्वमतम्–**भगवतः प्रादुर्भावम्, तत्कर्म तत्सम्बन्धीतरज्ञानपूर्वकं यो वेत्ति सः मरणानन्तरं पुनर्जन्म न लभते । अपि च मुक्तः सन् मां प्राप्नोति ।

व्याकरणम् –

| | | | | |
|---|---|---|---|---|
| (क) सन्धिः | यो वेत्ति | – | यः + वेत्ति | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | नैति | – | न + एति | वृद्धिसन्धिः |
| | सोऽर्जुन | – | सः + अर्जुन | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| (ख) कृदन्तः | त्यक्त्वा | – | त्यज् + क्त्वा। | |
| (ग) तद्धितान्तः | दिव्यम् | – | दिव् + यत् (भवार्थे)। दिवि भवम्। | |

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥4.10॥**

**पदार्थः** – वीतरागभयक्रोधाः = विनष्टरागभीतिकोपाः, मन्मयाः = मत्स्वरूपाः, माम् = माम्, उपाश्रिताः = उपगताः, ज्ञानतपसा = समाधिना, पूताः = पवित्राः, बहवः = असङ्ख्याकाः, मद्भावम् = मद्रूपत्वम्, आगताः = सम्प्राप्ताः।

**अन्वयः** – वीतरागभयक्रोधाः मन्मयाः माम् उपाश्रिताः ज्ञानतपसा पूताः बहवः मद्भावम् आगताः।

**आकाङ्क्षा** –

आगताः।
कम् आगताः? – **मद्भावम्** आगताः।
**के** मद्भावम् आगताः? – **बहवः** मद्भावम् आगताः।
**कीदृशाः** बहवः मद्भावम् आगताः? – **वीतरागभयक्रोधाः** बहवः मद्भावम् आगताः।
वीतरागभयक्रोधाः **पुनश्च कीदृशाः** बहवः मद्भावम् आगताः?
– वीतरागभयक्रोधाः **मन्मयाः** बहवः मद्भावम् आगताः।
वीतरागभयक्रोधाः मन्मयाः **पुनश्च कीदृशाः** बहवः मद्भावम् आगताः?
– वीतरागभयक्रोधाः मन्मयाः **उपाश्रिताः** बहवः मद्भावम् आगताः।
वीतरागभयक्रोधाः मन्मयाः **कम्** उपाश्रिताः बहवः मद्भावम् आगताः?
– वीतरागभयक्रोधाः मन्मयाः **माम्** उपाश्रिताः बहवः मद्भावम् आगताः।
वीतरागभयक्रोधाः मन्मयाः माम् उपाश्रिताः **पुनश्च कीदृशाः** बहवः मद्भावम् आगताः?
– वीतरागभयक्रोधाः मन्मयाः माम् उपाश्रिताः **पूताः** बहवः मद्भावम् आगताः।
वीतरागभयक्रोधाः मन्मयाः माम् उपाश्रिताः **केन** पूताः बहवः मद्भावम् आगताः?
– वीतरागभयक्रोधाः मन्मयाः माम् उपाश्रिताः **ज्ञानतपसा** पूताः बहवः मद्भावम् आगताः।

**तात्पर्यम्** – आसक्तिं भयं क्रोधं च विना अनन्यभावनया मयि विश्वस्ताः मां च शरणमागताः ज्ञानरूपेण तपसा पवित्राः असङ्ख्याकाः मम स्वरूपं प्राप्तवन्तः।

**माध्वमतम्**–रागभयादिवर्जिताः ज्ञानिनः भगवन्तं सर्वोत्तमं सर्वान्तर्यामिणं च मन्वानाः तं शरणं गताः सायुज्यरूपमोक्षं भजन्ते।

**व्याकरणम् –**

**(क) सन्धिः**

| | | | |
|---|---|---|---|
| वीतरागभयक्रोधा मन्मयाः | – | ...क्रोधाः + मन्मयाः | विसर्गसन्धिः (लोपः) |
| मन्मया माम् | – | मन्मयाः + माम् | विसर्गसन्धिः (लोपः) |
| पूता मद्भावम् | – | पूताः + मद्भावम् | विसर्गसन्धिः (लोपः) |
| बहवो ज्ञानतपसा | – | बहवः + ज्ञानतपसा | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |

**(ख) समासः**

| | | |
|---|---|---|
| वीतरागभयक्रोधाः | – | रागः च भयं च क्रोधः च रागभयक्रोधाः – द्वन्द्वः । |
| | – | वीताः रागभयक्रोधाः येभ्यः, ते – बहुव्रीहिः । |
| ज्ञानतपसा | – | ज्ञानम् एव तपः, तेन – कर्मधारयः । |
| मद्भावम् | – | मम भावः, तम् – षष्ठीतत्पुरुषः । |

**(ग) कृदन्तः**

| | | |
|---|---|---|
| उपाश्रिताः | – | उप + आङ् + श्रि + क्त (कर्तरि) । |
| पूताः | – | पू + क्त (कर्मणि) । |
| भावः | – | भू + अण् (भावे) । |
| आगताः | – | आङ् + गम्लृ + क्त (कर्तरि) । |

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥4.11॥**

**पदार्थः –** पार्थ = अर्जुन ! ये = ये मानवाः, माम् = माम्, यथा = येन प्रकारेण, प्रपद्यन्ते = सेवन्ते, तथा एव = तेन एव प्रकारेण, तान् = तान् मानवान्, अहम् = अहम्, भजामि = अनुगृह्णामि, मनुष्याः = मनुजाः, सर्वशः = सर्वथा, मम = मे, वर्त्म = मार्गम्, अनुवर्तन्ते = अनुसरन्ति ।

**अन्वयः –** पार्थ ! ये मां यथा प्रपद्यन्ते तथा एव तान् अहं भजामि । मनुष्याः सर्वशः मम वर्त्म अनुवर्तन्ते ।

**आकाङ्क्षा –**

**प्रपद्यन्ते** ।

| | |
|---|---|
| **कं** प्रपद्यन्ते ? | – **मां** प्रपद्यन्ते । |
| **ये यथा** मां प्रपद्यन्ते **तथा तेषां किं भवति** ? | – **ये यथा** मां प्रपद्यन्ते **तान् तथा अहं भजामि** । |

**अनुवर्तन्ते** ।

| | |
|---|---|
| **किम्** अनुवर्तन्ते ? | – **वर्त्म** अनुवर्तन्ते । |
| **कस्य** वर्त्म अनुवर्तन्ते ? | – **मम** वर्त्म अनुवर्तन्ते । |
| **कथं** मम वर्त्म अनुवर्तन्ते ? | – **सर्वशः** मम वर्त्म अनुवर्तन्ते । |
| **के** सर्वशः मम वर्त्म अनुवर्तन्ते ? | – **मनुष्याः** सर्वशः मम वर्त्म अनुवर्तन्ते । |
| अस्मिन् श्लोके सम्बोधनपदं किम् ? | – **पार्थ** । |

**तात्पर्यम् –** पार्थ ! ये मां यथा भजन्ति तान् अहं तथा एव अनुगृह्णामि । एतत् रहस्यं ज्ञात्वा बुद्धिमान् मनुष्यसमूहः सर्वप्रकारेण मम मार्गमनुसृत्य चलति ।

**माध्वमतम्**–मोक्षरूपफलदानेन ज्ञानिनः, स्वर्गादिफलदानेन तदितरान् च अहं भजामि, न तु गुणभावेन। देवतान्तराणाम् आराधननिमित्तेन मत्पूजैव क्रियते। तस्मात् सर्वप्रकारेण मनुष्याः मम वर्त्म अनुवर्तन्ते।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | तांस्तथैव | – | तान् + तथैव | सत्वसन्धिः (रेफः, विसर्गः, अनुस्वारः, सकारश्च) |
| | भजाम्यहम् | – | भजामि + अहम् | यण्सन्धिः |
| | तथैव | – | तथा + एव | वृद्धिसन्धिः |
| | वर्त्मानुवर्तते | – | वर्त्म + अनुवर्तते | सवर्णदीर्घसन्धिः |
| **(ख) तद्धितान्तः** | मनुष्याः | – | मनु (षुक्) + यत् (अपत्यार्थे)। मनोः अपत्यानि पुमांसः। | |

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥4.12॥**

**पदार्थः** – कर्मणाम् = व्यापाराणाम्, सिद्धिम् = फलप्राप्तिम्, काङ्क्षन्तः = अभिलषन्तः, इह = अस्मिन् लोके, देवताः = देवान्, यजन्ते = पूजयन्ति, मानुषे लोके = मानवानां लोके, हि = यस्मात्, कर्मजा = कर्मसम्भवा, सिद्धिः = फलप्राप्तिः, क्षिप्रम् = शीघ्रम्, भवति = जायते।

**अन्वयः** – कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। (तेषाम्) हि मानुषे लोके कर्मजा सिद्धिः क्षिप्रं भवति।

**आकाङ्क्षा** –

**यजन्ते**।

**के** यजन्ते? – **काङ्क्षन्तः** यजन्ते।

**कां** काङ्क्षन्तः यजन्ते? – **सिद्धिं** काङ्क्षन्तः यजन्ते।

**केषां** सिद्धिं काङ्क्षन्तः यजन्ते? – **कर्मणां** सिद्धिं काङ्क्षन्तः यजन्ते।

कर्मणां सिद्धिं काङ्क्षन्तः **काः** यजन्ते? – कर्मणां सिद्धिं काङ्क्षन्तः **देवताः** यजन्ते।

कर्मणां सिद्धिं काङ्क्षन्तः **कुत्र** देवताः यजन्ते? – कर्मणां सिद्धिं काङ्क्षन्तः **इह** देवताः यजन्ते।

कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। **तस्मात् तेषां किं भवति**?

– कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। **(तेषाम्) हि भवति**।

कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **का** भवति?

– कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **सिद्धिः** भवति।

कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **कीदृशी** सिद्धिः भवति?

– कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **कर्मजा** सिद्धिः भवति।

कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **कुत्र** कर्मजा सिद्धिः भवति?

– कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **लोके** कर्मजा सिद्धिः भवति।

कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते। तेषां हि **कस्मिन्** लोके कर्मजा सिद्धिः भवति?

– कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते । तेषां हि **मानुषे** लोके कर्मजा सिद्धिः भवति ।

कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते । तेषां हि मानुषे लोके कर्मजा सिद्धिः **कथं** भवति ?

– कर्मणां सिद्धिं काङ्क्षन्तः इह देवताः यजन्ते । तेषां हि मानुषे लोके कर्मजा सिद्धिः **क्षिप्रं** भवति ।

**तात्पर्यम् –** कर्मप्रधाने अस्मिन् लोके कर्मणां फलमिच्छन्तः मनुष्याः देवान् पूजयन्ति, यतः कर्मणां सिद्धिः शीघ्रं भवति । परन्तु आत्मसिद्धिः न भवति । तदर्थं मामेव भज ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यजन्त इह | – | यजन्ते + इह यान्तवान्तादेशसन्धिः, यलोपः, प्रकृतिभावः |
| | सिद्धिर्भवति | – | सिद्धिः + भवति विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | कर्मजा | – | कर्मणः जाता – कर्तरि डप्रत्ययः उपपदसमासश्च । स्त्रीत्वे टाप्। |
| **(ग) कृदन्तः** | काङ्क्षन्तः | – | काङ्क्ष् + शतृ (कर्तरि) । |
| | सिद्धिः | – | सिध् + क्तिन् । (भावे) |

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥4.13॥**

**पदार्थः –** गुणकर्मविभागशः = गुणानां कर्मणां च भेदेन, मया = मया, चातुर्वर्ण्यम् = चत्वारः वर्णाः, सृष्टम् = उत्पादिताः, तस्य = चातुर्वर्ण्यविभागस्य, कर्तारम् = स्रष्टारम्, अकर्तारम् अपि = अस्रष्टारम् अपि, अव्ययम् = अविनाशिनम्, मां विद्धि = मां जानीहि ।

**अन्वयः –** गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । तस्य कर्तारम् अपि अकर्तारम् अव्ययं मां विद्धि ।

**आकाङ्क्षा –**

**सृष्टम्** ।

**किं** सृष्टम् ? – **चातुर्वर्ण्यं** सृष्टम् ।

**केन** चातुर्वर्ण्यं सृष्टम् ? – **मया** चातुर्वर्ण्यं सृष्टम् ।

**कथं** मया चातुर्वर्ण्यं सृष्टम् ? – **गुणकर्मविभागशः** मया चातुर्वर्ण्यं सृष्टम् ।

गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **तेन किम्** ?

– गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **(तेन) विद्धि** ।

गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **कं** विद्धि ?

– गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **मां** विद्धि ।

गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **कीदृशं** मां विद्धि ?

– गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **अव्ययं** मां विद्धि ।

गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **पुनश्च कीदृशम्** अव्ययं मां विद्धि ?

– गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **अकर्तारम्** अव्ययं मां विद्धि ।

गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **पुनश्च कीदृशमपि** अकर्तारम् अव्ययं मां विद्धि ?

– गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **कर्तारमपि** अकर्तारम् अव्ययं मां विद्धि ।

गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **कस्य** कर्तारमपि अकर्तारम् अव्ययं मां विद्धि ?

– गुणकर्मविभागशः मया चातुर्वर्ण्यं सृष्टम् । **तस्य** कर्तारमपि अकर्तारम् अव्ययं मां विद्धि ।

**तात्पर्यम्** – गुणानां कर्मणां च विभेदानुसारेण ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः इति चत्वारः वर्णाः मया कृताः । तस्य चातुर्वर्ण्यविभागस्य यद्यपि अहं कर्ता तथापि अहम् अकर्ता अनश्वरः च अस्मि । तदेतत् जानीहि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | विद्ध्यकर्तारम् | – विद्धि + अकर्तारम् | यणसन्धिः |
| **(ख) समासः** | गुणकर्मविभागशः | – गुणाः च कर्माणि च गुणकर्माणि – द्वन्द्वः । | |
| | | – गुणकर्मणां विभागः, तेन – षष्ठीतत्पुरुषः । | |
| | अकर्तारम् | – न कर्ता, तम् – नञ्तत्पुरुषः । | |
| | अव्ययम् | – न विद्यते व्ययः यस्य, तम् – नञ्बहुव्रीहिः । | |
| **(ग) कृदन्तः** | सृष्टम् | – सृज् + क्त (कर्मणि) । | |
| | कर्तारम् | – कृ + तृच् (कर्तरि) । | |
| **(घ) तद्धितान्तः** | चातुर्वर्ण्यम् | – चतुर्वर्ण + ष्यञ् (स्वार्थे) । | |
| | गुणकर्मविभागशः | – गुणकर्मविभाग + शस् (तृतीयाविभक्त्यन्तात् स्वार्थे) गुणकर्मविभागेन इत्यर्थः । | |

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ।।4.14।।**

**अन्वयः** – मां कर्माणि न लिम्पन्ति । कर्मफले मे स्पृहा न अस्ति इति यः माम् अभिजानाति सः कर्मभिः न बध्यते ।

**पदार्थः** – माम् = माम्, कर्माणि = व्यापाराः, न लिम्पन्ति = न स्पृशन्ति, मे = मम, कर्मफले = कर्मसिद्धौ, स्पृहा न इति = आशा न इति, यः माम् = यः माम्, अभिजानाति = वेत्ति, सः = सः पुरुषः, कर्मभिः = क्रियाभिः, न बध्यते = बद्धः न भवति ।

**आकाङ्क्षा** –

**न लिम्पन्ति, न स्पृहा ।**

**कानि** न लिम्पन्ति, **कस्मिन्** न स्पृहा ? – **कर्माणि** न लिम्पन्ति, **कर्मफले** न स्पृहा ।

कर्माणि **कं** न लिम्पन्ति , कर्मफले **कस्य** न स्पृहा ? – कर्माणि **मां** न लिम्पन्ति, कर्मफले **मे** न स्पृहा ।

कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा **इति किं करोति** ?

– कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा **इति अभिजानाति** ।

कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा इति **कम्** अभिजानाति ?

– कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा इति **माम्** अभिजानाति ।

कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा इति **यः** माम् अभिजानाति **तस्य किं भवति** ?

– कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा इति **यः** माम् अभिजानाति **सः न बध्यते** ।

कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा इति यः माम् अभिजानाति सः **कैः** न बध्यते ?

– कर्माणि मां न लिम्पन्ति, कर्मफले मे न स्पृहा इति यः माम् अभिजानाति सः **कर्मभिः** न बध्यते ?

**तात्पर्यम्** – कर्मफलेषु मम आशा नास्ति, अतः कर्माचरणस्य आवश्यकता नास्ति इति ये मां यथार्थम् अवगच्छन्ति ते अपि कर्मभिः बद्धाः न भवन्ति ।

**व्याकरणम्** –

**(क) सन्धिः** योऽभिजानाति – यः + अभिजानाति विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपम्

कर्मभिर्न – कर्मभिः + न विसर्गसन्धिः (रेफः)

स बध्यते – सः + बध्यते विसर्गसन्धिः (लोपः)

**(ख) समासः** कर्मफले – कर्मणां फलम्, तस्मिन् – षष्ठीतत्पुरुषः ।

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥4.15॥**

**पदार्थः** – एवम् = इत्थम्, ज्ञात्वा = विज्ञाय, पूर्वैः = प्राचीनैः, मुमुक्षुभिः अपि = मोक्षार्थिभिः अपि, कर्म कृतम् = कर्म आचरितम्, तस्मात् = ततः, पूर्वैः = प्राचीनैः, कृतम् = आचरितम्, कर्म एव = क्रियाम् एव, पूर्वतरम् = अतिशयेन पूर्वाम्, कुरु = आचर ।

**अन्वयः** – एवं ज्ञात्वा पूर्वैः मुमुक्षुभिः अपि कर्म कृतम् । तस्मात् पूर्वैः कृतं पूर्वतरं कर्म एव कुरु ।

**आकाङ्क्षा** –

**कृतम्** ।

| | |
|---|---|
| **किं** कृतम् ? | – **कर्म** कृतम् । |
| **कैः** कर्म कृतम् ? | – **मुमुक्षुभिः** कर्म कृतम् । |
| **कीदृशैः** मुमुक्षुभिः अपि कर्म कृतम् ? | – **पूर्वैः** अपि मुमुक्षुभिः कर्म कृतम् । |
| **किं** कृत्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् ? | – **ज्ञात्वा** पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । |
| **कथं** ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् ? | – **एवं** ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । |

एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । **तेन किम्** ?

– एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । **तस्मात् त्वं कुरु** ।

एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । तस्मात् त्वं **किं** कुरु ?

– एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । तस्मात् त्वं **कर्म एव** कुरु ।

एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । तस्मात् त्वं **कीदृशं** कर्म एव कुरु ?

– एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । तस्मात् त्वं **कृतं** कर्म एव कुरु ।

एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । तस्मात् त्वं **कैः** कृतं कर्म एव कुरु ?

– एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम् । तस्मात् त्वं **पूर्वैः** कृतं कर्म एव कुरु ।

एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम्। तस्मात् त्वं पूर्वैः कृतं **कीदृशं** कर्म एव कुरु ?

– एवं ज्ञात्वा पूर्वैः अपि मुमुक्षुभिः कर्म कृतम्। तस्मात् त्वं पूर्वैः कृतं **पूर्वतरं** कर्म एव कुरु।

**तात्पर्यम्** – कर्मफलेच्छारहितं पुरुषं कर्माणि न लिम्पन्ति। इत्थं ज्ञात्वा प्राचीनकाले मुमुक्षुभिः पुरुषैः कर्म आचरितम्। अतः भवान् अपि प्राचीनैः यथा कर्म कृतं तथा कर्म आचरेत्।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | पूर्वैरपि | – | पूर्वैः + अपि | विसर्गसन्धिः (रेफः) |
| | कर्मैव | – | कर्म + एव | वृद्धिसन्धिः |
| **(ख) कृदन्तः** | ज्ञात्वा | – | ज्ञा + क्त्वा। | |
| **(ग) सन्नन्तः** | मुमुक्षुभिः | – | मुच् + सन् (इच्छार्थे) + उ (कर्तरि) मोक्तुम् इच्छवः, तैः। | |
| **(घ) तद्धितान्तः** | पूर्वतरम् | – | पूर्व + तरप्। (अतिशये) अतिशयेन पूर्वम्। | |

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥4.16॥**

**पदार्थः** – कर्म = कर्मस्वरूपम्, किम् = कथंभूतम्, अकर्म = अकर्मस्वरूपम्, किम् इति अत्र = किमिति स्वरूपविषये, कवयः अपि = पण्डिताः अपि, मोहिताः = मोहं गताः, तत् = ततः, कर्म = कर्मस्वरूपम्, ते = तुभ्यम्, प्रवक्ष्यामि = कथयिष्यामि, यत् = कर्म, ज्ञात्वा = विदित्वा, अशुभात् = अश्रेयसः, मोक्ष्यसे = विमुच्यसे।

**अन्वयः** – किं कर्म किम् अकर्म इति कवयः अपि अत्र मोहिताः। तत् ते कर्म प्रवक्ष्यामि यत् ज्ञात्वा अशुभात् मोक्ष्यसे।

**आकाङ्क्षा** –

**मोहिताः**।

**के** मोहिताः ? – **कवयः** मोहिताः।

**कथं** कवयः मोहिताः ? – **किं कर्म किम् अकर्म इति** कवयः मोहिताः।

किं कर्म किम् अकर्म इति कवयः **कुत्र** मोहिताः ?

– किं कर्म किम् अकर्म इति कवयः **अत्र** मोहिताः।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। **तेन किम्** ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। **तत् वक्ष्यामि**।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् **किं** वक्ष्यामि ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् **कर्म** वक्ष्यामि।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् **कस्मै** कर्म वक्ष्यामि ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् **ते** कर्म वक्ष्यामि।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् ते कर्म वक्ष्यामि। **एतेन किम्** ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् ते कर्म वक्ष्यामि। **मोक्ष्यसे**।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः। तत् ते कर्म वक्ष्यामि। **कस्मात्** मोक्ष्यसे ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः । तत् ते कर्म वक्ष्यामि । **अशुभात्** मोक्ष्यसे ।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः । तत् ते कर्म वक्ष्यामि । **किं कृत्वा** अशुभात् मोक्ष्यसे ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः । तत् ते कर्म वक्ष्यामि । **ज्ञात्वा** अशुभात् मोक्ष्यसे ।

किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः । तत् ते कर्म वक्ष्यामि । **किं** ज्ञात्वा अशुभात् मोक्ष्यसे ?

– किं कर्म किम् अकर्म इति कवयः अत्र मोहिताः । तत् ते कर्म वक्ष्यामि । **यत् (कर्म)** ज्ञात्वा अशुभात् मोक्ष्यसे ।

**तात्पर्यम् –** किं कर्तव्यं किम् अकर्तव्यम् इति विषये पण्डिताः अपि भ्रान्ताः आसन् । अतः तत् गूढं रहस्यं ते कथयामि यत् ज्ञात्वा अश्रेयसः विमुक्तः भविष्यसि ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अकर्मेति | – अकर्म + इति | गुणसन्धिः |
| | कवयोऽपि | – कवयः + अपि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| | अप्यत्र | – अपि + अत्र | यणसन्धिः |
| | यज्ज्ञात्वा | – यत् + ज्ञात्वा | जश्त्वम्, श्चुत्वसन्धिः |
| | मोक्ष्यसेऽशुभात् | – मोक्ष्यसे + अशुभात् | पूर्वरूपसन्धिः |

| | | | |
|---|---|---|---|
| **(ख) समासः** | अकर्म | – | न कर्म – नञ्तत्पुरुषः । |
| | अशुभात् | – | न शुभम्, तस्मात् – नञ्तत्पुरुषः । |
| **(ग) कृदन्तः** | मोहिताः | – | मुह् + णिच् + क्त । (कर्मणि) |

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥4.17॥**

**पदार्थः –** कर्मणः अपि = कर्मणः स्वरूपमपि, अकर्मणः च = कर्माभावस्य स्वरूपमपि, विकर्मणः अपि च = निषिद्धकर्मणः स्वरूपमपि, बोद्धव्यम् = ज्ञातव्यम्, कर्मणः = कर्मस्वरूपस्य, गतिः = ज्ञानम्, गहना = क्लिष्टम् ।

**अन्वयः –** कर्मणः अपि स्वरूपं बोद्धव्यम् । अकर्मणः च स्वरूपं बोद्धव्यम् । विकर्मणः अपि च स्वरूपं बोद्धव्यम् । तस्मात् कर्मणः गतिः गहना ।

**आकाङ्क्षा –**

**गहना** ।

**का** गहना ? – **गतिः** गहना ।

**कस्य** गतिः गहना ? – **कर्मणः** गतिः गहना ।

**कथं** कर्मणः गतिः गहना ? – **बोद्धव्यम् (तस्मात्)** कर्मणः गतिः गहना ?

**किं** बोद्धव्यम् । (यस्मात्) कर्मणः गतिः गहना ?

**– कर्मणः (स्वरूपम्)** बोद्धव्यम् । तस्मात् कर्मणः गतिः गहना ।

कर्मणः स्वरूपं बोद्धव्यम् । **पुनश्च किं बोद्धव्यम् ?** यस्मात् कर्मणः गतिः गहना ?

– कर्मणः स्वरूपं बोद्धव्यम् । **विकर्मणः स्वरूपं बोद्धव्यम्** । तस्मात् कर्मणः गतिः गहना ।

कर्मणः स्वरूपं बोद्धव्यम् । विकर्मणः स्वरूपं बोद्धव्यम् । **पुनश्च किं बोद्धव्यम् ?** यस्मात् कर्मणः गतिः गहना ?

– कर्मणः स्वरूपं बोद्धव्यम् । विकर्मणः स्वरूपं बोद्धव्यम् । **अकर्मणः च स्वरूपं बोद्धव्यम्** । तस्मात् कर्मणः गतिः गहना ।

**तात्पर्यम्** – कर्म विहितम्, निषिद्धम्, विधिनिषेधरहितं चेति त्रिविधम् । एतस्य त्रिविधस्यापि कर्मणः स्वरूपं यथावत् ज्ञातव्यम् । किन्तु एतत् अत्यन्तं क्लेशेन अवगन्तव्यम् ।

**रामानुजीयमतम्** – कर्म = मोक्षसाधनभूतं कर्म, विकर्म = नित्यनैमित्तिककाम्यरूपेण तत्साधन-द्रव्यार्जनाद्याकारेण विविधताम् आपन्नं कर्म, अकर्म = ज्ञानम् ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कर्मणो हि | – कर्मणः + हि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | ह्यपि | – हि + अपि | यणसन्धिः |
| | अकर्मणश्च | – अकर्मणः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| **(ख) कृदन्तः** | बोद्धव्यम् | – बुध् + तव्यत् (कर्मणि) | |
| | गतिः | – गम्लृ + क्तिन् (भावे) | |

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥4.18॥**

**पदार्थः** – यः = यः पुरुषः, कर्मणि = व्यापारे, अकर्म = व्यापाराभावम्, अकर्मणि = व्यापाराभावे, कर्म च = व्यापारम् च, पश्येत् = वीक्षेत, सः = सः पुरुषः, मनुष्येषु = मानवेषु, बुद्धिमान् = धीमान्, युक्तः = समाहितः, सः = सः पुरुषः, कृत्स्नकर्मकृत् = सकलकर्मकर्ता ।

**अन्वयः** – यः कर्मणि अकर्म, अकर्मणि च कर्म पश्येत् सः मनुष्येषु बुद्धिमान् युक्तः कृत्स्नकर्मकृत् ।

**आकाङ्क्षा** –

**पश्येत्** ।

**किं** पश्येत् ? – **अकर्म** पश्येत् ।

**कुत्र** अकर्म पश्येत् ? – **कर्मणि** अकर्म पश्येत् ।

कर्मणि अकर्म पश्येत् । **अकर्मणि च किं पश्येत्** ?

– कर्मणि अकर्म पश्येत् । **अकर्मणि च कर्म पश्येत्** ।

**यः** कर्मणि अकर्म पश्येत्, **यः** अकर्मणि च कर्म **सः कीदृशः** ?

– **यः** कर्मणि अकर्म पश्येत्, **यः** अकर्मणि च कर्म **सः बुद्धिमान्** ।

यः कर्मणि अकर्म पश्येत्, यः अकर्मणि च कर्म सः **केषु** बुद्धिमान् ?

– यः कर्मणि अकर्म पश्येत्, यः अकर्मणि च कर्म सः **मनुष्येषु** बुद्धिमान् ।

यः कर्मणि अकर्म पश्येत्, यः अकर्मणि च कर्म सः मनुष्येषु बुद्धिमान् । **सः पुनश्च कीदृशः** ?

– यः कर्मणि अकर्म पश्येत्, यः अकर्मणि च कर्म सः मनुष्येषु बुद्धिमान् । **सः कृत्स्नकर्मकृत्** ।

यः कर्मणि अकर्म पश्येत्, यः अकर्मणि च कर्म सः मनुष्येषु बुद्धिमान्। **कीदृशः** सः कृत्स्नकर्मकृत् ?

– यः कर्मणि अकर्म पश्येत्, यः अकर्मणि च कर्म सः मनुष्येषु बुद्धिमान्। **युक्तः** सः कृत्स्नकर्मकृत् ?

**तात्पर्यम्** – यः पुरुषः स्वकृते कर्मणि फलापेक्षाशून्यत्वम्, फलापेक्षया कृते कर्मणि स्वेन अकृतत्वं च पश्यति सः बुद्धिमान्, सः एव च सकलकर्मकारी। कृतेऽपि कर्मणि यः फलापेक्षां न करोति, फलापेक्षया कृते कर्मणि स्वकृतत्वाभावं च निर्णयति तादृशः पुरुषः प्राज्ञः सकलकर्मकारीति यावत्।

**माध्वमतम्**–कर्मणि क्रियमाणे सति मया (जीवेन) एतत् न क्रियते, भगवानेव कारयति इति, स्वकीयचेष्टारहितायां सुषुप्त्यवस्थायां भगवानेव स्वप्नादिकं दर्शयति इति यः विजानाति सः बुद्धिमान् सर्वकर्मकृदिति उच्यते।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | कर्मण्यकर्म | – | कर्मणि + अकर्म | यण्सन्धिः |
| | पश्येदकर्मणि | – | पश्येत् + अकर्मणि | जश्त्वसन्धिः |
| | स बुद्धिमान् | – | सः + बुद्धिमान् | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | अकर्म | – | न कर्म – नञ्तत्पुरुषः। | |
| | कृत्स्नकर्मकृत् | – | कृत्स्नं कर्म – कृत्स्नकर्म – कर्मधारयः। | |
| | | | कृत्स्नकर्म करोति कृत्स्नकर्मकृत् – कर्तरि क्विप् उपपदसमासश्च। | |
| **(घ) तद्धितान्तः** | बुद्धिमान् | – | बुद्धि + मतुप्। बुद्धिः अस्य अस्मिन् वा अस्ति। | |

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥4.19॥**

**पदार्थः** – यस्य = यस्य पुरुषस्य, सर्वे = सकलाः, समारम्भाः = कर्माणि, कामसङ्कल्पवर्जिताः = फलापेक्षया तत्करणेच्छया च वर्जितानि, ज्ञानाग्निदग्धकर्माणम् = ज्ञानानलभस्मीभूतकर्माणम्, तम् = तं मानवम्, बुधाः = विपश्चितः, पण्डितम् = विद्वांसम्, आहुः = वदन्ति।

**अन्वयः** – यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः बुधाः ज्ञानाग्निदग्धकर्माणं तं पण्डितम् आहुः।

**आकाङ्क्षा** –

**समारम्भाः**।

**कति** समारम्भाः ? – **सर्वे** समारम्भाः।

सर्वे समारम्भाः **कीदृशाः ?** – सर्वे समारम्भाः **कामसङ्कल्पवर्जिताः**।

**यस्य** सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **तं कीदृशम् आहुः** ?

– **यस्य** सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **तं पण्डितम् आहुः**।

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **कीदृशं** तं पण्डितम् आहुः ?

– यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **ज्ञानाग्निदग्धकर्माणं** तं पण्डितम् आहुः।

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **के** ज्ञानाग्निदग्धकर्माणं तं पण्डितम् आहुः ?

– यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **बुधाः** ज्ञानाग्निदग्धकर्माणं तं पण्डितम् आहुः।

**तात्पर्यम्** – यस्य कर्माणि सर्वथा शास्त्रसम्मतानि फलापेक्षारहितानि च सन्ति तस्य पुरुषस्य कर्माणि ज्ञानरूपेण वह्निना भस्मसात् भवन्ति। तादृशं पुरुषं ज्ञानिनः पण्डितं प्रवदन्ति। (कामः = फलाभिलाषः, सङ्कल्पः = करणेच्छा।)

**व्याकरणम्** –

**(क) समासः** कामसङ्कल्पवर्जिताः – कामाश्च सङ्कल्पाश्च कामसङ्कल्पाः – द्वन्द्वः।
– कामसङ्कल्पैः वर्जिताः – तृतीयातत्पुरुषः।

ज्ञानाग्निदग्धकर्माणम् – ज्ञानमेव अग्निः ज्ञानाग्निः – कर्मधारयः।
ज्ञानाग्निना दग्धानि ज्ञानाग्निदग्धानि – तृतीयातत्पुरुषः
ज्ञानाग्निदग्धानि कर्माणि यस्य सः, तम् – बहुव्रीहिः।

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥4.20॥**

**पदार्थः** – नित्यतृप्तः = सदा सन्तुष्टः, निराश्रयः = निरालम्बः, कर्मफलासङ्गम् = कर्मफलासक्तिम्, त्यक्त्वा = विहाय, कर्मणि = व्यापारे, अभिप्रवृत्तः अपि = संयुक्तः अपि, सः = सः पुरुषः, किञ्चित् = किमपि कर्म, न एव करोति = नाचरति।

**अन्वयः** – नित्यतृप्तः निराश्रयः कर्मफलासङ्गं त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति।

**आकाङ्क्षा** –

**न एव करोति।**

**किं न एव करोति?** – **किञ्चित् न एव करोति।**

**कः** किञ्चित् (कर्म) न एव करोति? – **सः** किञ्चित् न एव करोति।

**कीदृशः अपि** सः किञ्चित् न एव करोति? – **अभिप्रवृत्तः अपि** सः किञ्चित् न एव करोति।

**कस्मिन्** अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति?

– **कर्मणि** अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति।

**किं** कृत्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति?

– **त्यक्त्वा** कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति।

**कं** त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति?

– **कर्मफलासङ्गं** त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति।

**कः** कर्मफलासङ्गं त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति?

– **निराश्रयः** कर्मफलासङ्गं त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति।

**कीदृशः** निराश्रयः कर्मफलासङ्गं त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति?

– **नित्यतृप्तः** निराश्रयः कर्मफलासङ्गं त्यक्त्वा कर्मणि अभिप्रवृत्तः अपि सः किञ्चित् न एव करोति।

**तात्पर्यम्** – यः पुरुषः संसारसम्बन्धं विना सदा परमानन्दपरमात्मनि नित्यतृप्तः भूत्वा फलासक्तिं विहाय कर्मणि आभिमुख्येन प्रवृत्तः वर्तते सः वस्तुतः कर्मशून्यः एव भवति।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नित्यतृप्तो निराश्रयः | – नित्यतृप्तः + निराश्रयः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | कर्मण्यभिप्रवृत्तः | – कर्मणि + अभिप्रवृत्तः | यण्सन्धिः |
| | अभिप्रवृत्तोऽपि | – अभिप्रवृत्तः + अपि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| | नैव | – न + एव | वृद्धिसन्धिः |
| **(ख) समासः** | कर्मफलासङ्गम् | – कर्मणः फलं कर्मफलम् – षष्ठीतत्पुरुषः । कर्मफले आसङ्गः, तम् – सप्तमीतत्पुरुषः । | |
| | नित्यतृप्तः | – नित्यं + तृप्तः – सुप्सुपा। | |
| **(ग) कृदन्तः** | अभिप्रवृत्तः | – अभि+ प्र + वृतु + क्त (कर्तरि) । | |

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥4.21॥**

**पदार्थः –** त्यक्तसर्वपरिग्रहः = विसृष्टसकलव्यापारः, यतचित्तात्मा = नियतान्तःकरणेन्द्रियः, निराशीः = निष्कामः, केवलम् = मुख्यम्, शारीरम् = शरीरस्थितिमात्रप्रयोजनम्, कर्म = व्यापारम्, कुर्वन् अपि = आचरन् अपि, किल्बिषम् = पापम्, न आप्नोति = न लभते ।

**अन्वयः –** निराशीः यतचित्तात्मा त्यक्तसर्वपरिग्रहः केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ।

**आकाङ्क्षा –**

**न आप्नोति** ।

**किं** न आप्नोति ? – **किल्बिषं** न आप्नोति ।

**किं कुर्वन्नपि** किल्बिषं न आप्नोति ? – **कर्म कुर्वन्नपि** किल्बिषं न आप्नोति ।

**कीदृशं** कर्म कुर्वन्नपि किल्बिषं न आप्नोति ? – **केवलं शारीरं** कर्म कुर्वन्नपि किल्बिषं न आप्नोति ।

**कः** केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ?

– **निराशीः** केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ।

निराशीः **पुनश्च कीदृशः** केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ?

– निराशीः **यतचित्तात्मा** केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ।

निराशीः यतचित्तात्मा **पुनश्च कीदृशः** केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ?

– निराशीः यतचित्तात्मा **त्यक्तसर्वपरिग्रहः** केवलं शारीरं कर्म कुर्वन्नपि किल्बिषं न आप्नोति ।

**तात्पर्यम् –** समस्तभोग्यविषयेषु आकाङ्क्षारहितः सकलव्यापारवर्जितः पुरुषः शरीरनिर्वहणाय कर्म करोति चेदपि सः पापं न प्राप्नोति ।

**व्याकरणम् –**

**(क) सन्धिः** निराशीर्यतचित्तात्मा – निराशीः + यतचित्तात्मा विसर्गसन्धिः (रेफः)

| | | | | |
|---|---|---|---|---|
| | कुर्वन्नाप्नोति | - | कुर्वन् + आप्नोति | ङमुडागमसन्धिः |
| **(ख) समासः** | यतचित्तात्मा | - | चित्तं च आत्मा च चित्तात्मानौ - द्वन्द्वः । | |
| | | | यतौ चित्तात्मानौ येन सः - बहुव्रीहिः । | |
| | त्यक्तसर्वपरिग्रहः | - | सर्वः परिग्रहः सर्वपरिग्रहः - कर्मधारयः । | |
| | | | त्यक्तः सर्वपरिग्रहः येन सः - बहुव्रीहिः । | |
| **(ग) कृदन्तः** | कुर्वन् | - | कृ + शतृ (कर्तरि) । | |

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥4.22॥**

**पदार्थः** – विमत्सरः = वैरशून्यः, द्वन्द्वातीतः = सुखदुःखादिद्वन्द्वशून्यः, यदृच्छालाभसन्तुष्टः = अप्रार्थितोपस्थितेन सन्तुष्टः, सिद्धौ = प्रयोजनस्य लाभे, असिद्धौ च = तस्य अलाभे अपि, समः = तुल्यमनस्कः, कृत्वा अपि = कर्म विधाय अपि, न निबध्यते = बद्धः न भवति ।

**अन्वयः** – विमत्सरः द्वन्द्वातीतः यदृच्छालाभसन्तुष्टः सिद्धौ असिद्धौ च समः कर्म कृत्वा अपि न निबध्यते ।

**आकाङ्क्षा** –

**न निबध्यते ।**

**कः** न निबध्यते ? – **यदृच्छालाभसन्तुष्टः** न निबध्यते ।

यदृच्छालाभसन्तुष्टः **पुनश्च कीदृशः** न निबध्यते ? – यदृच्छालाभसन्तुष्टः **द्वन्द्वातीतः** न निबध्यते ।

यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः **पुनश्च कीदृशः** न निबध्यते ?

– यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः **विमत्सरः** न निबध्यते ।

यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः विमत्सरः **पुनश्च कीदृशः** न निबध्यते ?

– यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः विमत्सरः **समः** न निबध्यते ?

यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः विमत्सरः **कस्यां कस्यां** च समः न निबध्यते ?

– यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः विमत्सरः **सिद्धौ असिद्धौ** च समः न निबध्यते ।

यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः विमत्सरः सिद्धौ असिद्धौ च समः **कीदृशोऽपि** न निबध्यते ?

यदृच्छालाभसन्तुष्टः द्वन्द्वातीतः विमत्सरः सिद्धौ असिद्धौ च समः **कृत्वा अपि** न निबध्यते ।

**तात्पर्यम्** – निरपेक्षत्वात् यावत् उपस्थितं भवति तावता एव सन्तुष्टः, हर्षशोकादिद्वन्द्वात् दूरे स्थितः, मद-मत्सरासूयाविहीनः, सिद्धौ असिद्धौ निर्विकारः च, कर्मयोगी कर्माणि कृत्वापि बद्धः न भवति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | सिद्धावसिद्धौ | - | सिद्धौ + असिद्धौ | यान्तवान्तादेशसन्धिः |
| | कृत्वापि | - | कृत्वा + अपि | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | यदृच्छालाभसन्तुष्टः | - | यदृच्छया लाभः यदृच्छालाभः - तृतीयातत्पुरुषः । | |
| | | - | यदृच्छालाभेन सन्तुष्टः - तृतीयातत्पुरुषः । | |

| | | | |
|---|---|---|---|
| | द्वन्द्वातीतः | - | द्वन्द्वम् अतीतः - द्वितीयातत्पुरुषः । |
| | विमत्सरः | - | विगतः मत्सरः यस्मात् सः - बहुव्रीहिः । |
| **(ग) कृदन्तः** | सन्तुष्टः | - | सम् + तुष् + क्त । (कर्तरि) |

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ।।4.23।।**

**पदार्थः –** गतसङ्गस्य = निष्कामस्य, मुक्तस्य = रागादिविमुक्तस्य, ज्ञानावस्थितचेतसः = ज्ञानार्थं यतमानस्य, यज्ञाय आचरतः = यागाय एव आचरतः जनस्य, कर्म = कर्म, समग्रम् = समस्तम्, प्रविलीयते = विनश्यति ।

**अन्वयः –** गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ।

**आकाङ्क्षा –**

**प्रविलीयते** ।

**किं** प्रविलीयते ? – **कर्म** प्रविलीयते ।

कर्म **कियत्** प्रविलीयते ? – कर्म **समग्रं** प्रविलीयते ?

**किं कुर्वतः** कर्म समग्रं प्रविलीयते ? – **आचरतः** कर्म समग्रं प्रविलीयते ।

**कस्मै** आचरतः कर्म समग्रं प्रविलीयते ? – **यज्ञाय** आचरतः कर्म समग्रं प्रविलीयते ।

**कीदृशस्य** यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ?

– **गतसङ्गस्य** यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ।

गतसङ्गस्य **पुनश्च कीदृशस्य** यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ?

– गतसङ्गस्य **मुक्तस्य** यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ।

गतसङ्गस्य मुक्तस्य **पुनश्च कीदृशस्य** यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ?

– गतसङ्गस्य मुक्तस्य **ज्ञानावस्थितचेतसः** यज्ञाय आचरतः कर्म समग्रं प्रविलीयते ।

**तात्पर्यम् –** यः आसक्तिरहितः देहाभिमानविहीनः ममताशून्यः सततं परमात्मज्ञाने स्थिरमानसः च अस्ति यश्च ब्रह्मार्थं कर्म आचरति तस्य समग्रमपि कर्म विनश्यति ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यज्ञायाचरतः | - | यज्ञाय + आचरतः सवर्णदीर्घसन्धिः |
| **(ख) समासः** | गतसङ्गस्य | - | गतः सङ्गः यस्मात् सः, तस्य - बहुव्रीहिः । |
| | ज्ञानावस्थितचेतसः | - | ज्ञाने अवस्थितम् ज्ञानावस्थितम् - सप्तमीतत्पुरुषः । ज्ञानावस्थितं चेतः यस्य सः, तस्य - बहुव्रीहिः । |
| **(ग) कृदन्तः** | आचरतः | - | आङ् + चर + शतृ (कर्तरि) तस्य । |
| | मुक्तस्य | - | मुच् + क्त (कर्तरि) तस्य । |

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ।।4.24।।**

**पदार्थः –** अर्पणम् = समर्पणसाधनं स्रुगादि, ब्रह्म = परमात्मा, ब्रह्माग्नौ = परमात्मरूपे अग्नौ, ब्रह्मणा = यजमानरूपेण परमात्मना, हुतम् = दत्तम्, हविः = आज्यादिकं वस्तु, ब्रह्म = परमात्मा, ब्रह्मकर्मसमाधिना = कर्मरूप-परमात्मनिष्ठेन, तेन = यजमानेन, गन्तव्यम् = प्राप्तव्यः, ब्रह्म एव = परमात्मा एव ।

**अन्वयः –** अर्पणं ब्रह्म । ब्रह्माग्नौ ब्रह्मणा हुतम् हविः ब्रह्म । ब्रह्मकर्मसमाधिना तेन गन्तव्यं ब्रह्मैव ।

**आकाङ्क्षा –**

**ब्रह्म** ।

**अर्पणं किम्** ? – **अर्पणं ब्रह्म** ।

अर्पणं ब्रह्म, **पुनः हविः किम्** ? – अर्पणं ब्रह्म, **हविः ब्रह्म** ।

अर्पणं ब्रह्म, **कीदृशं** हविः ब्रह्म ? – अर्पणं ब्रह्म, **हुतं** हविः ब्रह्म ।

अर्पणं ब्रह्म, **केन** हुतं हविः ब्रह्म ? – अर्पणं ब्रह्म, **ब्रह्मणा** हुतं हविः ब्रह्म ।

अर्पणं ब्रह्म, ब्रह्मणा **कुत्र** हुतं हविः ब्रह्म ? – अर्पणं ब्रह्म, ब्रह्मणा **ब्रह्माग्नौ** हुतं हविः ब्रह्म ।

अर्पणं ब्रह्म, ब्रह्मणा ब्रह्माग्नौ हुतं हविः ब्रह्म । **पुनश्च गन्तव्यं किम्** ?

– अर्पणं ब्रह्म, ब्रह्मणा ब्रह्माग्नौ हुतं हविः ब्रह्म । **गन्तव्यं ब्रह्मैव** ।

अर्पणं ब्रह्म, ब्रह्मणा ब्रह्माग्नौ हुतं हविः ब्रह्म । **केन** गन्तव्यं ब्रह्मैव ?

– अर्पणं ब्रह्म, ब्रह्मणा ब्रह्माग्नौ हुतं हविः ब्रह्म । **तेन** गन्तव्यं ब्रह्मैव ।

अर्पणं ब्रह्म, ब्रह्मणा ब्रह्माग्नौ हुतं हविः ब्रह्म । **कीदृशेन** तेन गन्तव्यं ब्रह्मैव ?

– अर्पणं ब्रह्म, ब्रह्मणा ब्रह्माग्नौ हुतं हविः ब्रह्म । **ब्रह्मकर्मसमाधिना** तेन गन्तव्यं ब्रह्मैव ।

**तात्पर्यम् –** अत्र यत् समर्पणसाधनं वर्तते तत् ब्रह्म, यः अग्निः तत् ब्रह्म, यो यजमानः तद् ब्रह्म, यत्तेन हुतम् आज्यादि तदपि ब्रह्म, यत् समर्पणं तदपि ब्रह्म, तत्र अवहितेन पुरुषेण प्राप्तव्यमपि ब्रह्मैव । एवं सर्वं खलु इदं ब्रह्म । न तदतिरिक्तं किञ्चिदपि वस्तु इह वर्तते ।

**माध्वमतम्–**यज्ञे क्रियमाणे सति तत्साधनानि हविरादीनि ब्रह्माधीनानि, अहमपि (जीवोऽपि) तदधीनः इति यः चिन्तयति तादृशः भगवद्भक्तः मोक्षम् आप्नोति ।

**रामानुजीयमतम् –** ब्रह्मार्पणम् – इदम् एकं पदम्, स्रुगादि । ब्रह्मकर्मसमाधिः = सर्वं कर्म ब्रह्मात्मकत्वात् ब्रह्ममयम् इति यः समाधत्ते सः । ब्रह्मैव गन्तव्यम् आत्मस्वरूपमेव अवलोकनीयम् ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | हविर्ब्रह्माग्नौ | – हविः + ब्रह्माग्नौ | विसर्गसन्धिः (रेफः) |
| | ब्रह्मैव | – ब्रह्म + एव | वृद्धिसन्धिः |
| **(ख) समासः** | ब्रह्मकर्मसमाधिना | – ब्रह्म एव कर्म ब्रह्मकर्म – कर्मधारयः । | |
| | | – ब्रह्मकर्मणि समाधिः यस्य सः, तेन – बहुव्रीहिः । | |
| | ब्रह्माग्नौ | – ब्रह्म एव अग्निः, तस्मिन् – कर्मधारयः । | |
| **(ख) कृदन्तः** | अर्पणम् | – ऋ + णिच् + ल्युट् (करणे) अर्प्यते अनेन इति अर्पणं स्रुगादि । | |

हुतम् - हु + क्त (कर्मणि)।
गन्तव्यम् - गम् + तव्यत् (कर्मणि)।

**दैवमेवापरे यज्ञं योगिनः पर्युपासते।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥4.25॥**

**पदार्थः** – अपरे = अन्ये, योगिनः = कर्मिणः, दैवम् एव = देवसम्बन्धिनम् एव, यज्ञम् = यागम्, पर्युपासते = आचरन्ति, अपरे = अन्ये, ब्रह्माग्नौ = परमात्मरूपे ज्वलने, यज्ञेन एव = आत्मना एव, यज्ञम् = आत्मानम्, उपजुह्वति = समर्पयन्ति।

**अन्वयः** – अपरे योगिनः दैवम् एव यज्ञं पर्युपासते। अपरे ब्रह्माग्नौ यज्ञेन एव यज्ञम् उपजुह्वति।

**आकाङ्क्षा** –

**पर्युपासते।**

| | |
|---|---|
| **कं** पर्युपासते ? | – **यज्ञं** पर्युपासते। |
| **कीदृशं** यज्ञं पर्युपासते ? | – **दैवं** यज्ञं पर्युपासते। |
| **के** दैवं यज्ञं पर्युपासते ? | – **योगिनः** दैवं यज्ञं पर्युपासते। |
| **के** योगिनः दैवं यज्ञं पर्युपासते ? | – **अपरे** योगिनः दैवं यज्ञं पर्युपासते। |

**उपजुह्वति।**

| | |
|---|---|
| **कम्** उपजुह्वति ? | – **यज्ञम्** उपजुह्वति। |
| **केन** एव यज्ञम् उपजुह्वति ? | – **यज्ञेन** एव यज्ञम् उपजुह्वति। |
| **कस्मिन्** यज्ञेन एव यज्ञम् उपजुह्वति ? | – **ब्रह्माग्नौ** यज्ञेन एव यज्ञम् उपजुह्वति। |
| **के** ब्रह्माग्नौ यज्ञेन एव यज्ञम् उपजुह्वति ? | – **अपरे** ब्रह्माग्नौ यज्ञेन एव यज्ञम् उपजुह्वति। |

**तात्पर्यम्** – कर्मयोगिनः देवसम्बन्धिनं यज्ञं कुर्वन्ति। ज्ञानयोगिनः तु परब्रह्मरूपाग्नौ आत्मना एव आत्मानं जुह्वति।

**माध्वमतम्**–केचन योगिनः परमात्मनः पूजां यज्ञरूपेण कुर्वन्ति। केचन योगिनः ब्रह्मरूपे अग्नौ अग्निहोत्रादीनि कुर्वन्तः तदधीनं यज्ञं तस्मै एव अर्पयन्ति।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | ब्रह्माग्नावपरे | – ब्रह्माग्नौ + अपरे | यान्तवान्तादेशसन्धिः |
| | यज्ञेनैवोपजुह्वति | – यज्ञेन + एव | वृद्धिसन्धिः |
| | | – यज्ञेनैव + उपजुह्वति | गुणसन्धिः |
| **(ख) तद्धितान्तः** | दैवम् | – देव + अण् (इदमर्थे)। देवस्य अयम्, तम्। | |

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥4.26॥**

**पदार्थः** – अन्ये = इतरे, श्रोत्रादीनि = श्रोत्रप्रभृतीनि, इन्द्रियाणि = ज्ञानेन्द्रियाणि, संयमाग्निषु = नियमवह्निषु, जुह्वति = प्रक्षिपन्ति, अन्ये = अपरे, शब्दादीन् = शब्दप्रभृतीन्, विषयान् = विषयान्, इन्द्रियाग्निषु =

इन्द्रियरूपवह्निषु, जुह्वति = प्रक्षिपन्ति।

**अन्वयः** – अन्ये श्रोत्रादीनि इन्द्रियाणि संयमाग्निषु जुह्वति। अन्ये शब्दादीन् विषयान् इन्द्रियाग्निषु जुह्वति।

**आकाङ्क्षा** –

**जुह्वति।**

| | |
|---|---|
| **केषु** जुह्वति ? | – **इन्द्रियाग्निषु** जुह्वति। |
| **कान्** इन्द्रियाग्निषु जुह्वति ? | – **विषयान्** इन्द्रियाग्निषु जुह्वति। |
| **किमादीन्** विषयान् इन्द्रियाग्निषु जुह्वति ? | – **शब्दादीन्** विषयान् इन्द्रियाग्निषु जुह्वति। |
| **के** शब्दादीन् विषयान् इन्द्रियाग्निषु जुह्वति ? | – **अन्ये** शब्दादीन् विषयान् इन्द्रियाग्निषु जुह्वति। |

**जुह्वति।**

| | |
|---|---|
| **केषु** जुह्वति ? | – **संयमाग्निषु** जुह्वति। |
| **कानि** संयमाग्निषु जुह्वति ? | – **इन्द्रियाणि** संयमाग्निषु जुह्वति। |
| **किमादीनि** इन्द्रियाणि संयमाग्निषु जुह्वति ? | – **श्रोत्रादीनि** इन्द्रियाणि संयमाग्निषु जुह्वति। |
| **के** श्रोत्रादीनि इन्द्रियाणि संयमाग्निषु जुह्वति ? | – **अन्ये** श्रोत्रादीनि इन्द्रियाणि संयमाग्निषु जुह्वति। |

**तात्पर्यम्** – केचन योगिनः श्रोत्रादीनि इन्द्रियाणि स्वाधीनतारूपाग्नौ जुह्वति। अर्थात् विषयेभ्यः विमुखीकृत्य इन्द्रियाणि वशीकुर्वन्ति। अन्ये केचन योगिनः शब्दादीन् विषयान् इन्द्रियरूपाग्नौ जुह्वति। अर्थात् रागद्वेषरहितेन्द्रियैः विषयाणां ग्रहणं कुर्वन्तः तान् भस्मीकुर्वन्ति।

**माध्वमतम्**–केचन भगवत्पूजात्वेन श्रोत्रादीन्द्रियाणां निग्रहं कुर्वन्ति। केचन तत्पूजात्वेन अनिषिद्धविषयान् इन्द्रियैः भुञ्जते।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | श्रोत्रादीनीन्द्रियाणि | – | श्रोत्रादीनि + इन्द्रियाणि | सवर्णदीर्घसन्धिः |
| | इन्द्रियाण्यन्ये | – | इन्द्रियाणि + अन्ये | यण्सन्धिः |
| | अन्य इन्द्रियाग्निषु | – | अन्ये + इन्द्रियाग्निषु | यान्तवान्तादेशसन्धिः, यलोपः, प्रकृतिभावः |
| **(ख) समासः** | श्रोत्रादीन् | – | श्रोत्रम् आदिः येषां ते, तान् – बहुव्रीहिः। | |
| | शब्दादीन् | – | शब्दः आदिः येषां ते, तान् – बहुव्रीहिः। | |
| | संयमाग्निषु | – | संयमाः एव अग्नयः, तेषु – कर्मधारयः। | |
| | इन्द्रियाग्निषु | – | इन्द्रियाणि एव अग्नयः, तेषु – कर्मधारयः। | |

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥27॥**

**पदार्थः** – अपरे = अन्ये, सर्वाणि = सकलानि, इन्द्रियकर्माणि = इन्द्रियव्यापारान्, प्राणकर्माणि च = प्राणव्यापारान् च, ज्ञानदीपिते = आत्मज्ञानप्रज्वालिते, आत्मसंयमयोगाग्नौ = चित्तनियन्त्रणरूपयोगवह्नौ, जुह्वति = प्रक्षिपन्ति।

**अन्वयः** – अपरे सर्वाणि इन्द्रियकर्माणि प्राणकर्माणि च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति।

आकाङ्क्षा –

**जुह्वति** ।

**कस्मिन्** जुह्वति ? – **आत्मसंयमयोगाग्नौ** जुह्वति ।

**कीदृशे** आत्मसंयमयोगाग्नौ जुह्वति ? – **ज्ञानदीपिते** आत्मसंयमयोगाग्नौ जुह्वति ।

**कानि** ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ?

– **इन्द्रियकर्माणि** ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ।

इन्द्रियकर्माणि **पुनश्च कानि** ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ?

– इन्द्रियकर्माणि **प्राणकर्माणि** च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ।

**कति** इन्द्रियकर्माणि प्राणकर्माणि च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ?

– **सर्वाणि** इन्द्रियकर्माणि प्राणकर्माणि च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ।

**के** सर्वाणि इन्द्रियकर्माणि प्राणकर्माणि च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ?

– **अपरे** सर्वाणि इन्द्रियकर्माणि प्राणकर्माणि च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति ।

**तात्पर्यम्** – अन्ये केचन सर्वाणि इन्द्रियाणां कर्माणि तथा प्राणानां समस्ताः क्रियाः ज्ञानेन प्रकाशमाने चित्तसंयमनरूपो यो योगः तादृशे अग्नौ प्रक्षिपन्ति ।

**व्याकरणम्** –

**(क) सन्धिः** सर्वाणीन्द्रियकर्माणि – सर्वाणि + इन्द्रियकर्माणि सवर्णदीर्घसन्धिः
चापरे – च + अपरे सवर्णदीर्घसन्धिः

**(ख) समासः** इन्द्रियकर्माणि – इन्द्रियाणां कर्माणि – षष्ठीतत्पुरुषः ।
प्राणकर्माणि – प्राणानां कर्माणि – षष्ठीतत्पुरुषः ।
आत्मसंयमयोगाग्नौ – आत्मनि संयमः आत्मसंयमः – सप्तमीतत्पुरुषः ।
आत्मसंयमः एव योगाग्निः, तस्मिन् – कर्मधारयः ।
ज्ञानदीपिते – ज्ञानेन दीपितः, तस्मिन् – तृतीयातत्पुरुषः ।

**(ग) कृदन्तः** दीपिते – दीप् + क्त । (कर्तरि) तस्मिन् ।
क्रियमाणानि – कृ + लट्, शानच् (कर्मणि) ।

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥4.28॥**

**पदार्थः** – (केचित्) द्रव्ययज्ञाः = द्रव्यविनियोगरूपो यज्ञः येषां तादृशाः, (अन्ये) तपोयज्ञाः = तपोरूपः यज्ञः येषां तादृशाः, (अन्ये) योगयज्ञाः = योगरूपो यज्ञः येषां तादृशाः, तथा = एवम्, अपरे = अन्ये, स्वाध्यायज्ञानयज्ञाः च = वेदाध्ययनमेव यज्ञः एव येषां तादृशाः च, संशितव्रताः = तीक्ष्णव्रताः, यतयः = नियमशीलाः । (भवन्ति)

**अन्वयः** – केचित् द्रव्ययज्ञाः अन्ये तपोयज्ञाः अन्ये योगयज्ञाः तथा अपरे स्वाध्यायज्ञानयज्ञाः च संशितव्रताः यतयः भवन्ति ।

**आकाङ्क्षा –**

**भवन्ति** । (अध्याहृतम् )

**के** भवन्ति ? – **यतयः** भवन्ति ।

**कीदृशाः** यतयः भवन्ति ? – **संशितव्रताः** यतयः भवन्ति ।

संशितव्रताः (केचित्) यतयः **कीदृशाः** भवन्ति ?

– संशितव्रताः केचित् यतयः **द्रव्ययज्ञाः** भवन्ति ।

संशितव्रताः केचित् यतयः द्रव्ययज्ञाः, (अन्ये) **कीदृशाः** भवन्ति ?

– संशितव्रताः केचित् यतयः द्रव्ययज्ञाः, अन्ये **तपोयज्ञाः** भवन्ति ।

संशितव्रताः केचित् यतयः द्रव्ययज्ञाः, अन्ये तपोयज्ञाः, तथा अपरे **कीदृशाः** भवन्ति ?

– संशितव्रताः केचित् यतयः द्रव्ययज्ञाः, अन्ये तपोयज्ञाः, तथा अपरे **योगयज्ञाः** भवन्ति ।

संशितव्रताः केचित् यतयः द्रव्ययज्ञाः, अन्ये तपोयज्ञाः, तथा अपरे योगयज्ञाः, (अन्ये पुनः) **कीदृशाः** भवन्ति ?

– संशितव्रताः केचित् यतयः द्रव्ययज्ञाः, अन्ये तपोयज्ञाः, तथा अपरे योगयज्ञाः, अन्ये पुनः **स्वाध्यायज्ञानयज्ञाः** भवन्ति ।

**तात्पर्यम् –** केचन शिवार्पणबुद्ध्या लोकोद्धाराय द्रव्याणि उपयुञ्जते । अन्ये स्वधर्मपालनरूपं तपोयज्ञं कुर्वन्ति । केचन चित्तवृत्तिनिरोधार्थं प्राणायामादिस्वरूपं यज्ञम् आचरन्ति । अन्ये कठिनव्रताः भगवत्साक्षात्कारविषययुक्तं वेदाध्ययनशास्त्रज्ञानरूपयज्ञं निर्वहन्ति ।

**व्याकरणम् –**

**(क) सन्धिः**

| | | |
|---|---|---|
| द्रव्ययज्ञास्तपोयज्ञाः | – द्रव्ययज्ञाः + तपोयज्ञाः | विसर्गसन्धिः (सकारः) |
| योगयज्ञास्तथापरे | – योगयज्ञाः + तथा | विसर्गसन्धिः (सकारः) |
| | – तथा + अपरे | सवर्णदीर्घसन्धिः |
| स्वाध्यायज्ञानयज्ञाश्च | – स्वाध्यायज्ञानयज्ञाः + च | विसर्गसन्धिः, श्चुत्वम् |

**(ख) समासः**

| | |
|---|---|
| द्रव्ययज्ञाः | – द्रव्यमेव यज्ञः येषां ते – बहुव्रीहिः । |
| तपोयज्ञाः | – तपः एव यज्ञः येषां ते – बहुव्रीहिः । |
| योगयज्ञाः | – योगः एव यज्ञः येषां ते – बहुव्रीहिः । |
| स्वाध्यायज्ञानयज्ञाः | – स्वाध्यायस्य ज्ञानम्, स्वाध्यायज्ञानम् – षष्ठीतत्पुरुषः । स्वाध्यायज्ञानम् एव यज्ञः येषां ते – बहुव्रीहिः । |
| संशितव्रताः | – संशितं व्रतं येषां ते – बहुव्रीहिः । |

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ।।4.29।।**

**पदार्थः –** प्राणायामपरायणाः = प्रणायामतत्पराः, अपरे = इतरे, प्राणापानगती = प्राणापानवायुगमने, रुद्ध्वा = निरुध्य (कुम्भकः), प्राणम् = प्राणवायुम् (पूरकः), अपाने = अपानवायौ, जुह्वति = समर्पयन्ति,

तथा = एवम्, प्राणे = प्राणवायौ, अपानम् = अपानवायुम्, जुह्वति = समर्पयन्ति (रेचकः)।

**अन्वयः** – प्राणायामपरायणाः अपरे प्राणापानगती रुद्ध्वा प्राणम् अपाने जुह्वति, तथा प्राणे अपानं जुह्वति।

**आकाङ्क्षा** –

**जुह्वति**।

**के** जुह्वति ? – **अपरे** जुह्वति।

**कीदृशाः** अपरे जुह्वति ? – **प्राणायामपरायणाः** अपरे जुह्वति।

प्राणायामपरायणाः अपरे **कं** जुह्वति ? – प्राणायामपरायणाः अपरे **प्राणं** जुह्वति।

प्राणायामपरायणाः अपरे प्राणं **कुत्र** जुह्वति ? – प्राणायामपरायणाः अपरे प्राणम् **अपाने** जुह्वति।

प्राणायामपरायणाः अपरे प्राणम् अपाने जुह्वति, **तथा अन्यत् किं कुर्वन्ति ?**

– प्राणायामपरायणाः अपरे प्राणम् अपाने जुह्वति, **तथा अपानं जुह्वति**।

प्राणायामपरायणाः अपरे प्राणम् अपाने जुह्वति, तथा अपानं **कुत्र** जुह्वति ?

– प्राणायामपरायणाः अपरे प्राणम् अपाने जुह्वति, तथा अपानं **प्राणे** जुह्वति।

प्राणायामपरायणाः अपरे **किं कृत्वा** प्राणम् अपाने जुह्वति, तथा अपानं प्राणे जुह्वति ?

– प्राणायामपरायणाः अपरे **रुद्ध्वा** प्राणम् अपाने जुह्वति, तथा अपानं प्राणे जुह्वति।

प्राणायामपरायणाः अपरे **के** रुद्ध्वा प्राणम् अपाने जुह्वति, तथा अपानं प्राणे जुह्वति।

– प्राणायामपरायणाः अपरे **प्राणापानगती** रुद्ध्वा प्राणम् अपाने जुह्वति, तथा अपानं प्राणे जुह्वति।

**तात्पर्यम्** – केचन प्राणायामपरायणाः योगिनः अपानवायौ प्राणवायुं समर्पयन्ति। इतरे प्राणवायौ अपानवायुं समर्पयन्ति। एवं कुम्भक-रेचक-पूरकादिक्रमेण प्राणायामं कुर्वन्तः आत्मसंयमनं कुर्वन्ति।

**व्याकरणम्** –

**(क) सन्धिः** प्राणेऽपानम् – प्राणे + अपानम् पूर्वरूपसन्धिः

तथापरे – तथा + अपरे सवर्णदीर्घसन्धिः

**(ख) समासः** प्राणापानगती – प्राणश्च अपानश्च प्राणापानौ – द्वन्द्वः।

प्राणापानयोः गती, ते – षष्ठीतत्पुरुषः।

प्राणायामपरायणाः – प्राणायामः परायणं येषां ते – बहुव्रीहिः।

**(ग) कृदन्तः** रुद्ध्वा – रुध् + क्त्वा।

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥4.30॥**

**पदार्थः** – अपरे = अन्ये, नियताहाराः = परिमिताहाराः, प्राणान् = प्राणवायून्, प्राणेषु = प्राणेषु, जुह्वति = क्षिपन्ति, सर्वे अपि = समे अपि, एते = इमे, यज्ञविदः = यज्ञवेत्तारः, यज्ञक्षपितकल्मषाः = यज्ञविनाशितपापाः।

**अन्वयः** – अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति। एते सर्वे अपि यज्ञविदः यज्ञक्षपितकल्मषाः।

आकाङ्क्षा –

**जुह्वति** ।

**के** जुह्वति ? – **अपरे** जुह्वति ।

अपरे **कीदृशाः** जुह्वति ? – अपरे **नियताहाराः** जुह्वति ।

अपरे नियताहाराः **कान्** जुह्वति ? – अपरे नियताहाराः **प्राणान्** जुह्वति ।

अपरे नियताहाराः प्राणान् **केषु** जुह्वति ? – अपरे नियताहाराः प्राणान् **प्राणेषु** जुह्वति ।

**यज्ञक्षपितकल्मषाः** ।

**के** यज्ञक्षपितकल्मषाः ? – **एते** यज्ञक्षपितकल्मषाः ।

**कति** एते यज्ञक्षपितकल्मषाः ? – **सर्वेऽपि** एते यज्ञक्षपितकल्मषाः ।

सर्वेऽपि एते **कीदृशाः** यज्ञक्षपितकल्मषाः ? – सर्वेऽपि एते **यज्ञविदः** यज्ञक्षपितकल्मषाः ।

**तात्पर्यम्** – अन्ये योगिनः नियताहारं सेवमानः प्राणायामपरायणाः अपानादिगतिं रुद्ध्वा प्राणान् प्राणेषु जुह्वति । एते सर्वेऽपि यज्ञं विदन्ति । तस्मादेव यज्ञेन नाशितपापाः भवन्ति ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | सर्वेऽप्येते | – सर्वे + अपि पूर्वरूपसन्धिः |
| | | – सर्वेऽपि + एते यण्सन्धिः |
| **(ख) समासः** | नियताहाराः | – नियतः आहारः येषां ते – बहुव्रीहिः । |
| | यज्ञक्षपितकल्मषाः | – यज्ञेन क्षपितं यज्ञक्षपितम् – तृतीयातत्पुरुषः । |
| | | यज्ञक्षपितं कल्मषं येषां ते – बहुव्रीहिः । |
| **(ग) कृदन्तः** | विदः | – विद् + क्विप् । (कर्तरि) |

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥4.31॥**

**पदार्थः** – कुरुसत्तम = कुरुश्रेष्ठ ! यज्ञशिष्टामृतभुजः = यज्ञे सुधातुल्यं शिष्टं भुञ्जानाः, सनातनम् = शाश्वतम्, ब्रह्म = परमात्मानम्, यान्ति = प्राप्नुवन्ति, अयज्ञस्य = यज्ञहीनस्य, अयं लोकः = एषः भूलोकः, नास्ति = न विद्यते, अन्यः = परलोकः, कुतः = कथम् ? (भवति)

**अन्वयः** – कुरुसत्तम । यज्ञशिष्टामृतभुजः सनातनं ब्रह्म यान्ति । अयज्ञस्य अयं लोकः नास्ति । अन्यः कुतः ।

**आकाङ्क्षा** –

**यान्ति** ।

**किं** यान्ति ? – ब्रह्म यान्ति ।

**कीदृशं** ब्रह्म यान्ति ? – सनातनं ब्रह्म यान्ति ।

**के** सनातनं ब्रह्म यान्ति ? – यज्ञशिष्टामृतभुजः सनातनं ब्रह्म यान्ति ।

**नास्ति** ।

**कः** नास्ति ? — **लोकः** नास्ति ।
**कः** लोकः नास्ति ? — **अयं** लोकः नास्ति ।
**कस्य** अयं लोकः नास्ति ? — **अयज्ञस्य** अयं लोकः नास्ति ।
अयज्ञस्य अयं लोकः नास्ति । **अन्यः अस्ति** ? — अयज्ञस्य अयं लोकः नास्ति । **अन्यः कुतः** ?
अस्मिन् श्लोके सम्बोधनपदं किम् ? — **कुरुसत्तम** ।

**तात्पर्यम् –** अर्जुन ! यज्ञस्य अमृततुल्यं शिष्टं सेवमानाः योगिनः सनातनं परं ब्रह्म प्राप्नुवन्ति । तथा ये न यजन्ते तेषाम् अत्रैव लोके सुखं नास्ति । किं पुनः परलोके ?

**रामानुजीयमतम् –** अयं लोकः प्राकृतः लोकः । अन्यः लोकः अप्राकृतः लोकः ।

**व्याकरणम् –**

**(क) सन्धिः** नायम् – न + अयम् सवर्णदीर्घसन्धिः
लोकोऽस्त्ययज्ञस्य – लोकः + अस्ति विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च
– अस्ति + अयज्ञस्य यण्सन्धिः
कुतोऽन्यः – कुतः + अन्यः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

**(ख) समासः** यज्ञशिष्टामृतभुजः – यज्ञस्य शिष्टम्, यज्ञशिष्टम् – षष्ठीतत्पुरुषः ।
– यज्ञशिष्टम् एव अमृतम् यज्ञशिष्टामृतम् – कर्मधारयः ।
– यज्ञशिष्टामृतं भुञ्जते इति – कर्तरि क्विप् उपपदसमासश्च ।
अयज्ञस्य – न विद्यते यज्ञः यस्य सः, तस्य – नञ्तत्पुरुषः ।

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥4.32॥**

**पदार्थः –** एवम् = इत्थम्, बहुविधाः = नैकप्रकाराः, यज्ञाः = यागाः, ब्रह्मणः = वेदस्य, मुखे = आदौ, विततः = विवृताः, तान् सर्वान् = तान् सकलान्, कर्मजान् = कर्मोद्भवान्, विद्धि = जानीहि, एवम् = इत्थम्, ज्ञात्वा = बुद्ध्वा, विमोक्ष्यसे = मोक्षं प्राप्स्यसि ।

**अन्वयः –** एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे विततः । तान् सर्वान् कर्मजान् विद्धि । एवं ज्ञात्वा विमोक्ष्यसे ।

**आकाङ्क्षा –**

**विततः** ।
**कुत्र** विततः ? — **मुखे** विततः ।
**कस्य** मुखे विततः ? — **ब्रह्मणः** मुखे विततः ।
**के** ब्रह्मणः मुखे विततः ? — **यज्ञाः** ब्रह्मणः मुखे विततः ।
**कतिविधाः** यज्ञाः ब्रह्मणः मुखे विततः ? — **बहुविधाः** यज्ञाः ब्रह्मणः मुखे विततः ।
**कथं** बहुविधाः यज्ञाः ब्रह्मणः मुखे विततः ? — **एवं** बहुविधाः यज्ञाः ब्रह्मणः मुखे विततः ।
एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे विततः । **तेन किं करणीयम्** ?
— एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे विततः । **तेन विद्धि** ।

एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । **कान्** विद्धि ?
– एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । **तान्** विद्धि ।
एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । तान् **कति** विद्धि ?
– एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । तान् **सर्वान्** विद्धि ।
एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । **कीदृशान्** तान् सर्वान् विद्धि ?
– एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । **कर्मजान्** तान् सर्वान् विद्धि ।
एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । कर्मजान् तान् सर्वान् विद्धि । **तेन मम किम्** ?
– एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । कर्मजान् तान् सर्वान् विद्धि । **विमोक्ष्यसे** ।
एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । कर्मजान् तान् सर्वान् विद्धि । **किं कृत्वा** विमोक्ष्यसे ?
– एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । कर्मजान् तान् सर्वान् विद्धि । **ज्ञात्वा** विमोक्ष्यसे ।
एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । कर्मजान् तान् सर्वान् विद्धि । **कथं** ज्ञात्वा विमोक्ष्यसे ?
– एवं बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः । कर्मजान् तान् सर्वान् विद्धि । **एवं** ज्ञात्वा विमोक्ष्यसे ।

**तात्पर्यम् –** एवम् अनेकप्रकारकाः यज्ञाः वेदस्य आदिमे भागे कर्मकाण्डे विवृताः सन्ति । तान् सर्वान् कर्मणः एव उत्पन्नान् अवगच्छ । अनेन प्रकारेण यथार्थं जानासि तर्हि निष्कामकर्मयोगद्वारा संसारबन्धनात् मुक्तः भवसि ।

**व्याकरणम् –**

**(क) कृदन्तः** वितताः – वि + तत् + क्त (कर्मणि)

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥4.33॥**

**पदार्थः –** परन्तप = शत्रुतापक ! द्रव्यमयात् = द्रव्यसाध्यात्, यज्ञात् = यागात्, ज्ञानयज्ञः = आत्मज्ञानरूपो यज्ञः, श्रेयान् = वरीयान्, पार्थ = अर्जुन ! सर्वम् = समस्तम्, कर्म = यज्ञरूपं कर्म, ज्ञाने = आत्मज्ञाने,अखिलम् = फलसहितम्, परिसमाप्यते = पर्यवस्यति ।

**अन्वयः –** परन्तप ! द्रव्यमयात् यज्ञात् ज्ञानयज्ञः श्रेयान् । पार्थ ! सर्वं कर्म ज्ञाने अखिलं परिसमाप्यते ।

**आकाङ्क्षा –**

**श्रेयान्** ।
**कः** श्रेयान् ? – **ज्ञानयज्ञः** श्रेयान् ।
**कस्मात्** ज्ञानयज्ञः श्रेयान् ? – **यज्ञात्** ज्ञानयज्ञः श्रेयान् ।
**कीदृशात्** यज्ञात् ज्ञानयज्ञः श्रेयान् ? – **द्रव्यमयात्** यज्ञात् ज्ञानयज्ञः श्रेयान् ।
**परिसमाप्यते** ।
**कथं** परिसमाप्यते ? – **अखिलं** परिसमाप्यते ।
**कुत्र** अखिलं परिसमाप्यते ? – **ज्ञाने** अखिलं परिसमाप्यते ।
**किं** ज्ञाने अखिलं परिसमाप्यते ? – **कर्म** ज्ञाने अखिलं परिसमाप्यते ।

**कियत्** कर्म ज्ञाने अखिलं परिसमाप्यते ? – **सर्वं कर्म** ज्ञाने अखिलं परिसमाप्यते ।

अस्मिन् श्लोके सम्बोधनपदे के ? – **परन्तप, पार्थ** ।

**तात्पर्यम्** – हे अर्जुन ! सांसारिकवस्तुभिः सिद्धात् यज्ञात् आत्मज्ञानरूपो यज्ञः श्रेष्ठः भवति । यतः सर्वाणि कर्माणि ज्ञाने एव परिसमाप्तिं गच्छन्ति, फलत्वात् ।

**माध्वमतम्**–तत्त्वज्ञानेन तव मोहः नश्यति । बन्धुमोहः पुनः न भवति । अपि च अनेन तत्त्वज्ञानेन सर्वत्र व्याप्ते मयि अशेषभूतानि द्रक्ष्यसि ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | द्रव्यमयाद्यज्ञात् | – | द्रव्यमयात् + यज्ञात् | जश्त्वसन्धिः |
| | यज्ञाज्ज्ञानयज्ञः | – | यज्ञात् + ज्ञानयज्ञः | श्चुत्वसन्धिः |
| | कर्माखिलम् | – | कर्म + अखिलम् | सवर्णदीर्घसन्धिः |
| **(ख) तद्धितान्तः** | द्रव्यमयात् | – | द्रव्य + मयट् (स्वरूपार्थे) तस्मात् । द्रव्यस्वरूपः इत्यर्थः । | |
| | श्रेयान् | – | प्रशस्य + ईयसुन् (अतिशयार्थे) । श्र इति आदेशः । | |

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥4.34॥**

**पदार्थः** – तत् = ज्ञानम्, प्रणिपातेन = नमस्कारेण, परिप्रश्नेन = नानाविधया पृच्छया, सेवया (च) = शुश्रूषया च, विद्धि = जानीहि, तत्त्वदर्शिनः = यथार्थद्रष्टारः, ज्ञानिनः = आत्मज्ञानिनः, ते = तुभ्यम्, ज्ञानम् = आत्मज्ञानम्, उपदेक्ष्यन्ति = वदिष्यन्ति ।

**अन्वयः** – तत् प्रणिपातेन परिप्रश्नेन सेवया च विद्धि । तत्त्वदर्शिनः ज्ञानिनः ते ज्ञानम् उपदेक्ष्यन्ति ।

**आकाङ्क्षा** –

**उपदेक्ष्यन्ति** ।

**किम्** उपदेक्ष्यन्ति ? – **ज्ञानम्** उपदेक्ष्यन्ति ।

**के** ज्ञानम् उपदेक्ष्यन्ति ? – **ज्ञानिनः** ज्ञानम् उपदेक्ष्यन्ति ।

**कीदृशाः** ज्ञानिनः ज्ञानम् उपदेक्ष्यन्ति ? – **तत्त्वदर्शिनः** ज्ञानिनः ज्ञानम् उपदेक्ष्यन्ति ।

तत्त्वदर्शिनः ज्ञानिनः **कस्मै** ज्ञानम् उपदेक्ष्यन्ति ? – तत्त्वदर्शिनः ज्ञानिनः **ते** ज्ञानम् उपदेक्ष्यन्ति ।

**विद्धि** ।

**केन** विद्धि ? – **प्रणिपातेन** विद्धि ।

प्रणिपातेन, **पुनश्च केन** विद्धि ? – प्रणिपातेन, **परिप्रश्नेन** विद्धि ।

प्रणिपातेन, परिप्रश्नेन **पुनश्च कया** विद्धि ? – प्रणिपातेन, परिप्रश्नेन **सेवया च** विद्धि ।

**किं** प्रणिपातेन परिप्रश्नेन सेवया विद्धि ? – **तत्** प्रणिपातेन परिप्रश्नेन सेवया च विद्धि ।

**तात्पर्यम्** – भवान् नमस्कारेण, किं सत्यम् ? किमसत्यम् ? इत्यादिना नानाविधेन प्रश्नेन शुश्रूषया च तत् ज्ञानं प्राप्नोतु । तत्त्वं जानन्तः पुरुषाः भवते आत्मज्ञानम् उपदिशन्ति ।

**रामानुजीयमतम्** – ज्ञानम् आत्मविषयकं ज्ञानम् ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | तद्विद्धि | – तत् + विद्धि | जश्त्वसन्धिः |
| | ज्ञानिनस्तत्त्वदर्शिनः | – ज्ञानिनः + तत्त्वदर्शिनः | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | तत्त्वदर्शिनः | – तत्त्वं पश्यन्ति – ताच्छीलिके कर्तरि णिनिः उपपदसमासश्च । | |
| **(ग) तद्धितान्तः** | ज्ञानिनः | – ज्ञान + इनि (मतुबर्थे) । ज्ञानम् एषाम् एषु वा अस्ति । | |

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ।।4.35।।**

**पदार्थः** – पाण्डव = पाण्डुपुत्र ! यत् ज्ञात्वा = यत् विज्ञाय, पुनः = भूयः, मोहम् = व्यामोहम्, एवम् = इत्थम्, न यास्यसि = न गमिष्यसि, येन = येन ज्ञानेन, आत्मनि = स्वस्मिन्, भूतानि = प्राणिनः, अशेषेण = समग्रम्, द्रक्ष्यसि = पश्यसि, अथो = अनन्तरम्, मयि = भगवति ।

**अन्वयः** – पाण्डव ! यत् ज्ञात्वा पुनः मोहम् एवं न यास्यसि । येन आत्मनि भूतानि अशेषेण द्रक्ष्यसि । अथो मयि । (तत् ज्ञानं तत्त्वदर्शिनः ते उपदेक्ष्यन्ति ।)

**आकाङ्क्षा** –

**न यास्यसि** ।

**कं** न यास्यसि ? – **पुनः मोहं** न यास्यसि ।

**किं कृत्वा** पुनः मोहं न यास्यसि ? – **ज्ञात्वा** पुनः मोहं न यास्यसि ।

ज्ञात्वा पुनः मोहं **कथं** न यास्यसि ? – यत् ज्ञात्वा पुनः मोहम् **एवं** न यास्यसि ।

**द्रक्ष्यसि** ।

**कानि** द्रक्ष्यसि ? – **भूतानि** द्रक्ष्यसि ।

भूतानि **कुत्र** द्रक्ष्यसि ? – भूतानि **आत्मनि** द्रक्ष्यसि ।

भूतानि आत्मनि **कथं** द्रक्ष्यसि ? – भूतानि आत्मनि **अशेषेण** द्रक्ष्यसि ।

भूतानि आत्मनि **अथो कुत्र** अशेषेण द्रक्ष्यसि ? – भूतानि आत्मनि **अथो मयि** अशेषेण द्रक्ष्यसि ।

**केन** भूतानि आत्मनि अथो कुत्र अशेषेण द्रक्ष्यसि ? – **येन** भूतानि आत्मनि अथो मयि अशेषेण द्रक्ष्यसि ।

**यत्** ज्ञात्वा पुनः मोहम् एवं न यास्यसि, **येन** भूतानि आत्मनि अथो मयि अशेषण द्रक्ष्यसि तादृशं **किम्** ?

**यत्** ज्ञात्वा पुनः मोहम् एवं न यास्यसि, **येन** भूतानि आत्मनि अथो मयि अशेषण द्रक्ष्यसि तादृशं **ज्ञानम्** ।

(तच्च ज्ञानं तत्त्व दर्शिनः ते उपदेक्ष्यन्ति ।)

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **पाण्डव** !

**तात्पर्यम्** – अर्जुन ! येन ज्ञानेन भवान् पुनः एतादृशं मोहजालं न आप्नोति, येन आत्मज्ञानेन समवायबुद्ध्या स्वस्मिन् मयि च सर्वान् जीवान् द्रष्टुं शक्नोति तादृशं ज्ञानं तत्त्वदर्शिनः ते उपदेक्ष्यन्ति ।

व्याकरणम् –

(क) सन्धिः

| | | | |
|---|---|---|---|
| यज्ज्ञात्वा | – | यत् + ज्ञात्वा | श्चुत्वसन्धिः |
| पुनर्मोहम् | – | पुनः + मोहम् | विसर्गसन्धिः (रेफः) |
| भूतान्यशेषेण | – | भूतानि + अशेषेण | यण्सन्धिः |
| द्रक्ष्यस्यात्मन्यथो मयि | – | द्रक्ष्यसि + आत्मनि | यण्सन्धिः |
| | – | आत्मनि + अथो | यण्सन्धिः |

(ख) समासः अशेषेण – न शेषः, तेन – नञ्तत्पुरुषः ।

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥4.36॥**

**पदार्थः** – अपि चेत् = यदि पुनः, सर्वेभ्यः = सकलेभ्यः, पापेभ्यः = पापकारिभ्यः, पापकृत्तमः = पापिष्ठः, असि = भवसि, (तदा) सर्वम् = तदा समस्तम्, वृजिनम् = पापम्, ज्ञानप्लवेन एव = ज्ञानोडुपेन एव, सन्तरिष्यसि = अतिक्रमिष्यसि ।

**अन्वयः** – अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि (तदा) सर्वं वृजिनं ज्ञानप्लवेन एव सन्तरिष्यसि ।

**आकाङ्क्षा** –

**असि** ।

**कीदृशः** असि ? – **पापकृत्तमः** असि ।

**केभ्यः** पापकृत्तमः असि ? – **पापेभ्यः** पापकृत्तमः असि ।

**कतिभ्यः** पापेभ्यः पापकृत्तमः असि ? – **सर्वेभ्यः** पापेभ्यः पापकृत्तमः असि ।

**अपि चेत्** सर्वेभ्यः पापेभ्यः पापकृत्तमः असि **(तदा) किं करिष्यसि** ?

– **अपि चेत्** सर्वेभ्यः पापेभ्यः पापकृत्तमः असि **(तदा) सन्तरिष्यसि** ।

अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि तदा **किं** सन्तरिष्यसि ?

– अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि तदा **वृजिनं** सन्तरिष्यसि ।

अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि तदा **कियत्** वृजिनं सन्तरिष्यसि ?

– अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि तदा **सर्वं** वृजिनं सन्तरिष्यसि ।

अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि तदा सर्वं वृजिनं **केन** सन्तरिष्यसि ?

– अपि चेत् सर्वेभ्यः पापेभ्यः पापकृत्तमः असि तदा सर्वं वृजिनं **ज्ञानप्लवेनैव** सन्तरिष्यसि ।

**तात्पर्यम्** – भवान् सर्वेषां पापिनाम् अपेक्षया अधिकं पापं कृतवान् चेदपि ज्ञानरूपया नौकया निस्सन्देहं तं पापरूपं समुद्रं तरिष्यति ।

व्याकरणम् –

(क) सन्धिः

| | | | |
|---|---|---|---|
| चेदसि | – | चेत् + असि | जश्त्वसन्धिः |
| ज्ञानप्लवेनैव | – | ज्ञानप्लवेन + एव | वृद्धिसन्धिः |

(ख) **समासः** ज्ञानप्लवेन - ज्ञानम् एव प्लवः, तेन - कर्मधारयः।

(ग) **तद्धितान्तः** पापकृत्तमः - पापकृत् + तमप्। (अतिशये) अतिशयेन पापकृत् इत्यर्थः।

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥4.37॥**

**पदार्थः** - अर्जुन = अर्जुन! यथा = येन प्रकारेण, समिद्धः = सन्दीप्तः, अग्निः = वह्निः, एधांसि = काष्ठानि, भस्मसात् = भस्ममयानि, कुरुते = करोति, तथा = तेन प्रकारेण, ज्ञानाग्निः = ज्ञानरूपः अग्निः, सर्वकर्माणि = निखिलकर्माणि, भस्मसात् = भस्ममयानि, कुरुते = विदधाति।

**अन्वयः** - अर्जुन! यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते।

**आकाङ्क्षा** -

**कुरुते**।

**किं** कुरुते? - **भस्मसात्** कुरुते।

**कानि** भस्मसात् कुरुते? - **एधांसि** भस्मसात् कुरुते।

**कः** एधांसि भस्मसात् कुरुते? - **अग्निः** एधांसि भस्मसात् कुरुते।

**कथंभूतः** अग्निः एधांसि भस्मसात् कुरुते? - **समिद्धः** अग्निः एधांसि भस्मसात् कुरुते।

**यथा** समिद्धः अग्निः एधांसि भस्मसात् कुरुते **तथा किं भवति**?

- **यथा** समिद्धः अग्निः एधांसि भस्मसात् कुरुते **तथा कुरुते**।

यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा **कः** कुरुते?

- यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा **ज्ञानाग्निः** कुरुते।

यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा ज्ञानाग्निः **किं** कुरुते?

- यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा ज्ञानाग्निः **भस्मसात्** कुरुते।

यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा ज्ञानाग्निः **कानि** भस्मसात् कुरुते?

- यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते तथा ज्ञानाग्निः **सर्वकर्माणि** भस्मसात् कुरुते।

अस्मिन् श्लोके सम्बोधनपदं किम्? - **अर्जुन**।

**तात्पर्यम्** - अर्जुन! यथा प्रज्वलन् अग्निः काष्ठानि भस्मसात् करोति तथा ज्ञानाग्निः सर्वाण्यपि कर्माणि भस्मीकरोति।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यथैधांसि | - यथा + एधांसि | वृद्धिसन्धिः |
| | समिद्धोऽग्निर्भस्मसात् | - समिद्धः + अग्निः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपम् |
| | | - अग्निः + भस्मसात् | विसर्गसन्धिः रेफः |
| | कुरुतेऽर्जुन | - कुरुते + अर्जुन | पूर्वरूपसन्धिः |

**(ख) समासः** ज्ञानाग्निः – ज्ञानम् एव अग्निः – कर्मधारयः ।
सर्वकर्माणि – सर्वाणि कर्माणि – कर्मधारयः ।
**(ग) कृदन्तः** समिद्धः – सम् + इन्ध् + क्त । (कर्तरि)

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥4.38॥**

**पदार्थः –** ज्ञानेन = ब्रह्मज्ञानेन, सदृशम् = तुल्यम्, पवित्रम् = पावनम्, इह = अत्र, नहि विद्यते = नास्ति, तत् = ज्ञानम्, स्वयम् = आत्मना एव, योगसंसिद्धः = समाधिनिष्ठः, कालेन = महता समयेन, आत्मनि = स्वस्मिन्, विन्दति = लभते ।

**अन्वयः –** ज्ञानेन सदृशं पवित्रम् इह नहि विद्यते । तत् स्वयम् योगसंसिद्धः कालेन आत्मनि विन्दति ।

**आकाङ्क्षा –**

**न विद्यते** ।
**किं** न विद्यते ? – **पवित्रं** न विद्यते ।
**कीदृशं** पवित्रं न विद्यते ? – **सदृशं** पवित्रं न विद्यते ।
**केन** सदृशं पवित्रं न विद्यते ? – **ज्ञानेन** सदृशं पवित्रं न विद्यते ।
ज्ञानेन सदृशं पवित्रं **कुत्र** न विद्यते ? – ज्ञानेन सदृशं पवित्रम् **इह** न विद्यते ।
ज्ञानेन सदृशं पवित्रम् इह न विद्यते । **तत् कथं विन्दति** ?
– ज्ञानेन सदृशं पवित्रम् इह न विद्यते । **तत् कालेन विन्दति** ।
ज्ञानेन सदृशं पवित्रम् इह न विद्यते । तत् **कीदृशः** कालेन विन्दति ?
– ज्ञानेन सदृशं पवित्रम् इह न विद्यते । तत् **योगसंसिद्धः** कालेन विन्दति ।
ज्ञानेन सदृशं पवित्रम् इह न विद्यते । तत् **केन** योगसंसिद्धः कालेन विन्दति ?
– ज्ञानेन सदृशं पवित्रम् इह न विद्यते । तत् **स्वयं** योगसंसिद्धः कालेन विन्दति ।
ज्ञानेन सदृशं पवित्रम् इह न विद्यते । तत् स्वयं योगसंसिद्धः कालेन **कुत्र** विन्दति ?
– ज्ञानेन सदृशं पवित्रम् इह न विद्यते । तत् स्वयं योगसंसिद्धः कालेन **आत्मनि** विन्दति ।

**तात्पर्यम् –** इह लोके ज्ञानेन समं पवित्रम् अन्यत् न किञ्चन विद्यते । तत् ज्ञानं फलापेक्षां विना कर्म कुर्वन् पुरुषः गच्छता कालेन चित्तशुद्धिम् अवाप्य स्वयमेव आत्मनि प्राप्नोति ।

**रामानुजीयमतम् –** ज्ञानम् आत्मज्ञानम् । योगः ज्ञानाकारकर्मयोगः ।

**व्याकरणम् –**

**(क) समासः** योगसंसिद्धः – योगेन संसिद्धः – तृतीयातत्पुरुषः ।
**(ख) कृदन्तः** संसिद्धः – सं + सिध् + क्त । (कर्तरि)

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥4.39॥**

**पदार्थः** – संयतेन्द्रियः = जितेन्द्रियः, तत्परः = ज्ञानपरः, श्रद्धावान् = आस्थावान्, ज्ञानम् = आत्मज्ञानम्, लभते = प्राप्नोति, ज्ञानम् = आत्मज्ञानम्, लब्ध्वा = प्राप्य, अचिरेण = शीघ्रम्, पराम् = उत्कृष्टम्, शान्तिम् = शमम्, अधिगच्छति = प्राप्नोति ।

**अन्वयः** – संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । ज्ञानं लब्ध्वा अचिरेण परां शान्तिम् अधिगच्छति ।

**आकाङ्क्षा** –

**लभते** ।

**किं** लभते ? – **ज्ञानं** लभते ।

**कः** ज्ञानं लभते ? – **श्रद्धावान्** ज्ञानं लभते ।

**कीदृशः** श्रद्धावान् ज्ञानं लभते ? – **तत्परः** श्रद्धावान् ज्ञानं लभते ।

**पुनश्च कीदृशः** तत्परः श्रद्धावान् ज्ञानं लभते ? – **संयतेन्द्रियः** तत्परः श्रद्धावान् ज्ञानं लभते ।

संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । **तेन किम्** ?

– संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **अधिगच्छति** ।

संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **किम्** अधिगच्छति ?

– संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **शान्तिम्** अधिगच्छति ।

संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **कीदृशीं** शान्तिम् अधिगच्छति ?

– संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **परां** शान्तिम् अधिगच्छति ।

संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **कदा** परां शान्तिम् अधिगच्छति ?

– संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **अचिरेण** परां शान्तिम् अधिगच्छति ।

संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **किं कृत्वा** अचिरेण परां शान्तिम् अधिगच्छति ?

– संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **लब्ध्वा** अचिरेण परां शान्तिम् अधिगच्छति ।

संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **किं** लब्ध्वा अचिरेण परां शान्तिम् अधिगच्छति ?

– संयतेन्द्रियः तत्परः श्रद्धावान् ज्ञानं लभते । तेन **ज्ञानं** लब्ध्वा अचिरेण परां शान्तिम् अधिगच्छति ।

**तात्पर्यम्** – ज्ञानमार्गे आसक्तः श्रद्धावान् च जितेन्द्रियः आत्मज्ञानं प्राप्नोति । आत्मज्ञानं प्राप्य एव सः मुक्तिरूपां परमशान्तिम् अधिगच्छति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | श्रद्धावाल्लँभते | – श्रद्धवान् + लभते | अनुनासिकसन्धिः |
| | अचिरेणाधिगच्छति | – अचिरेण + अधिगच्छति | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | संयतेन्द्रियः | – संयतानि इन्द्रियाणि येन सः – बहुव्रीहिः । | |
| **(ग) कृदन्त** | श्रद्धावान् | – श्रद्धा + मतुप् । श्रद्धा अस्य अस्मिन् वा अस्ति । | |
| | लब्ध्वा | – लभ् + क्त्वा । | |

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥4.40॥**

**पदार्थः** – अज्ञः च = अज्ञानी च, अश्रद्दधानः च = श्रद्धाविहीनः च, संशयात्मा = संशयमनस्कः, विनश्यति = प्रणश्यति । संशयात्मनः = संशयचित्तस्य, अयं लोकः नास्ति = इह लोकः न विद्यते, परः न = परलोकः न, सुखं च न = सन्तोषः अपि न विद्यते ।

**अन्वयः** – अज्ञः च अश्रद्दधानः च संशयात्मा विनश्यति । संशयात्मनः अयं लोकः नास्ति, परः न, सुखं च न ।

**आकाङ्क्षा** –

**विनश्यति** ।

**कः** विनश्यति ? – **अज्ञः** विनश्यति ।

अज्ञः **पुनश्च कः** विनश्यति ? – अज्ञः च **अश्रद्दधानः** च विनश्यति ।

अज्ञः च अश्रद्दधानः च **कीदृशः** विनश्यति ? – अज्ञः च अश्रद्दधानः च **संशयात्मा** विनश्यति ।

**न अस्ति** ।

**कस्य** न अस्ति ? – **संशयात्मनः** न अस्ति ।

संशयात्मनः **कः** न अस्ति ? – संशयात्मनः **लोकः** न अस्ति ।

संशयात्मनः **कः** लोकः न अस्ति ? – संशयात्मनः **अयं** लोकः न अस्ति ।

संशयात्मनः अयं लोकः न अस्ति, **पुनश्च कः न**? – संशयात्मनः अयं लोकः न अस्ति, **परः न** ।

संशयात्मनः अयं लोकः न अस्ति, परः न, **पुनश्च किं न** ?

– संशयात्मनः अयं लोकः न अस्ति, परः न, **सुखं च न** ।

**तात्पर्यम्** – यस्य आत्मविषयकं ज्ञानं नास्ति, यस्य च तत्र श्रद्धा नास्ति तयोरेव संशयः भवति । संशये सति मुक्तिरूपं फलं न प्राप्नोति । तादृशस्य संशयात्मनः अयं लोकः न सुखदायकः, नापि परलोकः । तस्य च अस्मिन् संसारे क्लेशानुभवः एव गतिः ।

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| अज्ञश्चाश्रद्दधानश्च | – अज्ञः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | – अज्ञश्च + अश्रद्दधानः | सवर्णदीर्घसन्धिः |
| | – अज्ञश्चाश्रद्दधानः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| नायम् | – न + अयम् | सवर्णदीर्घसन्धिः |
| लोकोऽस्ति | – लोकः + अस्ति | विसर्गसन्धिः (सकारः) रेफः उकारः, गुणः, पूर्वरूपम् |
| परो न | – परः + न | विसर्गसन्धिः (सकारः) रेफः उकारः गुणः |

**(ख) समासः**

| | | |
|---|---|---|
| अज्ञः | – | न ज्ञः – नञ्तत्पुरुषः । |
| अश्रद्दधानः | – | न श्रद्दधानः – नञ्तत्पुरुषः । |
| संशयात्मा | – | संशयः आत्मनि यस्य सः – बहुव्रीहिः । |

**योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥4.41॥**

**पदार्थः** – धनञ्जय = अर्जुन ! योगसन्न्यस्तकर्माणम् = आत्मज्ञानसंत्यक्तकर्माणम्, ज्ञानसञ्छिन्नसंशयम् = आत्मज्ञानविनष्टसन्देहम्, आत्मवन्तम् = आत्मनिष्ठम्, कर्माणि = यज्ञादीनि, न निबध्नन्ति = न लिम्पन्ति ।

**अन्वयः** – धनञ्जय ! योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् आत्मवन्तं कर्माणि न निबध्नन्ति ।

**आकाङ्क्षा** –

न निबध्नन्ति ।

**कानि** न निबध्नन्ति ? – **कर्माणि** न निबध्नन्ति ।

**कं** कर्माणि न निबध्नन्ति ? – **योगसन्न्यस्तकर्माणं** कर्माणि न निबध्नन्ति ।

योगसन्न्यस्तकर्माणं **पुनश्च कीदृशं** कर्माणि न निबध्नन्ति ?

– योगसन्न्यस्तकर्माणं **ज्ञानसञ्छिन्नसंशयं** कर्माणि न निबध्नन्ति ।

योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयं **पुनश्च कीदृशं** कर्माणि न निबध्नन्ति ?

– योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् **आत्मवन्तं** कर्माणि न निबध्नन्ति ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **धनञ्जय** ।

**तात्पर्यम्** – धनञ्जय ! यः सर्वाणि कर्माणि समत्वबुद्धियोगेन भगवदर्पितानि करोति, यस्य च संशयाः आत्मज्ञानप्राप्त्या नष्टाः सन्ति तं जितेन्द्रियं पुरुषं कर्माणि न लिम्पन्ति ।

**माध्वमतम्**–परमात्मनि सर्वकर्माणि समर्पयन् तत्त्वज्ञानी कर्मभिः न बध्यते ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) समासः** | योगसन्न्यस्तकर्माणम् | – योगेन सन्न्यस्तानि योगसन्न्यस्तानि – तृतीयातत्पुरुषः । |
| | | – योगसन्न्यस्तानि कर्माणि यस्य सः – बहुव्रीहिः । |
| | ज्ञानसञ्छिनसंशयम् | – ज्ञानेन सञ्छिन्नः ज्ञानसञ्छिन्नः – तृतीयातत्पुरुषः । |
| | | – ज्ञानसञ्छिन्नः संशयः यस्य सः, तम् – बहुव्रीहिः । |
| **(ख) कृदन्तः** | सन्न्यस्तः | – सम् + नि + अस् + क्त । (कर्मणि) |
| | सञ्छिन्नः | – सम् + छिद् + क्त । (कर्तरि) |
| **(ग) तद्धितान्तः** | आत्मवन्तम् | – आत्मा + मतुप्, तम् । आत्मा अस्य अस्मिन् वा अस्ति । |

**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥4.42॥**

**पदार्थः** – भारत = अर्जुन ! तस्मात् = ततः हेतोः, अज्ञानसम्भूतम् = अविवेकजनितम्, आत्मनः = स्वस्य, हृत्स्थम् = बुद्धिस्थितम्, एनम् = अमुम्, संशयम् = सन्देहम्, ज्ञानासिना = ज्ञानरूपेण खड्गेन, छित्त्वा = विदार्य, उत्तिष्ठ = उत्थितः भव, योगम् = कर्मयोगम्, आतिष्ठ = आचर ।

**अन्वयः** – भारत ! तस्मात् अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ । योगम् आतिष्ठ ।

**आकाङ्क्षा –**

**उत्तिष्ठ** ।

**किं** कृत्वा उत्तिष्ठ ? – **छित्त्वा** उत्तिष्ठ ।

**केन** छित्त्वा उत्तिष्ठ ? – **ज्ञानासिना** छित्त्वा उत्तिष्ठ ।

**कं** ज्ञानासिना छित्त्वा ? – **संशयं** ज्ञानासिना छित्त्वा उत्तिष्ठ ।

**कं** संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ? – **एनं** संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ।

**कुत्रत्यम्** एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ? – **हृत्स्थम्** एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ।

**कस्य** हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ?

– **आत्मनः** हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ।

**कीदृशम्** आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ?

– **अज्ञानसम्भूतम्** आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ।

**कस्मात्** अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ?

– **तस्मात्** अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ ।

तस्मात् अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ । **ततः किम्** ?

– तस्मात् अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ । **आतिष्ठ** ।

तस्मात् अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ । **कम्** आतिष्ठ ?

– तस्मात् अज्ञानसम्भूतम् आत्मनः हृत्स्थम् एनं संशयं ज्ञानासिना छित्त्वा उत्तिष्ठ । **योगम्** आतिष्ठ ।

अस्मिन् श्लोके सम्बोधनपदं किम् ? – **भारत** ।

**तात्पर्यम्** – हे भारत ! अतः अज्ञानेन समुत्पन्नं बुद्धिस्थितं संशयं ज्ञानरूपेण खड्गेन छित्त्वा निष्कामकर्म आचर । युद्धार्थं च सन्नद्धो भव ।

**व्याकरणम् –**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | छित्त्वैनम् | – छित्त्वा + एनम् | वृद्धिसन्धिः |
| | आतिष्ठोत्तिष्ठ | – आतिष्ठ + उत्तिष्ठ | गुणसन्धिः |
| | तस्मादज्ञानसम्भूतम् | – तस्मात् + अज्ञानसम्भूतम् | जश्त्वसन्धिः |
| **(ख) समासः** | अज्ञानसम्भूतम् | – अज्ञानात् सम्भूतः, तम् – पञ्चमीतत्पुरुषः । | |
| | ज्ञानासिना | – ज्ञानम् एव असिः, तेन – कर्मधारयः । | |
| **(ग) कृदन्तः** | छित्त्वा | – छिद् + क्त्वा । | |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानकर्मसन्न्यासयोगो नाम चतुर्थोऽध्यायः ।

## संस्कृताय भवन्तः कृपया अधोनिर्दिष्टेषु पञ्चविंशत्यां कार्येषु कानिचन पञ्च कार्याणि कुर्वन्तु

१. 'वदतु संस्कृतम्' इत्यस्य पुस्तकस्य पञ्च प्रतिकृतीः क्रीत्वा पञ्चभ्यः जनेभ्यः ददातु ।
२. 'पत्राचारद्वारा संस्कृतशिक्षणम्' इति योजनायां पञ्च शिक्षार्थिनः योजयतु ।
३. सम्भाषणसन्देशपत्रिकायाः पञ्च ग्राहकान् सङ्गृह्णातु ।
४. पञ्चभ्यः जनेभ्यः संस्कृतभारत्यै धनसहयोगराशिं सङ्गृह्य ददातु ।
५. संस्कृतभारत्याः पञ्च पुस्तकानि क्रेतुं पञ्च जनान् प्रेरयतु ।
६. पञ्चसु स्थानेषु सम्भाषणशिबिराणाम् आयोजने साहाय्यं करोतु ।
७. वर्षे पञ्च दिनानि संस्कृतप्रचारकार्याय ददातु ।
८. पञ्चविधानि प्रचारपत्रकाणि मुद्राप्य ददातु ।
९. पञ्च संश्लेषकान् कारयित्वा मुद्राप्य च ददातु ।
१०. पञ्च संस्कृतशुभाशयपत्राणि कारयित्वा / मुद्रयित्वा ददातु ।
११. पञ्चसु विद्यालयेषु संस्कृतच्छात्रेभ्यः दानाय पञ्च पुरस्कारान् ददातु ।
१२. Pride of India इत्यस्य पुस्तकस्य पञ्च प्रतिकृतीः क्रीणातु विक्रीणतां वा ।
१३. पञ्चसु मन्दिरेषु संस्कृतभारत्याः प्रचारफलकानि स्थापयतु ।
१४. पञ्चानां प्रभावि-प्रतिष्ठित-जनानां कृते संस्कृतभारत्याः परिचयं कारयतु ।
१५. प्रचारार्थं पञ्च वस्त्रफलकानि कारयित्वा ददातु ।
१६. पञ्चानां विद्यालयानां ग्रन्थालयेभ्यः संस्कृतभारत्याः पुस्तकानां गुच्छान् ददातु ।
१७. प्रतिदिनं पञ्च रूप्यकाणि संस्कृतप्रचारकार्याय दानरूपेण दानपात्रे स्थापयतु ।
१८. प्रतिदिनं पञ्चभिः जनैः सह किञ्चित् किञ्चित् संस्कृतसम्भाषणं करोतु ।
१९. पञ्च जनान् संस्कृतं पाठयतु ।
२०. प्रतिसप्ताहं पञ्च नूतनजनान् दूरभाषया सम्पर्क्य संस्कृतभारतीं परिचाययतु ।
२१. संस्कृतकार्ये सहयोगाय पञ्च संस्थाः प्रेरयतु ।
२२. संस्कृतकार्यविषये पञ्च लेखान् लिखतु ।
२३. पञ्चभ्यः जनेभ्यः संस्कृतविषये पत्राणि लिखतु ।
२४. पञ्चसु स्थानेषु संस्कृतविषये, संस्कृतभारत्याः विषये च भाषणं करोतु ।
२५. उपायनदानसमये पञ्चसु प्रसङ्गेषु संस्कृतपुस्तकानि ददातु ।

# सम्भाषणसन्देशः

(बहुवर्णरञ्जिता संस्कृतमासपत्रिका)

सरला भाषा । सुलभावगमनयोग्या ललिता शैली । कथा, विज्ञानं, भाषापाठनं, भाषाभ्यासः, राष्ट्रियचिन्तनं, शब्दसम्पत्तिः, सामयिकविचारः, आधुनिकाः वार्ताः इत्यादयः । अन्येऽपि बहवः लेखाः ।



रू. 300/- (खण्डद्वयस्य कृते)

ISBN 978-81-88276-39-8